यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ ९४८ ॥
इदं ममेति सर्वेषु दृश्यभावेष्वभावना ।
जाग्रज्जाग्रदिति प्राहुर्महान्तो ब्रह्मवित्तमाः ॥ ९४९ ॥
विदित्वा सच्चिदानंदे मयि दृश्यपरंपराम् ।
नामरूपपरित्यागो जाग्रत्स्वप्नः समीर्यते ॥ ९५० ॥
परिपूर्णचिदाकाशे मयि बोधात्मतां विना ।
न किंचिदन्यदस्तीति जाग्रत्सुप्तिः समीर्यते ॥ ९५१ ॥
मूलाज्ञानविनाशेन कारणाभासचेष्टितैः ।
बंधो न मेऽतिस्वल्पोऽपि स्वप्नजाग्रदितीर्यते ॥ ९५२ ॥
कारणाज्ञाननाशाद्यद्द्रष्टृदर्शनदृश्यता ।
न कार्यमस्ति तज्ज्ञानं स्वप्नस्वप्नः समीर्यते ॥ ९५३ ॥
अतिसूक्ष्मविमर्शेन स्वधीवृत्तिरचंचला ।
विलीयते यदा बोधे स्वप्नसुप्तिरितीर्यते ॥ ९५४ ॥
चिन्मयाकारमतयो धीवृत्तिप्रसरैर्गतः ।
आनंदानुभवो विद्वन् सुप्तिजाग्रादितीर्यते ॥ ९५५ ॥
वृत्तौ चिरानुभूतांतरानंदानुभवस्थितौ ।
समात्मतां यो यात्येष सुप्तिस्वप्न इतीर्यते ॥ ९५६ ॥
दृश्यधीवृत्तिरेतस्य केवलीभावभावना ।
परं बोधैकतावाप्तिः सुप्तिसुप्तिरितीर्यते ॥ ९५७ ॥
परब्रह्मवदाभाति निर्विकारैकरूपिणी ।
सर्वावस्थासु धारैका तुर्याख्या परिकीर्तिता ॥ ९५८ ॥
इत्यवस्थासमुल्लासं विमृशन्मुच्यते सुखी ।
शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतम् ॥ ९५९ ॥
यथावद्भेदबुद्ध्येदं जगज्जाग्रदितीर्यते ।
अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ॥ ९६० ॥

पश्यन्ति स्वप्नवल्लोकं तुर्यभूमिसुयोगतः ।
पंचमीं भूमिमारुह्य सुषुप्तिपदनामिकाम् ॥ ९६१ ॥
शांताशेषविशेषांशास्तिष्ठेदद्वैतमात्रके ।
अंतर्मुखतया नित्यं षष्ठीं भूमिमुपाश्रितः ॥ ९६२ ॥
परिश्रांततया गाढनिद्रालुरिव लक्ष्यते ।
कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ॥ ९६३ ॥
तुर्यावस्थां सप्तभूमिं क्रमात्प्राप्नोति योगिराट् ।
विदेहमुक्तिरेवात्र तुर्यातीतदशोच्यते ॥ ९६४ ॥
यत्र नासन्न सच्चापि नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्तेऽद्वैतेऽतिनिर्भयः ॥ ९६५ ॥
अंतःशून्यो बहिःशून्यः शून्यकुंभ इवांबरे ।
अंतःपूर्णो बहिःपूर्णः पूर्णकुंभ इवार्णवे ॥ ९६६ ॥
यथास्थितमिदं सर्वं व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ ९६७ ॥
नोदेति नास्तमायाति सुखदुःखे मनःप्रभा ।
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ९६८ ॥
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ९६९ ॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योंऽतर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ ९७० ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ९७१ ॥
यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ ९७२ ॥
द्वैतवर्जितचिन्मात्रे पदे परमपावने ।

अक्षुब्धचित्तविश्रान्तः स जीवन्मुक्त उच्यते ॥ ९७३ ॥
इदं जगदयं सोऽयं दृश्यजातमवास्तवम् ।
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ ९७४ ॥
चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ।
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥ ९७५ ॥
देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ।
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥ ९७६ ॥
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ।
परमानंदपूर्णो यः स जीवन्मुक्त उच्यते ॥ ९७७ ॥
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ।
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ॥ ९७८ ॥
जीवन्मुक्तिपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तित्वं पवनोऽस्पंदतामिव ॥ ९७९ ॥
ततस्तत्संबभूवासौ यद्गिरामप्यगोचरम् ।
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ॥ ९८० ॥
विज्ञानं विज्ञानविदां मलानां च मलात्मकम् ।
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ ९८१ ॥
शिवः शैवागमस्थानां कालः कालैकवादिनाम् ।
यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ।
यत्सर्वं सर्वगं वस्तु तत्तत्त्वं तदसौ स्थितः ॥ ९८२ ॥
ब्रह्मैवाहं चिदेवाहमेवं वापि न चिंत्यते ।
चिन्मात्रेव यस्तिष्ठेद्विदेहो मुक्त एव सः ॥ ९८३ ॥
यस्य प्रपंचभानं न ब्रह्माकारमपीह न ।
अतीतातीतभावो यो विदेहो मुक्त एव सः ॥ ९८४ ॥
चित्तवृत्तेरतीतो यश्चित्तवृत्त्यावभासकः ।

चित्तवृत्तिविहीनो यो विदेहो मुक्त एव सः ॥ ९८५ ॥
जीवात्मेति परात्मेति सर्वचिंताविवर्जितः ।
सर्वसंकल्पहीनात्मा विदेहो मुक्त एव सः ॥ ९८६ ॥
ओंकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ।
अवस्थात्रयहीनात्मा विदेहो मुक्त एव सः ॥ ९८७ ॥
अहिनिर्ल्वयनीसर्पनिर्मोको जीववर्जितः ।
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥९८८॥
एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ।
प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥९८९॥
नेति नेतीत्यरूपःवादशरीरो भवत्ययम् ।
विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयम् ॥९९०॥
विराड् हिरण्यगर्भश्चेश्वरश्चेति च ते त्रयम् ।
ब्रह्मांडं चैव पिंडांडं लोका भूरादयः क्रमात् ॥९९१॥
स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ।
तूष्णीमेव ततस्तूष्णीं तूष्णीं सत्यं न किंचन ॥९९२॥
कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ।
किंचिद्भेदं न तस्यास्ति किंचिद्वापि न विद्यते ॥९९३॥
जीवेश्वरेति वाक्ये च वेदशास्त्रेष्वहं त्विति ।
इदं चैतन्यमेवेत्यहं चैतन्यमित्यपि ॥९९४॥
इति निश्चयशून्यो यो विदेहो मुक्त एव सः ।
ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ॥९९५॥
तद्विद्या विषयं ब्रह्म सत्यज्ञानसुखात्मकम् ।
शान्तं च तदतीतं च परं ब्रह्म तदुच्यते ॥९९६॥
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शांतं ब्रह्मैव तद्विना ॥९९७॥

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥९९८॥
यावद्यावच्च सद्बुद्धे स्वयं संत्यज्यतेऽखिलम् ।
तावत्तावत्परानंदः परमात्मैव शिष्यते ॥९९९॥
यत्र यत्र मृतो ज्ञानी परमाक्षरवित्सदा ।
परे ब्रह्मणि लीयेत न तस्योत्क्रांतिरिष्यते ॥ १००० ॥
यद्यत्स्वाभिमतं वस्तु तत्त्यजन्मोक्षमश्नुते ।
असंकल्पेन शस्त्रेण छिन्नं चित्तमिदं यदा ॥१००१॥
सर्वं सर्वगतं शांतं ब्रह्म संपद्यते तदा ।
इति श्रुत्वा गुरोर्वाक्यं शिष्यस्तु छिन्नसंशयः ॥१००२॥
ज्ञातज्ञेयः संप्रणम्य सद्गुरोश्चरणांबुजम् ।
स तेन समनुज्ञातो ययौ निर्मुक्तबंधनः ॥१००३॥
गुरुरेष सदानंदसिंधौ निर्मग्नमानसः ।
पावयन्वसुधां सर्वां विचचार निरुत्तरः ॥१००४॥
इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् ।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥१००५॥
सर्ववेदांतसिद्धांतसारसंग्रहनामकः ।
ग्रंथोऽयं हृदयग्रंथिविच्छित्त्यै रचितः सताम् ॥१००६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ सर्ववेदान्तसिद्धान्तसारसंग्रहः संपूर्णः ॥

———

## ॥ विवेकचूडामणिः ॥



सर्ववेदांतसिद्धांतगोचरं तमगोचरम् ।
गोविंदं परमानंदं सद्गुरुं प्रणतोऽस्म्यहम् ॥ १ ॥
जंतूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति-
र्मुक्तिर्नो शतजन्मकोटिसुकृतैः पुण्यैर्विना लभ्यते ॥ २ ॥
दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥ ३॥
लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यस्त्वात्ममुक्तो न यतेत मूढधीः
स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥ ४ ॥
इतः कोऽन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥ ५ ॥
वदन्तु शास्त्राणि यजन्तु देवान्कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैक्यबोधेन विनापि मुक्तिर्न सिध्यति ब्रह्मशतान्तरेऽपि ॥६॥
अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥ ७ ॥
अतो विमुक्त्यै प्रयतेत विद्वान्संन्यस्तबाह्यार्थसुखस्पृहः सन् ।
संतं महांतं समुपेत्य देशिकं तेनोपदिष्टार्थसमाहितात्मा ॥ ८ ॥
उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥ ९ ॥
संन्यस्य सर्वकर्माणि भवबंधविमुक्तये ।
यत्यतां पंडितैर्धीरैरात्माभ्यास उपस्थितैः ॥ १० ॥

चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभिः ॥११॥
सम्यग्विचारतः सिद्धा रज्जुतत्त्वावधारणा ।
भ्रांतोदितमहासर्प–भयदुःखविनाशिनी ॥१२॥
अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥१३॥
अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः ।
उपाया देशकालाद्याः संत्यस्मिन्सहकारिणः ॥१४॥
अतो विचारः कर्तव्यो जिज्ञासोरात्मवस्तुतः ।
समासाद्य दयासिंधुं गुरुं ब्रह्मविदुत्तमम् ॥१५॥
मेधावी पुरुषो विद्वानूहापोहविचक्षणः ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥१६॥
विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥१७॥
साधनान्यत्र चत्वारि कथितानि मनीषिभिः ।
येषु यत्स्वेव सन्निष्ठा यदभावे न सिध्यति ॥१८॥
आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ।
इहामुत्रफलभोगविरागस्तदनंतरम् ॥१९॥
शमादिषट्कसंपत्तिर्मुमुक्षुत्वमिति स्फुटम् ।
ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः ॥२०॥
सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः ।
तद्वैराग्यं जिहासा या दर्शनश्रवणादिभिः ॥२१॥
देहादिब्रह्मपर्यंते ह्यनित्ये भोगवस्तुनि ।
विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहुः ॥२२॥
स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ।

विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके ॥२३॥
उभयेषामिंद्रियाणां स दमः परिकीर्तितः ।
बाह्यानालंबनं वृत्तेरेषोपरतिरुत्तमा ॥२४॥
सहनं सर्वदुःखानामप्रतीकारपूर्वकम् ।
चिंताविलापरहितं सा तितिक्षा निगद्यते ॥२५॥
शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम् ।
सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ॥२६॥
सर्वदा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा ।
तत्समाधानमित्युक्तं न तु चित्तस्य लालनम् ॥२७॥
अहंकारादिदेहांतान्बंधानज्ञानकल्पितान् ।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥२८॥
मंदमध्यमरूपापि वैराग्येण शमादिना ।
प्रसादेन गुरोः सेयं प्रवृद्धा सूयते फलम् ॥२९॥
वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते ।
तस्मिन्नेवार्थवन्तः स्युः फलवंतः शमादयः ॥३०॥
एतयोर्मंदता यत्र विरक्तत्वमुमुक्षयोः ।
मरौ सलिलवत्तत्र शमादेर्भासमात्रता ॥३१॥
मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ।
स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते ॥३२॥
स्वात्मतत्त्वानुसंधानं भक्तिरित्यपरे जगुः ।
उक्तसाधनसंपन्नस्तत्त्वजिज्ञासुरात्मनः ॥३३॥
उपसीदेद्गुरुं प्राज्ञं यस्माद्बंधविमोक्षणम् ।
श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तमः ॥३४॥
ब्रह्मण्युपरतः शांतो निरिंधन इवानलः ।
अहेतुकदयासिंधुर्बंधुरानमतां सताम् ॥३५॥

तमाराध्य गुरुं भक्त्या प्रह्वप्रश्रयसेवनैः ।
प्रसन्नं तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मनः ॥३६॥
स्वामिन्नमस्ते नतलोकबंधो कारुण्यसिंधो पतितं भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या ऋज्व्यातिकारुण्यसुधाभिवृष्ट्या ॥३७॥
दुर्वारसंसारदवाग्नितप्तं दोधूयमानं दुरदृष्टवातैः ।
भीतं प्रपन्नं परिपाहि मृत्योः शरण्यमन्यद्यदहं न जाने ॥३८॥
शांता महांतो निवसंति संतो वसंतवल्लोकहितं चरंतः ।
तीर्णाः स्वयं भीमभवार्णवं जना न हेतुनान्यानपि तारयन्तः ॥३९॥
अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् ।
सुधांशुरेष स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥४०॥
ब्रह्मानंदरसानुभूतिकलितैः पूतैः सुशीतैर्युतै-
र्युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैर्वाक्यामृतैः सेचय ।
संतप्तं भवतापदावदहनज्वालाभिरेनं प्रभो
धन्यास्ते भवदीक्षणक्षणगतेः पात्रीकृताः स्वीकृताः ॥४१॥
कथं तरेयं भवसिंधुमेतं का वा गतिर्मे कतमोऽस्त्युपायः ।
जाने न किंचित्कृपयाव मां प्रभो संसारदुःखक्षतिमातनुष्व ॥४२॥
तथा वदंतं शरणागतं स्वं संसारदावानलतापतप्तम् ।
निरीक्ष्य कारुण्यरसार्द्रदृष्ट्या दद्यादभीतिं सहसा महात्मा ॥४३॥
विद्वान्स तस्मा उपसत्तिमीयुषे मुमुक्षवे साधु यथोक्तकारिणे ।
प्रशांतचित्ताय शमान्विताय तत्त्वोपदेशं कृपयैव कुर्यात् ॥४४॥

श्रीगुरुरुवाच —

मा भैष्ट विद्वंस्तव नास्त्यपायः संसारसिंधोस्तरणेऽस्त्युपायः ।
येनैव याता यतयोऽस्य पारं तमेव मार्गं तव निर्दिशामि ॥४५॥
अस्त्युपायो महान्कश्चित्संसारभयनाशनः ।
तेन तीर्त्वा भवांभोधिं परमानंदमाप्स्यसि ॥४६॥

वेदांतार्थविचारेण जायते ज्ञानमुत्तमम् !
तेनात्यंतिकसंसारदुःखनाशो भवत्यनु ॥४७॥
श्रद्धाभक्तिध्यानयोगान्मुमुक्षोर्मुक्तेर्हेतून्वक्ति साक्षाच्छ्रुतेर्गीः ।
यो वा एतेष्वेव तिष्ठत्यमुष्य गोक्षोऽविद्याकल्पिताद्देहबंधात् ॥४८॥
अज्ञानयोगात्परमात्मनस्तव ह्यनात्मबंधस्तव एव संसृतिः ।
तयोर्विवेकोदितबोधवह्निरज्ञानकार्यं प्रदहेत्समूलम् ॥४९॥

शिष्य उवाच—

कृपया श्रूयतां स्वामिन् प्रश्नोऽयं क्रियते मया ।
तदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवन्मुखात् ॥५०॥
को नाम बंधः कथमेष आगतः कथं प्रतिष्ठास्य कथं विमोक्षः ।
कोऽसावनात्मा परमः स्व आत्मा तयोर्विवेकः कथमेतदुच्यताम् ॥५१॥

श्रीगुरुरुवाच —

धन्योऽसि कृतकृत्योऽसि पावितं ते कुलं त्वया ।
यदविद्याबंधमुक्त्या ब्रह्मीभवितुमिच्छसि ॥५२॥
ऋणमोचनकर्तारः पितुः संति सुतादयः ।
बंधमोचनकर्ता तु स्वस्मादन्यो न कश्चन ॥५३॥
मस्तकन्यस्तभारादेर्दुःखमन्यैर्निवार्यते ।
क्षुधादिकृतदुःखं तु विना स्वेन न केनचित् ॥५४॥
पथ्यमौषधसेवा च क्रियते येन रोगिणा ।
आरोग्यसिद्धिर्दृष्टास्य नान्यानुष्ठितकर्मणा ॥५५॥
वस्तुस्वरूपं स्फुटबोधचक्षुषा स्वेनैव वेद्यं न तु पंडितेन ।
चंद्रस्वरूपं निजचक्षुषैव ज्ञातव्यमन्यैरवगम्यते किम् ॥५६॥
अविद्याकामकर्मादिपाशबंधं विमोचितुम् ।
कः शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥५७॥
न योगेन न सांख्येन कर्मणा नो न विद्यया ।

ब्रह्मात्मैकत्वबोधेन मोक्षः सिध्यति नान्यथा ॥५८॥
वीणाया रूपसौंदर्यं तंत्रीवादनसौष्ठवम् ।
प्रजारंजनमात्रं तन्न साम्राज्याय कल्पते ॥५९॥
वाग्वैखरी शब्दझरी शास्त्रव्याख्यातकौशलम् ।
वैदुष्यं विदुषां तद्वद्भुक्तये न तु मुक्तये ॥६०॥
अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला ।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला ॥६१॥
शब्दजालं महारण्यं चित्तभ्रमणकारणम् ।
अतः प्रयत्नाज्ज्ञातव्यं तत्वज्ञात्तत्त्वमात्मनः ॥६२॥
अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना ।
किमु वेदैश्च शास्त्रैश्च किमु मंत्रैः किमौषधैः ॥६३॥
न गच्छति विना पानं व्याधिरौषधशब्दतः ।
विनापरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥६४॥
अकृत्वा दृश्यविलयमज्ञात्वा तत्त्वमात्मनः ।
बाह्यशब्दैः कुतो मुक्तिरुक्तिमात्रफलैर्नृणाम् ॥ ६५ ॥
अकृत्वा शत्रुसंहारमगत्वाखिलभूश्रियम् ।
राजाहमिति शब्दान्नो राजा भवितुमर्हति ॥ ६६ ॥
आप्तोक्तिं खननं तथोपरि शिलाद्युत्कर्षणं स्वीकृतिं
निक्षेपः समपेक्षते नहि बहिः शब्दैस्तु निर्गच्छति ॥
तद्वत् ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते
मायाकार्यतिरोहितं स्वममलं तत्त्वं न दुर्युक्तिभिः ॥ ६७ ॥
तस्मात्सर्वप्रयत्नेन भवबंधविमुक्तये ।
स्वैरेव यत्नः कर्तव्यो रोगादाविव पंडितैः ॥ ६८ ॥
यस्त्वयाद्य कृतः प्रश्नो वरीयाञ्छास्त्रविन्मतः ।
सूत्रप्रायो निगूढार्थो ज्ञातव्यश्च मुमुक्षुभिः ॥ ६९ ॥

शृणुष्वावहितो विद्वन्यन्मया समुदीर्यते ।
तदेतच्छ्रवणात्सत्यं भवबंधाद्विमोक्ष्यसे ॥ ७० ॥
मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यंतमनित्यवस्तुषु ।
ततः शमश्चापि दमस्तितिक्षा न्यासः प्रसक्ताखिलकर्मणां भृशम् ॥७१॥
ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं नित्यनिरंतरं मुनेः ।
ततोऽविकल्पं परमेत्य विद्वानिहैव निर्वाणसुखं समृच्छति ॥ ७२ ॥
यद्बोद्धव्यं तवेदानीमात्मानात्मविवेचनम् ।
तदुच्यते मया सम्यक् श्रुत्वात्मन्यवधारय ॥ ७३ ॥
मज्जास्थिमेदःपलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम् ।
पादोरुवक्षोभुजपृष्ठमस्तकैरंगैरुपांगैरुपयुक्तमेतत् ॥ ७४ ॥
अहंममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः ।
नभोनभस्वद्दहनांबुभूमयः सूक्ष्माणि भूतानि भवंति तानि ॥ ७५ ॥
परस्परांशैर्मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः ।
मंत्रास्तदीया विषया भवन्ति शब्दादयः पंच सुखाय भोक्तुः ॥७६॥
य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन ।
आयांति निर्यांत्यध ऊर्ध्वमुच्चैः स्वकर्मदूतेन जवेन नीताः ॥ ७७ ॥
शब्दादिभिः पंचभिरेव पंच पंचत्वमापुः स्वगुणेन बद्धाः
कुरंगमातंगपतंगमीनभृंगा नरः पंचभिरंचितः किम् ॥ ७८ ॥
दोषेण तीव्रो विषयः कृष्णसर्पविषादपि ।
विषं निहंति भोक्तारं द्रष्टारं चक्षुषाप्ययम् ॥ ७९ ॥
विषयाशामहापाशाद्यो विमुक्तः सुदुस्त्यजात् ।
स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि ॥ ८० ॥
आपातवैराग्यवतो मुमुक्षून् भवाब्धिपारं प्रतियातुमुद्यतान् ।
आशाग्रहो मज्जयतेऽन्तराले निगृह्य कंठे विनिवर्त्य वेगात् ॥ ८१ ॥
विषयाशाग्रहो येन सुविरक्त्यसिना हतः ।

स गच्छति भवांभोधेः पारं प्रत्यूहवर्जितः ॥ ८२ ॥

विषमविषयमार्गैर्गच्छतोऽनच्छबुद्धेः
प्रतिपदमभियातो मृत्युरप्येष विद्धि ।
हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या
प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ॥ ८३ ॥

मोक्षस्य कांक्षा यदि वै तवास्ति त्यजातिदूराद्विषयान्विषं यथा ।
पीयूषवत्तोषदयाक्षमार्जवप्रशांतिदान्तीर्भज नित्यमादरात् ॥ ८४ ॥

अनुक्षणं यत्परिहृत्य कृत्यमनाद्यविद्याकृतबंधमोक्षणम् ।
देहः परार्थोऽयममुष्य पोषणे यः सज्यते स स्वमनेन हंति ॥ ८५ ॥

शरीरपोषणार्थी सन् य आत्मानं दिदृक्षति ।
ग्राहं दारुधिया धृत्वा नदीं तर्तुं स गच्छति ॥ ८६ ॥

मोह एव महामृत्युर्मुमुक्षोर्वपुरादिषु ।
मोहो विनिर्जितो येन स मुक्तिपदमर्हति ॥ ८७ ॥

मोहं जहि महामृत्युं देहदारसुतादिषु ।
यं जित्वा मुनयो यांति तद्विष्णोः परमं पदम् ॥ ८८ ॥

त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंकुलम् ।
पूर्णं मूत्रपुरीषाभ्यां स्थूलं निंद्यमिदं वपुः ॥ ८९ ॥

पंचीकृतेभ्यो भूतेभ्यः स्थूलेभ्यः पूर्वकर्मणा ।
समुत्पन्नमिदं स्थूलं भोगायतनमात्मनः ।
अवस्था जागरस्तस्य स्थूलार्थानुभवो यतः ॥ ९० ॥

बाह्येंद्रियैः स्थूलपदार्थसेवां स्रक्चंदनस्त्र्यादिविचित्ररूपाम् ।
करोति जीवः स्वयमेतदात्मना तस्मात्प्रशस्तिर्वपुषोऽस्य जागरे ॥९१॥

सर्वोऽपि बाह्यसंसारः पुरुषस्य यदाश्रयः ।
विद्धि देहमिदं स्थूलं गृहवद् गृहमेधिनः ॥ ९२ ॥

स्थूलस्य संभवजरामरणानि धर्माः

स्थौल्यादयो बहुविधाः शिशुताद्यवस्थाः।
वर्णाश्रमादिनियमा बहुधामयाः स्युः
पूजावमानबहुमानमुखा विशेषाः ॥ ९३ ॥
बुद्धींद्रियाणि श्रवणं त्वगक्षि घ्राणं च जिह्वा विषयावबोधनात्।
वाक्पाणिपादं गुदमप्युपस्थः कर्मेंद्रियाणि प्रवणेन कर्मसु ॥ ९४ ॥
निगद्यतेऽन्तःकरणं मनोधीरहंकृतिश्चित्तमिति स्ववृत्तिभिः।
अत्राभिमानादहमित्यहंकृतिः स्वार्थानुसंधानगुणेन चित्तम् ॥ ९६ ॥
प्राणापानव्यानोदानसमाना भवत्यसौ प्राणः।
स्वयमेव वृत्तिभेदाद्विकृतिभेदात्सुवर्णसलिलवत् ॥ ९७ ॥
वागादि पंच श्रवणादि पंच प्राणादि पंचाभ्रमुखानि पंच।
बुद्ध्याद्यविद्यापि च कामकर्मणी पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥ ९८ ॥
इदं शरीरं शृणु सूक्ष्मसंज्ञितं लिंगं त्वपंचीकृतभूतसंभवम्।
सवासनं कर्मफलानुभावकं स्वाज्ञानतोऽनादिरुपाधिरात्मनः ॥ ९९ ॥
स्वप्नो भवत्यस्य विभक्त्यवस्था स्वमात्रशेषेण विभाति यत्र।
स्वप्ने तु बुद्धिः स्वयमेव जाग्रत्कालीननानाविधवासनाभिः ॥ १००॥
कर्त्रादिभावं प्रतिपद्य राजते यत्र स्वयं भाति ह्ययं परात्मा।
धीमात्रकोपाधिरशेषसाक्षी न लिप्यते तत्कृतकर्मलेशैः।
यस्मादसंगस्तत एव कर्मभिर्न लिप्यते किंचिदुपाधिना कृतैः ॥१०१॥
सर्वव्यापृतिकरणं लिंगमिदं स्याच्चिदात्मनः पुंसः।
वास्यादिकमिव तक्षणस्तेनैवात्मा भवत्यसंगोऽयम् ॥ १०२ ॥
अंधत्वमंदत्वपटुत्वधर्माः सौगुण्यवैगुण्यवशाद्धि चक्षुषः।
बाधिर्यमूकत्वमुखास्तथैव श्रोत्रादिधर्मा न तु वेत्तुरात्मनः ॥ १०३ ॥
उच्छ्वासनिःश्वासविजृंभणक्षुत्प्रस्यन्दनाद्युत्क्रमणादिकाः क्रियाः ॥
प्राणादिकर्माणि वदन्ति तज्ज्ञाः प्राणस्य धर्मावशनापिपासे ॥ १०४॥
अंतःकरणमेतेषु चक्षुरादिषु वर्ष्माणि।

अहमित्यभिमानेन तिष्ठत्याभासतेजसा ॥ १०५ ॥
अहंकारः स विज्ञेयः कर्ता भोक्ताभिमान्ययम् ।
सत्त्वादिगुणयोगेन चावस्थात्रयमश्नुते ॥ १०६ ॥
विषयाणामानुकूल्ये सुखी दुःखी विपर्यये ।
सुखं दुःखं च तद्धर्मः सदानंदस्य नात्मनः ॥ १०७ ॥
आत्मार्थत्वेन हि प्रेयान्विषयो न स्वतः प्रियः ।
स्वत एव हि सर्वेषामात्मा प्रियतमो यतः ॥ १०८ ॥
तत आत्मा सदानंदो नास्य दुःखं कदाचन ।
यत्सुषुप्तौ निर्विषय आत्मानंदोऽनुभूयते ।
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं च जाग्रति ॥ १०९ ॥
अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मका परा ।
कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ॥ ११० ॥
सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो ।
सांगाप्यनंगा ह्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा ॥१११॥
शुद्धद्वयब्रह्मविबोधनाश्या सर्पभ्रमो रज्जुविवेकतो यथा ।
रजस्तमःसत्त्वमिति प्रसिद्धा गुणास्तदीयाः प्रथितैः स्वकार्यैः ॥११२॥
विक्षेपशक्ती रजसः क्रियात्मिका यतः प्रवृत्तिः प्रसृता पुराणी ।
रागादयोऽस्याः प्रभवन्ति नित्यं दुःखादयो ये मनसो विकाराः ११३
कामः क्रोधो लोभदंभाद्यसूयाहंकारेर्ष्यामत्सराद्यास्तु घोराः ।
धर्मा एते राजसाः पुंप्रवृत्तिर्यस्मादेषा तद्रजो बंधहेतुः ॥ ११४ ॥
एषावृत्तिर्नाम तमोगुणस्य शक्तिर्ययाधस्त्ववभासतेऽन्यथा ।
सैषा निदानं पुरुषस्य संसृतेर्विक्षेपशक्तेः प्रणवस्य हेतुः ॥ ११५ ॥
प्रज्ञावानपि पंडितोऽपि चतुरोऽप्यत्यंतसूक्ष्मात्मदृग्
व्यालीढस्तमसा न वेत्ति बहुधा संबोधितोऽपि स्फुटम् ।
भ्रान्त्यारोपितमेव साधु कलयत्यालंबते तद्गुणान् ।

हंतासौ प्रबला दुरंततमसः शक्तिर्महत्यावृतिः ॥ ११६ ॥
अभावना वा विपरीतभावना संभावना विप्रतिपत्तिरस्याः ।
संसर्गयुक्तं न विमुंचति ध्रुवं विक्षेपशक्तिः क्षपयत्यजस्रम् ॥ ११७ ॥
अज्ञानमालस्यजडत्वनिद्राप्रमादमूढत्वमुखास्तमोगुणाः ।
एतैः प्रयुक्तो नहि वेत्ति किंचिन्निद्रालुवत्स्तंभवदेव तिष्ठति ॥ ११८ ॥
सत्त्वं विशुद्धं जलवत्तथापि ताभ्यां मिलित्वा शरणाय कल्पते ।
यत्रात्मबिंबः प्रतिबिंबितः सन्प्रकाशयत्यर्क इवाखिलं जडम् ॥११९॥
मिश्रस्य सत्त्वस्य भवंति धर्मास्त्वमानिताद्या नियमा यमाद्याः ।
श्रद्धा च भक्तिश्च मुमुक्षुता च दैवी च संपत्तिरसन्निवृत्तिः ॥ १२० ॥
विशुद्धसत्त्वस्य गुणाः प्रसादः स्वात्मानुभूतिः परमा प्रशांतिः ।
तृप्तिः प्रहर्षः परमात्मनिष्ठा यया सदानंदरसं समृच्छति ॥ १२१ ॥
अव्यक्तमेतत्त्रिगुणैर्नियुक्तं तत्कारणं नाम शरीरमात्मनः ।
सुषुप्तिरेतस्य विभक्त्यवस्था प्रलीनसर्वेंद्रियबुद्धिवृत्तिः ॥ १२२ ॥
सर्वप्रकारप्रमितिप्रशान्तिबीजात्मनावस्थितिरेव बुद्धेः ।
सुषुप्तिरेतस्य किल प्रतीतिः किंचिन्न वेद्मीति जगत्प्रसिद्धेः ॥१२३॥
देहेंद्रियप्राणमनोऽहमादयः सर्वे विकारा विषयाः सुखादयः ।
व्योमादिभूतान्यखिलं च विश्वमव्यक्तपर्यंतमिदं ह्यनात्मा ॥ १२४

माया मायाकार्यं सर्वं महदादि देहपर्यंतम् ।
असदिदमनात्मकं त्वं विद्धि मरुमरीचिकाकल्पम् ॥ १२५ ॥
अथ ते संप्रवक्ष्यामि स्वरूपं परमात्मनः ।
यद्विज्ञाय नरो बंधान्मुक्तः कैवल्यमश्नुते ॥ १२६ ॥
अस्ति कश्चित्स्वयं नित्यमहंप्रत्ययलंबनः ।
अवस्थात्रयसाक्षी स पंचकोशविलक्षणः ॥ १२७ ॥
यो विजानाति सकलं जाग्रत्स्वप्नसुषुप्तिषु ।
बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् ॥ १२८ ॥

यः पश्यति स्वयं सर्वं यं न पश्यति कश्चन ।
यश्चेतयति बुद्ध्यादि न तद्यं चेतयत्ययम् ॥ १२९ ॥
येन विश्वमिदं व्याप्तं यन्न व्याप्नोति किंचन ।
आभारूपमिदं सर्वं यं भांतमनुभात्ययम् ॥ १३० ॥
यस्य संनिधिमात्रेण देहेंद्रियमनोधियः ।
विषयेषु स्वकीयेषु वर्तंते प्रेरिता इव ॥ १३१ ॥
अहंकारादिदेहांता विषयाश्च सुखादयः ।
वेद्यंते घटवद्येन नित्यबोधस्वरूपिणा ॥ १३२ ॥
एषोऽतरात्मा पुरुषः पुराणो निरंतराखंडसुखानुभूतिः ।
सदैकरूपः प्रतिबोधमात्रो येनेषिता वागसवश्चरंति ॥ १३३ ॥
अत्रैव सत्त्वात्मनि धीगुहायामव्याकृताकाश उशत्प्रकाशः ।
आकाश उच्चै रविवत्प्रकाशते स्वतेजसा विश्वमिदं प्रकाशयन् १३४
ज्ञाता मनोऽहंकृतिविक्रियाणां देहेंद्रियप्राणकृतक्रियाणाम् ।
अयोऽग्निवत्ताननुवर्तमानो न चेष्टते नो विकरोति किंचन ॥ १३५ ॥
न जायते नो म्रियते न वर्धते न क्षीयते नो विकरोति नित्यः ।
विलीयमानेऽपि वपुष्यमुष्मिन्न लीयते कुंभ इवांबरं स्वयम् ॥ १३६ ॥
प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः
सदसदिदमशेषं भासयन्निर्विशेषः ।
विलसति परमात्मा जाग्रदादिष्ववस्था-
स्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥ १३७ ॥
नियमितमनसामुं त्वं स्वमात्मानमात्म-
न्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात् ।
जनिमरणतरंगापारसंसारसिंधुं
प्रतर भव कृतार्थो ब्रह्मरूपेण संस्थः ॥ १३८ ॥
अत्रानात्मन्यहमिति मतिर्बंध एषोऽस्य पुंसः

प्राप्तोऽज्ञानाज्जननमरणक्लेशसंपातहेतुः ।
येनैवायं वपुरिदमसत्सत्यमित्यात्मबुद्ध्या
पुष्यत्युक्षत्यवति विषयैस्तंतुभिः कोशकृद्वत् ॥ १३९ ॥
अतस्मिंस्तद्बुद्धिः प्रभवति विमूढस्य तमसा
विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा ।
ततोऽनर्थव्रातो निपतति समादातुरधिक-
स्ततो योऽसद्ग्राहः स हि भवति बंधः शृणु सखे ॥ १४० ॥
अखंडनित्याद्वयबोधशक्त्या स्फुरंतमात्मानमनंतवैभवम् ।
समावृणोत्यावृतिशक्तिरेषा तमोमयी राहुरिवार्कबिंबम् ॥ १४१ ॥
तिरोभूते स्वात्मन्यमलतरतेजोवति पुमा-
ननात्मानं मोहादहमिति शरीरं कलयति ।
ततः कामक्रोधप्रभृतिभिरमुं बंधनगुणैः
परं विक्षेपाख्या रजस उरुशक्तिर्व्यथयति ॥ १४२ ॥
महामोहग्राहग्रसनगलितात्मावगमनो ।
धियो नानावस्थां स्वयमभिनयंस्तद्गुणतया ॥
अपारे संसारे विषयविषपूरे जलनिधौ ।
निमज्योन्मज्यायं भ्रमति कुमतिः कुत्सिततगतिः ॥ १४३ ॥
भानुप्रभासंजनिताभ्रपंक्तिर्भानुं तिरोधाय विजृंभते यथा ।
आत्मोदिताहंकृतिरात्मतत्त्वं तथा तिरोधाय विजृंभते स्वयम् ॥१४४॥
कवलितदिननाथे दुर्दिने सांद्रमेघै-
र्व्यथयति हिमझंझावायुरुग्रो यथैतान् ।
अविरततमसात्मन्यावृते मूढबुद्धिं
क्षपयति बहुदुःखैस्तीव्रविक्षेपशक्तिः ॥ १४५ ॥
एताभ्यामेव शक्तिभ्यां बंधः पुंसः समागतः ।
याभ्यां विमोहितो देहं मत्वात्मानं भवत्ययम् ॥ १४६ ॥

बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरंकुरो
राग: पल्लवमंबु कर्म तु वपुः स्कंधोऽसवः शाखिकाः ।
अग्राणींद्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलं
नानाकर्मसमुद्भवं बहुविधं भोक्तात्र जीवः खगः ॥ १४७ ॥
अज्ञानमूलोऽयमनात्मबंधो नैसर्गिकोऽनादिरनंत ईरितः ।
जन्माप्ययव्याधिजरादिदुःखप्रवाहपातं जनयत्यमुष्य ॥ १४८ ॥
नास्त्रैर्न शस्त्रैरनिलेन वह्निना छेत्तुं न शक्यो न च कर्मकोटिभिः ।
विवेकविज्ञानमहासिना विना धातुः प्रसादेन सितेन मंजुना ॥ १४९ ॥
श्रुतिप्रमाणैकमतेः स्वधर्मनिष्ठा तयैवात्मविशुद्धिरस्य ।
विशुद्धबुद्धेः परमात्मवेदनं तेनैव संसारसमूलनाशः ॥ १५० ॥
कोशैरन्नमयाद्यैः पंचभिरात्मा न संवृतो भाति ।
निजशक्तिसमुत्पन्नैः शैवलपटलैरिवांबु वापिस्थम् ॥ १५१ ॥
तच्छैवालापनये सम्यक् सलिलं प्रतीयते शुद्धम् ।
तृष्णासंतापहरं सद्यः सौख्यप्रदं परं पुंसः ॥ १५२ ॥
पंचानामपि कोशानामपवादे विभात्ययं शुद्धः ।
नित्यानंदैकरसः प्रत्यग्रूपः परं स्वयं ज्योतिः ॥ १५३ ॥
आत्मानात्मविवेकः कर्तव्यो बंधमुक्तये विदुषा ।
तेनैवानंदी भवति स्वं विज्ञाय सच्चिदानंदम् ॥ १५४ ॥
मुंजादिषीकामिव दृश्यवर्गात्प्रत्यंचमात्मानमसंगमक्रियम् ।
विविच्य तत्र प्रविलाप्य सर्वं तदात्मना तिष्ठति यः स मुक्तः॥१५५॥
देहोऽयमन्नभवनोऽन्नमयस्तु कोश-
श्चान्नेन जीवति विनश्यति तद्विहीनः ।
त्वक्चर्ममांसरुधिरास्थिपुरीषराशि-
र्नायं स्वयं भवितुमर्हति नित्यशुद्धः ॥ १५६ ॥
पूर्वं जनेरपि मृतेरपि नायमस्ति

जातः क्षणं क्षणगुणोऽनियतस्वभावः ।
नैको जडश्च घटवत्परिदृश्यमानः
स्वात्मा कथं भवति भावविकारवेत्ता ॥ १५७ ॥
पाणिपादादिमान्देहो नात्मा व्यंगेऽपि जीवनात् ।
तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः ॥ १५८ ॥
देहतद्धर्मतत्कर्मतदवस्थादिसाक्षिणः ।
स्वत एव स्वतः सिद्धं तद्वैलक्षण्यमात्मनः ॥ १५९ ॥
कुल्यराशिर्मांसलिप्तो मलपूर्णोऽतिकश्मलः ।
कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः ॥ १६० ॥
त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति ।
विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् ॥१६१॥
देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवे विदुषस्त्वहंधीः ।
विवेकविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्मनि ॥ १६२ ॥
अत्रात्मबुद्धिं त्यज मूढबुद्धे त्वङ्मांसमेदोऽस्थिपुरीषराशौ ।
सर्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शांतिं परमां भजस्व ॥ १६३ ॥
देहेंद्रियादावसति भ्रमोदितां विद्वानहंतां न जहाति यावत् ।
तावन्न तस्यास्ति विमुक्तिवार्ताप्यस्त्वेष वेदांतनयांतदर्शी ॥ १६४ ॥
छायाशरीरे प्रतिबिंबगात्रे यत्स्वप्नदेहे हृदि कल्पितांगे ।
यथात्मबुद्धिस्तव नास्ति काचिज्जीवच्छरीरे च तथैव मास्तु ॥ १६५ ॥
देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम् ।
यतस्ततस्त्वं जहि तां प्रयत्नात्त्यक्ते तु चित्ते न पुनर्भवाशा ॥ १६६ ॥
कर्मेंद्रियैः पंचभिरंचितोऽयं प्राणो भवेत्प्राणमयस्तु कोशः ।
येनात्मवानन्नमयोऽन्नपूर्णः प्रवर्ततेऽसौ सकलक्रियासु ॥ १६७ ॥
नैवात्मापि प्राणमयो वायुविकारो
गंतागंता वायुवदंतर्बहिरेषः ।
यस्मात्किंचित्क्वापि न वेत्तीष्टमनिष्टं

स्वं वान्यं वा किंचन नित्यं परतंत्रः ॥ १६८ ॥
ज्ञानेंद्रियाणि च मनश्च मनोमयः स्या-
त्कोशो ममाहमिति वस्तुविकल्पहेतुः ।
संज्ञादिभेदकलनाकलितो बलीयां-
स्तत्पूर्वकोशमभिपूर्य विजृंभते यः ॥ १६९ ॥
पंचेंद्रियैः पंचभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया ।
जाज्वल्यमानो बहुवासनेंधनैर्मनोमयाग्निर्दहति प्रपंचम् ॥ १७० ॥
न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबंधहेतुः ।
तस्मिन्विनष्टे सकलं विनष्टं विजृंभितेऽस्मिन्सकलं विजृंभते ॥ १७१ ॥
स्वप्नेऽथ शून्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मन एव सर्वम् ।
तथैव जाग्रत्यपि नो विशेषस्तत्सर्वमेतन्मनसो विजृंभणम् ॥ १७२ ॥
सुषुप्तिकाले मनसि प्रलीने नैवास्ति किंचित्सकलप्रसिद्धेः ।
अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुनोऽस्ति ॥ १७३ ॥
वायुना नीयते मेघः पुनस्तेनैव नीयते ।
मनसा कल्प्यते बंधो मोक्षस्तेनैव कल्प्यते ॥ १७४ ॥
देहादिसर्वविषये परिकल्प्य रागं
बध्नाति तेन पुरुषं पशुवद्गुणेन ।
वैरस्यमत्र विषवत्सु विधाय पश्चा-
देनं विमोचयति तन्मन एव बंधात् ॥ १७४ ॥
तस्मान्मनः कारणमस्य जंतो-
र्बंधस्य मोक्षस्य च वा विधाने ।
बंधस्य हेतुर्मलिनं रजोगुणै-
र्मोक्षस्य शुद्धं विरजस्तमस्कम् ॥ १७६ ॥
विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै ।
भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे ॥ १७७ ॥

मनो नाम महाव्याघ्रो विषयारण्यभूमिषु ।
चरत्यत्र न गच्छंतु साधवो ये मुमुक्षवः ॥ १७८ ॥
मनः प्रसूते विषयानशेषान्स्थूलात्मना सूक्ष्मतया च भोक्तुः ।
शरीरवर्णाश्रमजातिभेदान्गुणक्रियाहेतुफलानि नित्यम् ॥ १७९ ॥
असंगचिद्रूपममुं विमोह्य देहेंद्रियप्राणगुणैर्निबध्य ।
अहंममेति भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु ॥ १८० ॥
अध्यासदोषात्पुरुषस्य संसृतिरध्यासबंधस्त्वमुनैव कल्पितः ।
रजस्तमोदोषवतो विवेकिनो जन्मादिदुःखस्य निदानमेतत् ॥ १८१ ॥
अतः प्राहुर्मनोऽविद्यां पंडितास्तत्त्वदर्शिनः ।
येनैव भ्राम्यते विश्वं वायुनेवाभ्रमंडलम् ॥ १८२ ॥
तन्मनःशोधनं कार्यं प्रयत्नेन मुमुक्षुणा ।
विशुद्धे सति चैतस्मिन्मुक्तिः करफलायते ॥ १८३ ॥
मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्वकर्म ।
सच्छ्रद्धया यः श्रवणादिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः ॥ १८४ ॥
मनोमयो नापि भवेत्परात्मा ह्याद्यंतवत्त्वात्परिणामिभावात् ।
दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः ॥ १८५ ॥
बुद्धिर्बुद्धींद्रियैः सार्धं सवृत्तिः कर्तृलक्षणः ।
विज्ञानमयकोशः स्यात्पुंसः संसारकारणम् ॥ १८६ ॥
अनुव्रजच्चित्प्रतिबिंबशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः ।
ज्ञानक्रियावानहमित्यजस्रं देहेंद्रियादिष्वभिमन्यते भृशम् ॥ १८७ ॥
अनादिकालोऽयमहंस्वभावो जीवः समस्तव्यवहारवोढा ।
करोति कर्माण्यपि पूर्ववासनः पुण्यान्यपुण्यानि च तत्फलानि ॥ १८८ ॥
भुंक्ते विचित्रास्वपि योनिषु व्रजन्नायाति निर्यात्यध ऊर्ध्वमेषः ।
अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्था सुखदुःखभोगः ॥ १८९ ॥
देहादिनिष्ठाश्रमधर्मकर्मगुणाभिमानं सततं ममेति ।

विज्ञानकोशोऽयमतिप्रकाशः प्रकृष्टसांनिध्यवशात्परात्मनः ।
अतो भवत्येव उपाधिरस्य यदात्मधीः संसरति भ्रमेण ॥ १९० ॥

योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्ययं ज्योतिः ।
कूटस्थः सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः ॥ १९१ ॥

स्वयं परिच्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः ।
सर्वात्मकः सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदो घटानिव ॥१९२॥

उपाधिसंबंधवशात्परात्मा ह्युपाधिधर्माननुभाति तद्गुणः ।
अयोविकारानविकारिवह्निवत्सदैकरूपोऽपि परः स्वभावात् ॥ १९३ ॥

शिष्य उवाच--

भ्रमेणाप्यन्यथा वास्तु जीवभावः परात्मनः ।
तदुपाधेरनादित्वान्नानादेर्नाश इष्यते ॥ १९४ ॥

अतोऽस्य जीवभावोऽपि नित्या भवति संसृतिः ।
न निवर्तेत तन्मोक्षः कथं मे श्रीगुरो वद ॥ १९५ ॥

श्रीगुरुरुवाच—

सम्यक्पृष्टं त्वया विद्वन्सावधानेन तच्छृणु ।
प्रामाणिकी न भवति भ्रांत्या मोहितकल्पना ॥ १९६ ॥

भ्रांतिं विना त्वसंगस्य निष्क्रियस्य निराकृतेः ।
न घटेतार्थसंबंधो नभसो नीलतादिवत् ॥ १९७ ॥

स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य
प्रत्यग्बोधानंदरूपस्य बुद्धेः ।
भ्रांत्या प्राप्तो जीवभावो न सत्यो
मोहापाये नास्त्यवस्तु स्वभावात् १९८ ।

यावद् भ्रांतिस्तावदेवास्य सत्ता
मिथ्याज्ञानोज्जृंभितस्य प्रमादात् ।
रज्ज्वां सर्पो भ्रांतिकालीन एव

भ्रांतेर्नाश नैव सर्पोऽपि तद्वत् ॥ १९९ ॥
अनादित्वमविद्यायाः कार्यस्यापि तथेष्यते ।
उत्पन्नायां तु विद्यायामाविद्यकमनाद्यपि ॥ २०० ॥
प्रबोधे स्वप्नवत्सर्वं सहमूलं विनश्यति ।
अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् ॥ २०१ ॥
अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः ।
यद्बुद्ध्युपाधिसंबंधात्परिकल्पितमात्मनि ॥ २०२ ॥
जीवत्वं न ततोऽन्यत्तु स्वरूपेण विलक्षणः ।
संबंधः स्वात्मनो बुद्ध्यां मिथ्याज्ञानपुरःसरः ॥ २०३ ॥
विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा ।
ब्रह्मात्मैकत्वविज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ॥ २०४ ॥
तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति ।
ततो विवेकः कर्तव्यः प्रत्यगात्मासदात्मनोः ॥ २०५ ॥
जलं पंकवदत्यंतं पंकापाये जलं स्फुटम् ।
यथा भाति तथात्मापि दोषाभावे स्फुटप्रभः ॥ २०६ ॥
असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत्प्रतीचः ।
ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः ॥ २०७ ॥
अतो नायं परात्मा स्याद्विज्ञानमयशब्दभाक् ।
विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः ।
दृश्यत्वाद्व्यभिचारित्वान्नानित्यो नित्य इष्यते ॥ २०८ ॥
आनंदप्रतिबिंबचुंबिततनुर्वृत्तिस्तमोज्जृंभिता
स्यादानंदमयः प्रियादिगुणकः स्वेष्टार्थलाभोदये ।
पुण्यस्यानुभवे विभाति कृतिनामानंदरूपः स्वयं
भूत्वा नंदति यत्र साधु तनुभृन्मात्रः प्रयत्नं विना ॥२०९॥
आनंदमयकोशस्य सुषुप्तौ स्फूर्तिरुत्कटा ।

स्वप्नजागरयोरीषदिष्टसंदर्शनादिना ॥ २१० ॥
नैवायमानंदमयः परात्मा सोपाधिकत्वात्प्रकृतेर्विकारात् ।
कार्यत्वहेतोः सुकृतक्रियाया विकारसंघातसमाहितत्वात् ॥२११॥
पंचानामपि कोशानां निषेधे युक्तितः श्रुतेः ।
तन्निषेधावधिः साक्षी बोधरूपोऽवशिष्यते ॥ २१२ ॥
योऽयमात्मा स्वयंज्योतिः पंचकोशविलक्षणः ।
अवस्थात्रयसाक्षी सन्निर्विकारो निरंजनः ।
सदानंदः स विज्ञेयः स्वात्मत्वेन विपश्चिता ॥ २१३ ॥

शिष्य उवाच--

मिथ्यात्वेन निषिद्धेषु कोशेष्वेतेषु पंचसु ।
सर्वाभावं विना किंचिन्न पश्याम्यत्र हे गुरो ।
विज्ञेयं किमु वस्त्वस्ति स्वात्मनात्र विपश्चिता ॥ २१४ ॥

श्रीगुरुरुवाच--

सत्यमुक्तं त्वया विद्वन्निपुणोऽसि विचारणे ।
अहमादिविकारास्ते तदभावोऽयमप्यनु ॥ २१५ ॥
सर्वे येनानुभूयंते यः स्वयं नानुभूयते ।
तमात्मानं वेदितारं विद्धि बुद्ध्या सुसूक्ष्मया २१६ ॥
तत्साक्षिकं भवेत्तत्तद्यद्येनानुभूयते ।
कस्याप्यननुभूतार्थे साक्षित्वं नोपयुज्यते ॥ २१७ ॥
असौ स्वसाक्षिगो भावो यतः स्वेनानुभूयते ।
अतः परं स्वयं साक्षात्प्रत्यगात्मा न चेतरः ॥ २१८ ॥
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरं योऽसौ समुज्जृंभते
प्रत्यग्रूपतया सदाहमहमित्यंतः स्फुरन्नेकधा ।
नानाकारविकारभागिन इमान्पश्यन्नहंधीमुखान्
नित्यानंदचिदात्मना स्फुरति तं विद्धि स्वमेतं हृदि ॥ २१९ ॥

घटोदके बिंबितमर्कबिंबमालोक्य मूढो रविमेव मन्यते ।
तथा चिदाभासमुपाधिसंस्थं भ्रांत्याहमित्येव जडोऽभिमन्यते।।२२०
घटं जलं तद्गतमर्कबिंबं विहाय सर्वं विनिरीक्ष्यतेऽर्कः ।
तटस्थ एतत्त्रितयावभासकः स्वयंप्रकाशो विदुषा यथा यथा २२१
देहं धियं चित्प्रतिबिंबमेवं विसृज्य बुद्धौ निहितं गुहायाम् ।
द्रष्टारमात्मानमखंडबोधं सर्वप्रकाशं सदसद्विलक्षणम् ॥ २२२ ॥
नित्यं विभुं सर्वगतं सुसूक्ष्ममंतर्बहिः शून्यमनन्यमात्मनः ।
विज्ञाय सम्यङ्निजरूपमेतत्पुमान्विपाप्मा विरजो विमृत्युः ॥२२३॥
विशोक आनंदघनो विपश्चित्स्वयं कुतश्चिन्न बिभेति कश्चित् ।
नान्योऽस्ति पंथा भवबंधमुक्तेर्विना स्वतत्त्वावगमं मुमुक्षोः॥२२४॥

ब्रह्माभिन्नत्वविज्ञानं भवमोक्षस्य कारणम् ।
येनाद्वितीयमानंदं ब्रह्म संपद्यते बुधैः ॥ २२५ ॥
ब्रह्मभूतस्तु संसृत्यै विद्वान्नावर्तते पुनः ।
विज्ञातव्यमतः सम्यग्ब्रह्माभिन्नत्वमात्मनः ॥ २२६ ॥
सत्यं ज्ञानमनंतं ब्रह्म विशुद्धं परं स्वतः सिद्धम् ।
नित्यानंदैकरसं प्रत्यगभिन्नं निरंतरं जयति ॥ २२७ ॥
सदिदं परमाद्वैतं स्वस्मादन्यस्य वस्तुनोऽभावात् ।
नह्यन्यदस्ति किंचित्सम्यक्परमार्थतत्त्वबोधे हि ॥ २२८ ॥
यदिदं सकलं विश्वं नानारूपं प्रतीतमज्ञानात् ।
तत्सर्वं ब्रह्मैव प्रत्यस्ताशेषभावनादोषम् ॥ २२९ ॥

मृत्कार्यभूतोऽपि मृदो न भिन्नः कुंभोऽस्ति सर्वत्र तु मृत्स्वरूपात् ।
न कुंभरूपं पृथगस्ति कुंभः कुतो मृषा कल्पितनाममात्रः ॥ २३०
केनापि मृद्भिन्नतया स्वरूपं घटस्य संदर्शयितुं न शक्यते ।
अतो घटः कल्पित एव मोहान्मृदेव सत्यं परमार्थभूतम् ॥२३१॥
सद्ब्रह्मकार्यं सकलं सदैव तन्मात्रमेतन्न ततोऽन्यदस्ति ।

अस्तीति यो वक्ति न तस्य मोहो विनिर्गतो निद्रितवत्प्रजल्पः २३२
ब्रह्मैवेदं विश्वमित्येव वाणी श्रौती ब्रूतेऽथर्वनिष्ठा वरिष्ठाम् ।
तस्मादेतद् ब्रह्ममात्रं हि विश्वं नाधिष्ठानाद्भिन्नतारोपितस्य॥२३३॥
सत्यं यदि स्याज्जगदेतदात्मनोऽनंतत्वहानिर्निगमाप्रमाणता ।
असत्यवादित्वमपीशितुः स्यान्नैतत्त्रयं साधु हितं महात्मनाम् २३४
ईश्वरो वस्तुतत्त्वज्ञो न चाहं तेष्ववस्थितः ।
नच मत्स्थानि भूतानीत्येवमेव व्यचिक्लृपत् ॥ २३५ ॥
यदि सत्यं भवेद्विश्वं सुषुप्तावुपलभ्यताम् ।
यन्नोपलभ्यते किंचिदतोऽसत्स्वप्नवन्मृषा ॥ २३६ ॥
अतः पृथङ्नास्ति जगत्परात्मनः पृथक्प्रतीतिस्तु मृषा गुणादिवत्
आरोपितस्यास्ति किमर्थवत्ताधिष्ठानमाभाति तथा भ्रमेण ॥२३७॥
भ्रांतस्य यद्यद्भ्रमतः प्रतीतं ब्रह्मैव तत्तद्रजतं हि शुक्तिः ।
इदंतया ब्रह्म सदैव रूप्यते त्वारोपितं ब्रह्मणि नाममात्रम् ॥२३८॥
अतः परं ब्रह्म सदद्वितीयं विशुद्धविज्ञानघनं निरंजनम् ।
प्रशांतमाद्यंतविहीनमक्रियं निरंतरानंदरसस्वरूपम् ॥ २३९ ॥
निरस्तमायाकृतसर्वभेदं नित्यं सुखं निष्कलमप्रमेयम् ।
अरूपमव्यक्तमनाख्यमव्ययं ज्योतिः स्वयं किंचिदिदं चकास्ति२४०
ज्ञातृज्ञेयज्ञानशून्यमनंतं निर्विकल्पकम् ।
केवलाखंडचिन्मात्रं परं तत्त्वं विदुर्बुधाः ॥ २४१ ॥
अहेयमनुपादेयं मनोवाचामगोचरम् ।
अप्रमेयमनाद्यंतं ब्रह्म पूर्णमहं महः ॥ २४२ ॥
तत्त्वं पदाभ्यामभिधीयमानयोर्ब्रह्मात्मयोः शोधितयोर्यदीत्थम् ।
श्रुत्या तयोस्तत्त्वमसीति सम्यगेकत्वमेव प्रतिपाद्यते मुहुः ॥ २४३॥
ऐक्यं तयोर्लक्षितयोर्न वाच्ययो-
र्निगद्यतेऽन्योन्यविरुद्धधर्मिणोः ।

खद्योतभान्वोरिव राजभृत्ययोः
कूपांबुराश्योः परमाणुमेर्वोः ॥ २४४ ॥
तयोर्विरोधोऽयमुपाधिकल्पितो न वास्तवः कश्चिदुपाधिरेषः ।
ईशस्य मायामहदादि कारणं जीवस्य कार्यं शृणु पंचकोशम् ॥२४५॥
एतावुपाधी परजीवयोस्तयोः सम्यङ्निरासे न परो न जीवः ।
राज्यं नरेंद्रस्य भटस्य खेटकस्तयोरपोहे न भटो न राजा ॥२४६॥
अथात आदेश इति श्रुतिः स्वयं निषेधति ब्रह्मणि कल्पितं द्वयम् ।
श्रुतिप्रमाणानुगृहीतबोधात्तयोर्निरासः करणीय एवम् ॥ २४७ ॥
नेदं नेदं कल्पितत्वान्न सत्यं रज्जौ दृष्टव्यालवत्स्वप्नवच्च ।
इत्थं दृश्यं साधुयुक्त्या व्यपोह्य ज्ञेयः पश्चादेकभावस्तयोर्यः ॥२४८॥
ततस्तु तौ लक्षणया सुलक्ष्यौ तयोरखंडैकरसत्वसिद्धये ।
नालं जहत्या न तथाऽजहत्या किंतूभयार्थात्मिकयैव भाव्यम् ॥२४९॥
स देवदत्तोऽयमितीह चैकता विरुद्धधर्मांशमपास्य कथ्यते ।
यथा तथा तत्त्वमसीति वाक्ये विरुद्धधर्मानुभयत्र हित्वा ॥२५० ॥
संलक्ष्य चिन्मात्रतया सदात्मनोरखंडभावः परिचीयते बुधैः ।
एवं महावाक्यशतेन कथ्यते ब्रह्मात्मनोरैक्यमखंडभावः ॥ २५१ ॥
अस्थूलमित्येतदसन्निरस्य सिद्धं स्वतो व्योमवदप्रतर्क्यम् ।
अतो मृषामात्रमिदं प्रतीतं जहीहि यत्स्वात्मतया गृहीतम् ।
ब्रह्माहमित्येव विशुद्धबुद्ध्या विद्धि स्वमात्मानमखंडबोधम् ॥२५२॥
मृत्कार्यं सकलं घटादि सततं मृन्मात्रमेवाभित–
स्तद्वत्सज्जनितं सदात्मकमिदं सन्मात्रमेवाखिलम् ।
यस्मान्नास्ति सतः परं किमपि तत्सत्यं स आत्मा स्वयं
तस्मात्तत्त्वमसि प्रशांतममलं ब्रह्माद्वयं यत्परम् ॥ २५३ ॥
निद्राकल्पितदेशकालविषयज्ञात्रादि सर्वं यथा
मिथ्या तद्वदिहापि जाग्रति जगत्स्वाज्ञानकार्यत्वतः ।

यस्मादेवमिदं शरीरकरणप्राणाहमाद्यप्यसत्
तस्मात्तत्त्वमसि प्रशांतममलं ब्रह्माद्वयं यत्परम् ॥ २५४ ॥
जातिनीतिकुलगोत्रदूरगं नामरूपगुणदोषवर्जितम् ।
देशकालविषयातिवर्ति यद्ब्रह्म तत्त्वमसि भावयात्मनि ॥ २५५ ॥
यत्परं सकलवागगोचरं गोचरं विमलबोधचक्षुषः ।
शुद्धचिद्घनमनादिवस्तु यद्ब्रह्म तत्त्वमसि भावयात्मनि ॥२५६ ॥
षड्भिरूर्मिभिरयोगि योगिहृद्भावितं न करणैर्विभावितम् ।
बुद्ध्यवेद्यमनवद्यभूति यद् ब्रह्म तत्त्वमसि भावयात्मनि ॥ २५७ ॥
भ्रांतिकल्पितजगत्कलाश्रयं स्वाश्रयं च सदसद्विलक्षणम्
निष्कलं निरुपमानमृद्धिमद् ब्रह्म तत्त्वमसि भावयात्मनि ॥ २५८ ॥
जन्मवृद्धिपरिणत्यपक्षयव्याधिनाशनविहीनमव्ययम् ।
विश्वसृष्टयवनघातकारणं ब्रह्म तत्त्वमसि भावयात्मनि ॥ २५९ ॥
अस्तभेदमनपारतलक्षणं निरतरंगजलराशिनिश्चलम् ।
नित्यमुक्तमविभक्तमूर्ति यद् ब्रह्म तत्त्वमसि भावयात्मनि ॥ २६० ॥
एकमेव सदनेककारणं कारणांतरनिरासकारणम् ।
कार्यकारणविलक्षणं स्वयं ब्रह्म तत्त्वमसि भावयात्मनि ॥ २६१ ॥
निर्विकल्पकमनल्पमक्षरं यत्क्षराक्षरविलक्षणं परम् ।
नित्यमव्ययसुखं निरंजनं ब्रह्म तत्त्वमसि भावयात्मनि ॥ २६२ ॥
यद्विभाति सदनेकधा भ्रमान्नामरूपगुणविक्रियात्मना ।
हेमवत्स्वयमविक्रियं सदा ब्रह्म तत्त्वमसि भावयात्मनि ॥ २६३ ॥
यच्चकास्त्यनपरं परात्परं प्रत्यगेकरसमात्मलक्षणम् ।
सत्यचित्सुखमनंतमव्ययं ब्रह्म तत्त्वमसि भावयात्मनि ॥ २६४ ॥
उक्तमर्थमिममात्मनि स्वयं भावय प्रथितयुक्तिभिर्धिया ।
संशयादिरहितं करांबुवत्तेन तत्त्वनिगमो भविष्यति ॥ २६५ ॥
स्वंबोधमात्रं परिशुद्धतत्त्वं विज्ञाय संघे नृपवच्च सैन्ये ।

तदात्मनैवात्मनि सर्वदा स्थितो विलापय ब्रह्मणि दृश्यजातम् ॥ २६६ ॥
बुद्धौ गुहायां सदसद्विलक्षणं ब्रह्मास्ति सत्यं परमद्वितीयम् ।
तदात्मना योऽत्र वसेद्गुहायां पुनर्न तस्यांगगुहाप्रवेशः ॥ २६७ ॥
ज्ञाते वस्तुन्यदि बलवती वासनाऽनादिरेषा
कर्ता भोक्ताप्यहमिति दृढा यास्य संसारहेतुः ।
प्रत्यग्दृष्ट्यात्मनि निवसता सापनेया प्रयत्ना-
न्मुक्तिं प्राहुस्तदिह मुनयो वासनातानवं यत् ॥ २६८ ॥
अहं ममेति यो भावो देहाक्षादावनात्मनि ।
अध्यासोऽयं निरस्तव्यो विदुषा स्वात्मनिष्ठया ॥ २६९ ॥
ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम् ।
सोऽहमित्येव सद्वृत्त्यानात्मन्यात्ममतिं जहि ॥ २७० ॥
लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥ २७१ ॥
लोकवासनया जंतोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ २७२ ॥
संसारकारागृहमोक्षमिच्छोरयोमयं पादनिबद्धशृंखलम् ।
वदंति तज्ज्ञाः पटुवासनात्रयं योऽस्माद्विमुक्तः समुपैति मुक्तिम् ॥ २७३ ॥
जलादिसंपर्कवशात्प्रभूतदुर्गंधधूतागरुदिव्यवासना ।
संघर्षणेनैव विभाति सम्यग्विधूयमाने सति बाह्यगंधे ॥ २७४ ॥
अंतःश्रितानंतदुरंतवासनाधूलीविलिप्ता परमात्मवासना ।
प्रज्ञातिसंघर्षणतो विशुद्धा प्रतीयते चंदनगंधवत्स्फुटा ॥ २७५ ॥
अनात्मवासनाजालैस्तिरोभूतात्मवासना ।
नित्यात्मनिष्ठया तेषां नाशे भाति स्वयं स्फुटा ॥ २७६ ॥
यथा यथा प्रत्यगवस्थितं मनस्तथा तथा मुंचति बाह्यवासनाः ।
निःशेषमोक्षे सति वासनानामात्मानुभूतिः प्रतिबंधशून्या ॥ २७७ ॥

स्वात्मन्येव सदा स्थित्या मनो नश्यति योगिनः ।
वासनानां क्षयश्चातः स्वाध्यासापनयं कुरु ॥ २७८ ॥
तमो द्वाभ्यां रजः सत्त्वात्सत्त्वं शुद्धेन नश्यति ।
तस्मात्सत्त्वमवष्टभ्य स्वाध्यासापनयं कुरु ॥२७९ ॥
प्रारब्धं पुष्यति वपुरिति निश्चित्य निश्चलः ।
धैर्यमालंब्य यत्नेन स्वाध्यासापनयं कुरु ॥ २८० ॥
नाहं जीवः परं ब्रह्मेत्यतद्व्यावृत्तिपूर्वकम् ।
वासनावेगतः प्राप्तस्वाध्यासापनयं कुरु ॥ २८१ ॥
श्रुत्या युक्त्या स्वानुभूत्या ज्ञात्वा सार्वात्म्यमात्मनः ।
क्वचिदाभासतः प्राप्तस्वाध्यासापनयं कुरु ॥ २८२ ॥
अनादानविसर्गाभ्यामीषन्नास्ति क्रिया मुनेः ।
तदेकनिष्ठया नित्यं स्वाध्यासापनयं कुरु ॥ २८३ ॥
तत्त्वमस्यादिवाक्योत्थब्रह्मात्मैकत्वबोधतः ।
ब्रह्मण्यात्मत्वदार्ढ्याय स्वाध्यासापनयं कुरु ॥ २८४ ॥
अहंभावस्य देहेऽस्मिन्निःशेषविलयावधि ।
सावधानेन युक्तात्मा स्वाध्यासापनयं कुरु ॥ २८५ ॥
प्रतीतिर्जीवजगतोः स्वप्नवद्भाति यावता ।
तावन्निरंतरं विद्वन्स्वाध्यासापनयं कुरु ॥ २८६ ॥
निद्राया लोकवार्तायाः शब्दादेरपि विस्मृतेः ।
क्वचिन्नावसरं दत्वा चिंतयात्मानमात्मनि ॥ २८७ ॥
मातापित्रोर्मलोद्भूतं मलमांसमयं वपुः ।
त्यक्त्वा चांडालवद्दूरं ब्रह्मीभूय कृती भव ॥ २८८ ॥
घटाकाशं महाकाश इवात्मानं परात्मनि ।
विलाप्याखंडभावेन तूष्णीं भव सदा मुने ॥ २८९ ॥
स्वप्रकाशमधिष्टानं स्वयंभूय सदात्मना ।

ब्रह्मांडमपि पिंडांडं त्यज्यतां मलभांडवत् ।। २९० ।।
चिदात्मनि सदानंदे देहारूढामहंधियम् ।
निवेश्य लिंगमुत्सृज्य केवलो भव सर्वदा ॥ २९१ ॥
यत्रैष जगदाभासो दर्पणांतः पुरं यथा ।
तद्ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भविष्यसि ॥ २९२ ॥
यत्सत्यभूतं निजरूपमाद्यं चिदद्वयानंदमरूपमक्रियम् ।
तदेत्य मिथ्यावपुरुत्सृजैतच्छैलूषवद्वेषमुपात्तमात्मनः ॥ २९३ ॥
सर्वात्मना दृश्यमिदं मृषैव नैवाहमर्थः क्षणिकत्वदर्शनात् ।
जानाम्यहं सर्वमिति प्रतीतिः कुतोऽहमादेः क्षणिकस्य सिध्येत् ॥ २९४॥
अहंपदार्थस्त्वहमादिसाक्षी नित्यं सुषुप्तावपि भावदर्शनात् ।
ब्रूते ह्यजो नित्य इति श्रुतिः स्वयं तत्प्रत्यगात्मा सदसद्विलक्षणः ॥२९५॥
विकारिणां सर्वविकारवेत्ता नित्योऽविकारो भवितुं समर्हति ।
मनोरथस्वप्नसुषुप्तिषु स्फुटं पुनः पुनर्दृष्टमसत्त्वमेतयोः ॥ २९६ ॥
अतोऽभिमानं त्यज मांसपिंडे पिंडाभिमानिन्यपि बुद्धिकल्पिते ।
कालत्रयाबाध्यमखंडबोधं ज्ञात्वा स्वमात्मानमुपैहि शांतिम् ॥२९७॥
त्यजाभिमानं कुलगोत्रनामरूपाश्रमेष्वार्द्रशवाश्रितेषु ।
लिंगस्य धर्मानपि कर्तृतादींस्त्यक्त्वा भवाखंडसुखस्वरूपः ॥ २९८ ॥
संत्यन्ये प्रतिबंधाः पुंसः संसारहेतवो दृष्टाः ।
तेषामेकं मूलं प्रथमविकारो भवत्यहंकारः ॥ २९९ ॥
यावत्स्यात्स्वस्य संबंधोऽहंकारेण दुरात्मना ।
तावन्न लेशमात्रापि मुक्तिवार्ता विलक्षणा ॥ ३०० ॥
अहंकारग्रहान्मुक्तः स्वरूपमुपपद्यते ।
चंद्रवद्विमलः पूर्णः सदानंदः स्वयंप्रभः ॥ ३०१ ॥
यो वा पुरे सोऽहमिति प्रतीतो बुद्ध्या विक्लृप्तस्तमसातिमूढया ।
तस्यैव निःशेषतया विनाशे ब्रह्मात्मभावः प्रतिबंधशून्यः ॥ ३०२ ॥

ब्रह्मानंदनिधिर्महाबलवताहंकारघोराहिना
संवेष्ट्यात्मनि रक्ष्यते गुणमयैश्चंडैस्त्रिभिर्मस्तकैः ।
विज्ञानाख्यमहासिना द्युतिमता विच्छिद्य शीर्षत्रयं
निर्मूल्याहिमिमं निधिं सुखकरं धीरोऽनुभोक्तुं क्षमः ॥ ३०३ ॥
यावद्वा यत्किंचिद्विषदोषस्फूर्तिरस्ति चेद्देहे ।
कथमारोग्याय भवेत्तद्वदहंतापि योगिनो मुक्त्यै ॥ ३०४ ॥
अहमोऽत्यंतनिवृत्त्या तत्कृतनानाविकल्पसंहृत्या ।
प्रत्यक्तत्त्वविवेकादयमहमस्मीति विंदते तत्त्वम् ॥ ३०५ ॥
अहंकर्तर्यस्मिन्नहमिति मतिं मुंच सहसा
विकारात्मन्यात्मप्रतिफलजुषि स्वस्थितिमुषि ।
यदध्यासात्प्राप्ता जनिमृतिजरादुःखबहुलाः
प्रतीचश्चिन्मूर्तेस्तव सुखतनोः संसृतिरियम् ॥ ३०६ ॥
सदैकरूपस्य चिदात्मनो विभोरानंदमूर्तेरनवद्यकीर्तेः ।
नैवान्यथा क्वाप्यविकारिणस्ते विनाहमध्यासममुष्य संसृतिः ॥ ३०७ ॥
तस्मादहंकारमिमं स्वशत्रुं भोक्तुर्गले कंटकवत्प्रतीतम् ।
विच्छिद्य विज्ञानमहासिना स्फुटं भुंक्ष्वात्मसाम्राज्यसुखं यथेष्टम् ॥ ३०८ ॥
ततोऽहमादेर्विनिवर्त्य वृत्तिं संत्यक्तरागः परमार्थलाभात् ।
तूष्णीं समास्स्वात्मसुखानुभूत्या पूर्णात्मना ब्रह्मणि निर्विकल्पः ॥ ३०९ ॥
समूलकृत्तोऽपि महानहं पुनर्व्युल्लेखितः स्याद्यदि चेतसा क्षणम् ।
संजीव्य विक्षेपशतं करोति नभस्वता प्रावृषि वारिदो यथा ॥ ३१० ॥
निगृह्य शत्रोरहमोऽवकाशः क्वचिन्न देयो विषयानुचिंतया ।
स एव संजीवनहेतुरस्य प्रक्षीणजंबीरतरोरिवांबु ॥ ३११ ॥
देहात्मना संस्थित एव कामी विलक्षणः कामयिता कथं स्यात् ।
अतोऽर्थसंधानपरत्वमेव भेदप्रसक्त्या भवबंधहेतुः ॥ ३१२ ॥
कार्यप्रवर्धनाद्बीजप्रवृद्धिः परिदृश्यते ।

कार्यनाशाद्बीजनाशस्तस्मात्कार्यं निरोधयेत् ।। ३१३ ॥

वासनावृद्धितः कार्यं कार्यवृद्ध्या च वासना ।
वर्धते सर्वथा पुंसः संसारो न निवर्तते ॥ ३१४ ॥

संसारबंधविच्छित्त्यै तद्द्वयं प्रदहेद्यतिः ।
वासनावृद्धिरेताभ्यां चिंतया क्रियया बहिः ।। ३१५ ॥

ताभ्यां प्रवर्धमाना सा सूते संसृतिमात्मनः ।
त्रयाणां च क्षयोपायः सर्वावस्थासु सर्वदा ॥ ३१६ ॥

सर्वत्र सर्वतः सर्वं ब्रह्ममात्रावलोकनम् ।
सद्भाववासनादार्ढ्यात्तत्त्रयं लयमश्नुते ।। ३१७ ।।

क्रियानाशे भवेच्चिंतानाशोऽस्माद्वासनाक्षयः ।
वासनाप्रक्षयो मोक्षः सा जीवन्मुक्तिरिष्यते ॥ ३१८ ॥

सद्वासनास्फूर्तिविजृंभणे सति ह्यसौ विलीना त्वहमादिवासना ।
अतिप्रकृष्टाप्यरुणप्रभायां विलीयते साधु यथा तमिस्रा ॥ ३१९ ॥

तमस्तमःकार्यमनर्थजालं न दृश्यते सत्युदिते दिनेशे ।
तथाऽद्वयानंदरसानुभूतौ नैवास्ति बंधो न च दुःखगंधः ।। ३२० ।।

दृश्यं प्रतीतं प्रविलापयन्स्वयं सन्मात्रमानंदघनं विभावयन् ।
समाहितः सन्बहिरंतरं वा कालं नयेथाः सति कर्मबंधे ॥ ३२१ ॥

प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन ।
प्रमादो मृत्युरित्याह भगवान्ब्रह्मणः सुतः ।। ३२२ ॥

न प्रमादादनर्थोऽन्यो ज्ञानिनः स्वस्वरूपतः ।
ततो मोहस्ततोऽहंधीस्ततो बंधस्ततो व्यथा ॥ ३२३ ॥

विषयाभिमुखं दृष्ट्वा विद्वांसमपि विस्मृतिः ।
विक्षेपयति धीदोषैर्योषा जारमिव प्रियम् ।। ३२४ ॥

यथा ऽपकृष्टं शैवालं क्षणमात्रं न तिष्ठति ।
आवृणोति तथा माया प्राज्ञं वापि पराङ्मुखम् ॥ ३२५ ॥

लक्ष्यच्च्युतं चेद्यदि चित्तमीषद्बहिर्मुखं संनिपतेत्ततस्ततः ।
प्रमादतः प्रच्युतकेलिकंदुकः सोपानपंक्तौ पतितो यथा तथा ॥ ३२६ ॥

विषयेष्वाविशच्चेतः संकल्पयति तद्गुणान् ।
सम्यक्संकल्पनात्कामः कामात्पुंसः प्रवर्तनम् ॥ ३२७ ॥

ततः स्वरूपविभ्रंशो विभ्रष्टस्तु पतत्यधः ।
पतितस्य विना नाशं पुनर्नारोह ईक्ष्यते ।
संकल्पं वर्जयेत्तस्मात्सर्वानर्थस्य कारणम् ॥ ३२८ ॥

अतः प्रमादान्न परोऽस्ति मृत्युर्विवेकिनो ब्रह्मविदः समाधौ ।
समाहितः सिद्धिमुपैति सम्यक्समाहितात्मा भव सावधानः ॥ ३२९ ॥

जीवतो यस्य कैवल्यं विदेहे च स केवलः ।
यत्किंचित्पश्यतो भेदं भयं ब्रूते यजुःश्रुतिः ॥ ३३० ॥

यदा कदा वापि विपश्चिदेष ब्रह्मण्यनंतेऽप्यणुमात्रभेदम् ।
पश्यत्यथामुष्य भयं तदैव यद्वीक्षितं भिन्नतया प्रमादात् ॥ ३३१ ॥

श्रुतिस्मृतिन्यायशतैर्निषिद्धे दृश्येऽत्र यः स्वात्ममतिं करोति ।
उपैति दुःखोपरि दुःखजातं निषिद्धकर्ता स मलिम्लुचो यथा ॥ ३३२ ॥

सत्याभिसंधानरतो विमुक्तो महत्त्वमात्मीयमुपैति नित्यम् ।
मिथ्याभिसंधानरतस्तु नश्येद् दृष्टं तदेतद्यदचोरचोरयोः ॥ ३३३ ॥

यतिरसदनुसंधिं बंधहेतुं विहाय
स्वयमयमहमस्मीत्यात्मदृष्ट्यैव तिष्ठेत् ।
सुखयति ननु निष्ठा ब्रह्मणि स्वानुभूत्या
हरति परमविद्याकार्यदुःखं प्रतीतम् ॥ ३३४ ॥

बाह्यानुसंधिः परिवर्धयेत्फलं दुर्वासनामेव ततस्ततोऽधिकाम् ।
ज्ञात्वा विवेकैः परिहृत्य बाह्यं स्वात्मानुसंधिं विदधीत नित्यम् ॥ ३३५ ॥

बाह्ये निरुद्धे मनसः प्रसन्नता मनःप्रसादे परमात्मदर्शनम् ।
तस्मिन्सुदृष्टे भवबंधनाशो बहिर्निरोधः पदवी विमुक्तेः ॥ ३३६ ॥

कः पंडितः सन्सदसद्विवेकी श्रुतिप्रमाणः परमार्थदर्शी ।
जानन्हि कुर्यादसतोऽवलंबं स्वपातहेतोः शिशुवन्मुमुक्षुः ॥ ३३७ ॥
देहादिसंसक्तिमतो न मुक्तिर्मुक्तस्य देहाद्यभिमत्यभावः ।
सुप्तस्य नो जागरणं न जाग्रतः स्वप्नस्तयोर्भिन्नगुणाश्रयत्वात् ॥ ३३८ ॥
अंतर्बहिः स्वं स्थिरजंगमेषु ज्ञानात्मनाधारतया विलोक्य ।
त्यक्ताखिलोपाधिरखंडरूपः पूर्णात्मना यः स्थित एष मुक्तः ॥ ३३९ ॥
सर्वात्मना बंधविमुक्तिहेतुः सर्वात्मभावान्न परोऽस्ति कश्चित् ।
दृश्याग्रहे सत्युपपद्यतेऽसौ सर्वात्मभावोऽस्य सदात्मनिष्ठया ॥ ३४० ॥

दृश्यस्याग्रहणं कथं नु घटते देहात्मना तिष्ठतो
बाह्यार्थानुभवप्रसक्तमनसस्तत्तत्क्रियां कुर्वतः ।
संन्यस्ताखिलधर्मकर्मविषयैर्नित्यात्मनिष्ठापरै-
स्तत्त्वज्ञैः करणीयमात्मनि सदानंदेच्छुभिर्यत्नतः ॥ ३४१ ॥

सार्वात्म्यसिद्धये भिक्षोः कृतश्रवणकर्मणः ।
समाधिं विदधात्येषा शांतो दांत इति श्रुतिः ॥ ३४२ ॥

आरूढशक्तेरहमो विनाशः
कर्तुं न शक्यः सहसापि पंडितैः ॥
ये निर्विकल्पाख्यसमाधिनिश्चला-
स्तानंतरानंतभवा हि वासनाः ॥ ३४३ ॥

अहंबुद्ध्यैव मोहिन्या योजयित्वावृतेर्बलात् ।
विक्षेपशक्तिः पुरुषं विक्षेपयति तद्गुणैः ॥ ३४४ ॥

विक्षेपशक्तिविजयो विषमो विधातुं
निःशेषमावरणशक्तिनिवृत्त्यभावे ।
दृग्दृश्ययोः स्फुटपयोजलवद्विभागे
नश्येत्तदावरणमात्मनि च स्वभावात् ।
निःसंशयेन भवति प्रतिबंधशून्यो

निक्षेपणं नहि तदा यदि चेन्मृषार्थे ॥ ३४५ ॥
सम्यग्विवेकः स्फुटबोधजन्यो विभज्य दृग्दृश्यपदार्थतत्त्वम् ।
छिनत्ति मायाकृतमोहबंधं यस्माद्विमुक्तस्य पुनर्न संसृतिः ॥ ३४६ ॥
परावरैकत्वविवेकवह्निर्दहत्यविद्यागहनं ह्यशेषम् ।
किं स्यात्पुनः संसरणस्य बीजमद्वैतभावं समपेयुषोऽस्य ॥ ३४७ ॥
आवरणस्य निवृत्तिर्भवति च सम्यक्पदार्थदर्शनतः ।
मिथ्याज्ञानविनाशस्तद्वद्विक्षेपजनितदुःखनिवृत्तिः ॥ ३४८ ॥
एतत्त्रितयं दृष्टं सम्यग्रज्जुस्वरूपविज्ञानात् ।
तस्माद्वस्तुसतत्त्वं ज्ञातव्यं बंधमुक्तये विदुषा ॥ ३४९ ॥
अयोऽग्नियोगादिव सत्समन्वयान्मात्रादिरूपेण विजृंभते धीः ।
तत्कार्यमेतत्त्रितयं यतो मृषा दृष्टं भ्रमस्वप्नमनोरथेषु ॥ ३५० ॥
ततो विकाराः प्रकृतेरहंमुखा देहावसाना विषयाश्च सर्वे ।
क्षणेऽन्यथाभावितया ह्यमीषामसत्त्वमात्मा तु कदापि नान्यथा ॥ ३५१ ॥
नित्याद्वयाखंडचिदेकरूपो बुद्ध्यादिसाक्षी सदसद्विलक्षणः ।
अहंपदप्रत्ययलक्षितार्थः प्रत्यक्सदानंदघनः परात्मा ॥ ३५२ ॥
इत्थं विपश्चित्सदसद्विभज्य निश्चित्य तत्त्वं निजबोधदृष्ट्या ।
ज्ञात्वा स्वमात्मानमखंडबोधं तेभ्यो विमुक्तः स्वयमेव शाम्यति ॥ ३५३ ॥
अज्ञानहृदयग्रंथेर्निःशेषविलयस्तदा ।
समाधिनाऽविकल्पेन यदाद्वैतात्मदर्शनम् ॥ ३५४ ॥
त्वमहमिदमितीयं कल्पना बुद्धिदोषात्
प्रभवति परमात्मन्यद्वये निर्विशेषे ।
प्रविलसति समाधावस्य सर्वो विकल्पो
विलयनमुपगच्छेद्वस्तुतत्त्वावधृत्या ॥ ३५५ ॥
शांतो दांतः परमुपरतः क्षांतियुक्तः समाधिं
कुर्वन्नित्यं कलयति यतिः स्वस्य सर्वात्मभावम् ।

तेनाविद्यातिमिरजनितान्साधु दग्ध्वा विकल्पान्
ब्रह्माकृत्या निवसति सुखं निष्क्रियो निर्विकल्पः ॥ ३५६ ॥
समाहिता ये प्रविलाप्य बाह्यं श्रोत्रादि चेतः स्वमहं चिदात्मनि
त एव मुक्ता भवपाशबंधैर्नान्ये तु पारोक्ष्यकथाभिधायिनः ॥ ३५७ ॥
उपाधिभेदात्स्वयमेव भिद्यते चोपाध्यपोहे स्वयमेव केवलः ।
तस्मादुपाधेर्विलयाय विद्वान्वसेत्सदा कल्पसमाधिनिष्ठया ॥ ३५८ ॥
सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया ।
कीटको भ्रमरं ध्यायन्भ्रमरत्वाय कल्पते ॥ ३५९ ॥
क्रियांतरासक्तिमपास्य कीटको ध्यायन्यथालिं ह्यलिभावमृच्छति ।
तथैव योगी परमात्मतत्त्वं ध्यात्वा समायाति तदेकनिष्ठया ॥ ३६० ॥
अतीव सूक्ष्मं परमात्मतत्वं न स्थूलदृष्ट्या प्रतिपत्तुमर्हति ।
समाधिनात्यंतसुसूक्ष्मवृत्त्या ज्ञातव्यमार्यैरतिशुद्धबुद्धिभिः ॥३६१॥
यथा सुवर्णं पुटपाकशोधितं त्यक्त्वा मलं स्वात्मगुणं समृच्छति ।
तथा मनः सत्त्वरजस्तमोमलं ध्यानेन संत्यज्य समेति तत्त्वम् ॥३६२॥
निरंतराभ्यासवशात्तदित्थं पक्वं मनो ब्रह्मणि लीयते यदा ।
तदा समाधिः स विकल्पवर्जितः स्वतोऽद्वयानंदरसानुभावकः ॥३६३॥
समाधिनाऽनेन समस्तवासनाग्रंथेर्विनाशोऽखिलकर्मनाशः ।
अंतर्बहिः सर्वत एव सर्वदा स्वरूपविस्फूर्तिरयत्नतः स्यात् ॥३६४॥
श्रुतेः शतगुणं विद्यान्मननं मननादपि ।
निदिध्यासं लक्षगुणमनंतं निर्विकल्पकम् ॥ ३६५ ॥
निर्विकल्पकसमाधिना स्फुटं ब्रह्मतत्त्वमवगम्यते ध्रुवम् ।
नान्यथा चलतया मनोगतेः प्रत्ययांतरविमिश्रितं भवेत् ॥३६६॥
अतः समाधत्स्व यतेंद्रियः सदा निरंतरं शांतमनाः प्रतीचि ।
विध्वंसय ध्वांतमनाद्यविद्यया कृतं सदेकत्वविलोकनेन ॥ ३६७ ॥
योगस्य प्रथमं द्वारं वाङ्निरोधोऽपरिग्रहः ।

निराशा च निरीहा च नित्यमेकांतशीलता ॥ ३६८ ॥
एकांतस्थितिरिंद्रियोपरमणे हेतुर्दमश्चेतसः
संरोधे करणं शमेन विलयं यायादहंवासना ।
तेनानंदरसानुभूतिरचला ब्राह्मी सदा योगिन-
स्तस्माच्चित्तनिरोध एव सततं कार्यः प्रयत्नान्मुनेः॥३६९॥
वाचं नियच्छात्मनि तं नियच्छ बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि ।
तं चापि पूर्णात्मनि निर्विकल्पे विलाप्य शांतिं परमां भजस्व ॥३७०॥
देहप्राणेंद्रियमनोबुद्ध्यादिभिरुपाधिभिः ।
यैर्यैर्वृत्तेः समायोगस्तत्तद्भावोऽस्य योगिनः ॥ ३७१ ॥
तन्निवृत्त्या मुनेः सम्यक्सर्वोपरमणं सुखम् ।
संदृश्यते सदानंदरसानुभवविप्लवः ॥ ३७२ ॥
अंतस्त्यागो बहिस्त्यागो विरक्तस्यैव युज्यते ।
त्यजत्यंतर्बहिःसंगं विरक्तस्तु मुमुक्षया ॥ ३७३ ॥
बहिस्तु विषयैः संगं तथांतरहमादिभिः ।
विरक्त एव शक्नोति त्यक्तुं ब्रह्मणि निष्ठितः ॥ ३७४ ॥
वैराग्यबोधौ पुरुषस्य पक्षिवत्पक्षौ विजानीहि विचक्षण त्वम् ।
विमुक्तिसौधाग्रतलाधिरोहणं ताभ्यां विना नान्यतरेण सिध्यति ॥३७५॥
अत्यंतवैराग्यवतः समाधिः समाहितस्यैव दृढप्रबोधः ।
प्रबुद्धतत्त्वस्य हि बंधमुक्तिर्मुक्तात्मनो नित्यसुखानुभूतिः ॥ ३७६ ॥
वैराग्यान्न परं सुखस्य जनकं पश्यामि वश्यात्मन-
स्तच्चेच्छुद्धतरात्मबोधसहितं स्वाराज्यसाम्राज्यधुक् ।
एतद् द्वारमजस्रमुक्तियुवतेर्यस्मात्त्वमस्मात्परं
सर्वत्रास्पृहया सदात्मनि सदा प्रज्ञां कुरु श्रेयसे ॥ ३७७ ॥
आशां छिंधि विषोपमेषु विषयेष्वेषैव मृत्योः सृति-
स्त्यक्त्वा जातिकुलाश्रमेष्वभिमतिं मुंचातिदूरात्क्रियाः ।

देहादावसति त्यजात्मधिषणां प्रज्ञां कुरुष्वात्मनि
त्वं द्रष्टास्यमलोऽसि निर्द्वयपरं ब्रह्मासि यद्वस्तुतः ॥ ३७८ ॥
लक्ष्ये ब्रह्मणि मानसं दृढतरं संस्थाप्य बाह्येंद्रियं
स्वस्थाने विनिवेश्य निश्चलतनुश्चोपेक्ष्य देहस्थितिम् ।
ब्रह्मात्मैक्यमुपेत्य तन्मयतया चाखंडवृत्त्यानिशं
ब्रह्मानंदरसं पिबात्मनि मुदा शून्यैः किमन्यैर्भ्रमैः ॥ ३७९ ॥
अनात्मचिंतनं त्यक्त्वा कश्मलं दुःखकारणम् ।
चिंतयात्मानमानंदरूपं यन्मुक्तिकारणम् ॥ ३८० ॥
एष स्वयंज्योतिरशेषसाक्षी विज्ञानकोशे विलसत्यजस्रम् ।
लक्ष्यं विधायैनमसद्विलक्षणमखंडवृत्त्यात्मतयानुभावय ॥ ३८१ ॥
एतमच्छिन्नया वृत्त्या प्रत्ययांतरशून्यया ।
उल्लेखयन्विजानीयात्स्वस्वरूपतया स्फुटम् ॥ ३८२ ॥
अत्रात्मत्वं दृढीकुर्वन्नहमादिषु संत्यजन् ।
उदासीनतया तेषु तिष्ठेद्घटपटादिवत् ॥ ३८३ ॥
विशुद्धमंतःकरणं स्वरूपे निवेश्य साक्षिण्यवबोधमात्रे ।
शनैः शनैर्निश्चलतामुपानयन्पूर्णं स्वमेवानुविलोकयेत्ततः ॥३८४॥
देहेंद्रियप्राणमनोऽहमादिभिः स्वाज्ञानक्लृप्तैरखिलैरुपाधिभिः ।
विमुक्तमात्मानमखंडरूपं पूर्णं महाकाशमिवावलोकयेत् ॥ ३८५ ॥
घटकलशकुसूलसूचिमुख्यैर्गगनमुपाधिशतैर्विमुक्तमेकम् ।
भवति न विविधं तथैव शुद्धं परमहमादिविमुक्तमेकमेव ॥३८६॥
ब्रह्मादिस्तंबपर्यंता मृषामात्रा उपाधयः ।
ततः पूर्णं स्वमात्मानं पश्येदेकात्मना स्थितम् ॥ ३८७ ॥
यत्र भ्रांत्या कल्पितं यद्विवेके तत्तन्मात्रं नैव तस्माद्विभिन्नम् ।
भ्रांतेर्नाशे भ्रांतिदृष्टाहितत्त्वं रज्जुस्तद्वद्विश्वमात्मस्वरूपम ॥३८८॥
स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिंद्रः स्वयं शिवः ।

स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन ॥ ३८९ ॥
अंतः स्वयं चापि बहिः स्वयं च स्वयं पुरस्तात्स्वयमेव पश्चात् ।
स्वयं ह्यवाच्यां स्वयमप्युदीच्यां तथोपरिष्टात्स्वयमप्यधस्तात् ॥ ३९० ॥
तरंगफेनभ्रमबुद्बुदादि सर्वं स्वरूपेण जलं यथा तथा ।
चिदेव देहाद्यहमंतमेतत्सर्वं चिदेवैकरसं विशुद्धम् ॥ ३९१ ॥
सदेवेदं सर्वं जगदवगतं वाङ्मनसयोः
सतोऽन्यन्नास्त्येव प्रकृतिपरसीम्नि स्थितवतः ।
पृथक् किं मृत्स्नायाः कलशघटकुंभाद्यवगतं
वदत्येष भ्रांतस्त्वमहमिति मायामदिरया ॥ ३९२ ॥
क्रियासमभिहारेण यत्र नान्यदिति श्रुतिः ।
ब्रवीति द्वैतराहित्यं मिथ्याध्यासनिवृत्तये ॥ ३९३ ॥
आकाशवन्निर्मलनिर्विकल्पनिःसीमनिष्पंदननिर्विकारम् ।
अंतर्बहिःशून्यमनन्यमद्वयं स्वयं परं ब्रह्म किमस्ति बोध्यम् ॥ ३९४ ॥
वक्तव्यं किमु विद्यतेऽत्र बहुधा ब्रह्मैव जीवः स्वयं
ब्रह्मैतज्जगदाततं नु सकलं ब्रह्माद्वितीयं श्रुतेः ।
ब्रह्मैवाहमिति प्रबुद्धमतयः संत्यक्तबाह्याः स्फुटं
ब्रह्मीभूय वसंति संततचिदानंदात्मनैव ध्रुवम् ॥ ३९५ ॥
जहि मलमयकोशेऽहंधियोत्थापिताशां
प्रसभमनिलकल्पे लिंगदेहेऽपि पश्चात् ।
निगमगदितकीर्तिं नित्यमानंदमूर्तिं
स्वयमिति परिचीय ब्रह्मरूपेण तिष्ठ ॥ ३९६ ॥
शवाकारं यावद्भजति मनुजस्तावदशुचिः
परेभ्यः स्यात्क्लेशो जननमरणव्याधिनिलयः ।
यदात्मानं शुद्धं कलयति शिवाकारमचलं
तदा तेभ्यो मुक्तो भवति हि तदाह श्रुतिरपि ॥ ३९७ ॥

स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ।
स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ ३९८ ॥

समाहितायां सति चित्तवृत्तौ परात्मनि ब्रह्मणि निर्विकल्पे ।
न दृश्यते कश्चिदयं विकल्पः प्रजल्पमात्रः परिशिष्यते ततः ॥ ३९९ ॥

असत्कल्पो विकल्पोऽयं विश्वमित्येकवस्तुनि ।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ ४०० ॥

द्रष्टृदर्शनदृश्यादिभावशून्यैकवस्तुनि ।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ ४०१ ॥

कल्पार्णव इवात्यंतपरिपूर्णैकवस्तुनि ।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ ४०२ ॥

तेजसीव तमो यत्र प्रलीनं भ्रांतिकारणम् ।
अद्वितीये परे तत्त्वे निर्विशेषे भिदा कुतः ॥ ४०३ ॥

एकात्मके परे तत्त्वे भेदवार्ता कथं वसेत् ।
सुषुप्तौ सुखमात्रायां भेदः केनावलोकितः ॥ ४०४ ॥

नह्यस्ति विश्वं परतत्त्वबोधात्सदात्मनि ब्रह्मणि निर्विकल्पे ।
कालत्रये नाप्यहिरीक्षितो गुणे नह्यंबुबिंदुर्मृगतृष्णिकायाम् ॥ ४०५ ॥

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।
इति ब्रूते श्रुतिः साक्षात्सुषुप्तावनुभूयते ॥ ४०६ ॥

अनन्यत्वमधिष्ठानादारोप्यस्य निरीक्षितम् ।
पंडितै रज्जुसर्पादौ विकल्पो भ्रांतिजीवनः ॥ ४०७ ॥

चित्तमूलो विकल्पोऽयं चित्ताभावे न कश्चन ।
अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ ४०८ ॥

किमपि सततबोधं केवलानंदरूपं
निरुपममतिवेलं नित्यमुक्तं निरीहम् ।
निरवधि गगनाभं निष्कलं निर्विकल्पं

हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥ ४०९ ॥
प्रकृतिविकृतिशून्यं भावनातीतभावं
समरसमसमानं मानसंबंधदूरम् ।
निगमवचनसिद्धं नित्यमस्मत्प्रसिद्धं
हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥ ४१० ॥
अजरममरमस्ताभासवस्तुस्वरूपं
स्तिमितसलिलराशिप्रख्यमाख्याविहीनम् ।
शमितगुणविकारं शाश्वतं शांतमेकं
हृदि कलयति विद्वान्ब्रह्म पूर्णं समाधौ ॥ ४११ ॥
समाहितांतःकरणः स्वरूपे विलोकयात्मानमखंडवैभवम् ।
विच्छिंधि बंधं भवगंधगंधितं यत्नेन पुंस्त्वं सफलीकुरुष्व ॥४१२॥
सर्वोपाधिविनिर्मुक्तं सच्चिदानंदमद्वयम् ।
भावयात्मानमात्मस्थं न भूयः कल्पसेऽध्वने ॥ ४१३ ॥
छायेव पुंसः परिदृश्यमानमाभासरूपेण फलानुभूत्या ।
शरीरमाराच्छववन्निरस्तं पुनर्न संधत्त इदं महात्मा ॥ ४१४ ॥
सततविमलबोधानंदरूपं समेत्य
त्यज जडमलरूपोपाधिमेतं सुदूरे ।
अथ पुनरपि नैष स्मर्यतां वांतवस्तु
स्मरणविषयभूतं कल्पते कुत्सनाय ॥ ४१५ ॥
समूलमेतत्परिदह्य वह्नौ सदात्मनि ब्रह्मणि निर्विकल्पे ।
ततः स्वयं नित्यविशुद्धबोधानंदात्मना तिष्ठति विद्वरिष्ठः ॥ ४१६ ॥
प्रारब्धसूत्रग्रथितं शरीरं प्रयातु वा तिष्ठतु गोरिव स्रक् ।
न तत्पुनः पश्यति तत्त्ववेत्ताऽऽनंदात्मनि ब्रह्मणि लीनवृत्तिः ॥ ४१७ ॥
अखंडानंदमात्मानं विज्ञाय स्वस्वरूपतः ।
किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति तत्त्ववित् ॥ ४१८ ॥

संसिद्धस्य फलं त्वेतज्जीवन्मुक्तस्य योगिनः ।
बहिरंतः सदानंदरसास्वादनमात्मनि ॥ ४१९ ॥
वैराग्यस्य फलं बोधो बोधस्योपरतिः फलम् ।
स्वानंदानुभवाच्छांतिरेषैवोपरतेः फलम् ।। ४२० ।।
यद्युत्तरोत्तराभावः पूर्वपूर्वं तु निष्फलम् ।
निवृत्तिः परमा तृप्तिरानंदोऽनुपमः स्वतः ॥ ४२१ ॥
दुष्टदुःखेष्वनुद्वेगो विद्यायाः प्रस्तुतं फलम् ।
यत्कृतं भ्रांतिवेलायां नानाकर्म जुगुप्सितम् ।
पश्चान्नरो विवेकेन तत्कथं कर्तुमर्हति ॥ ४२२ ॥
विद्याफलं स्यादसतो निवृत्तिः प्रवृत्तिरज्ञानफलं तदीक्षितम् ।
तज्ज्ञाज्ञयोर्यन्मृगतृष्णिकादौ नो चेद्विदो दृष्टफलं किमस्मात् ।। ४२३ ॥
अज्ञानहृदयग्रंथेर्विनाशो यद्यशेषतः ॥
अनिच्छोर्विषयः किं   प्रवृत्तेः कारणं स्वतः ।। ४२४ ॥
वासनानुदयो भोग्ये वैराग्यस्य परोऽवधिः ।
अहंभावोदयाभावो बोधस्य परमोऽवधिः ।
लीनवृत्तेरनुत्पत्तिर्मर्यादोपरतेस्तु सा ॥ ४२५ ॥
ब्रह्माकारतया सदा स्थिततया निर्मुक्तबाह्यार्थधी-
रन्यावेदितभोग्यभोगकलनो निद्रालुवद्बालवत् ।
स्वप्नालोकितलोकवज्जगदिदं पश्यन्कचिल्लब्धधी-
रास्ते कश्चिदनंतपुण्यफलभुग्धन्यः स मान्यो भुवि ।। ४२६ ।।
स्थितप्रज्ञो यतिरयं यः सदानंदमश्नुते ।
ब्रह्मण्येव विलीनात्मा निर्विकारो विनिष्क्रियः ॥ ४२७ ॥
ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी ।
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ।
सा सर्वदा भवेद्यस्य स्थितप्रज्ञः स उच्यते ॥ ४२८ ॥

यस्य स्थिता भवेत्प्रज्ञा यस्यानंदो निरंतरः ।
प्रपंचो विस्मृतप्रायः स जीवन्मुक्त इष्यते ४२९ ॥
लीनधीरपि जागर्ति यो जाग्रद्धर्मवर्जितः ।
बोधो निर्वासनो यस्य स जीवन्मुक्त इष्यते ॥ ४३० ॥
शांतसंसारकलनः कलावानपि निष्कलः ।
यस्य चित्तं विनिश्चिंतं स जीवन्मुक्त इष्यते ॥४३१॥
वर्तमानेऽपि देहेऽस्मिञ्छायावदनुवर्तिनि ।
अहंताममताभावो जीवन्मुक्तस्य लक्षणम् ॥४३२॥
अतीताननुसंधानं भविष्यदविचारणम् ।
औदासीन्यमपि प्राप्ते जीवन्मुक्तस्य लक्षणम् ॥४३३॥
गुणदोषविशिष्टेऽस्मिन्स्वभावेन विलक्षणे ।
सर्वत्र समदर्शित्वं जीवन्मुक्तस्य लक्षणम् ॥४३४॥
इष्टानिष्टार्थसंप्राप्तौ समदर्शितयाऽऽत्मनि ।
उभयत्राविकारित्वं जीवन्मुक्तस्य लक्षणम् ॥४३५॥
ब्रह्मानंदरसास्वादासक्तचित्ततया यतेः ।
अंतर्बहिरविज्ञानं जीवन्मुक्तस्य लक्षणम् ॥४३६॥
देहेंद्रियादौ कर्तव्ये ममाहंभाववर्जितः ।
औदासीन्येन यस्तिष्ठेत्स जीवन्मुक्तलक्षणः ॥४३७॥
विज्ञात आत्मनो यस्य ब्रह्मभावः श्रुतेर्बलात् ।
भवबंधविनिर्मुक्तः स जीवन्मुक्तलक्षणः ॥४३८॥
देहेंद्रियेष्वहंभाव इदंभावस्तदन्यके ।
यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥४३९॥
न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ।
प्रज्ञया यो विजानाति स जीवन्मुक्तलक्षणः ॥४४०॥
साधुभिः पूज्यमानेऽस्मिन्पीड्यमानेऽपि दुर्जनैः ।

समभावो भवेद्यस्य स जीवन्मुक्तलक्षणः ॥४४१॥
यत्र प्रविष्टा विषयाः परेरिता नदीप्रवाहा इव वारिराशौ ।
लिनंति सन्मात्रतया न विक्रियामुत्पादयंत्येष यतिर्विमुक्तः॥४४२॥
विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः ।
अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥४४३॥
प्राचीनवासनावेगादसौ संसरतीति चेत् ।
न सदेकत्वविज्ञानान्मंदीभवति वासना ॥४४४॥
अत्यंतकामुकस्यापि वृत्तिः कुंठति मातरि ।
तथैव ब्रह्मणि ज्ञाते पूर्णानंदे मनीषिणः ॥४४५॥
निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते ।
ब्रवीति श्रुतिरेतस्य प्रारब्धं फलदर्शनात् ॥४४६॥
सुखाद्यनुभवो यावत्तावत्प्रारब्धमिष्यते ।
फलोदयः क्रियापूर्वो निष्क्रियो न हि कुत्रचित् ॥४४७॥
अहं ब्रह्मेति विज्ञानात्कल्पकोटिशतार्जितम् ।
संचितं विलयं याति प्रबोधात्स्वप्नकर्मवत् ॥४४८॥
यत्कृतं स्वप्नवेलायां पुण्यं वा पापमुल्बणम् ।
सुप्तोत्थितस्य किं तत्स्यात्स्वर्गाय नरकाय वा ॥४४९॥
स्वमसंगमुदासीनं परिज्ञाय नभो यथा ।
न श्लिष्यते यतिः किंचित्कदाचिद्भाविकर्मभिः ॥४५०॥
न नभो घटयोगेन सुरागंधेन लिप्यते ।
तथात्मोपाधियोगेन तद्धर्मैर्नैव लिप्यते ॥४५१॥
ज्ञानोदयात्पुरारब्धं कर्म ज्ञानान्न नश्यति ।
अदत्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥४५२॥
व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ ।
न तिष्ठति छिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥४५३॥

प्रारब्धं बलवत्तरं खलु विदां भोगेन तस्य क्षयः
सम्यग्ज्ञानहुताशनेन विलयः प्राक्संचितागामिनाम्
ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया ये सर्वदा संस्थिता-
स्तेषां तत्त्रतयं नहि क्वचिदपि ब्रह्मैव ते निर्गुणम।।४५४।।

उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः ।
प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसंबंधकथेव जाग्रतः ।। ४५५ ।।

नहि प्रबुद्धः प्रतिभासदेहे देहोपयोगिन्यपि च प्रपंचे ।
करोत्यहंतां ममतामिदंतां किंतु स्वयं तिष्ठति जागरेण ।। ४५६ ।।

न तस्य मिथ्यार्थसमर्थनेच्छा न संग्रहस्तज्जगतोऽपि दृष्टः ।
तत्रानुवृत्तिर्यदि चेन्मृषार्थे न निद्रया मुक्त इतीष्यते ध्रुवम् ।। ४५७ ।।

तद्वत्परे ब्रह्मणि वर्तमानः सदात्मना तिष्ठति नान्यदीक्षते ।
स्मृतिर्यथा स्वप्नविलोकितार्थे तथा विदः प्राशनमोचनादौ ।। ४५८ ।।

कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यताम् ।
नानादेरात्मनो युक्तं नैवात्मा कर्मनिर्मितः ।।४५९ ।।

अजो नित्यः शाश्वत इति ब्रूते श्रुतिरमोघवाक् ।
तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ।। ४६० ।।

प्रारब्धं सिध्यति सदा यदा देहात्मना स्थितिः ।
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ।
शरीरस्यापि प्रारब्धकल्पना भ्रांतिरेव हि ।। ४६१ ।।

अध्यस्तस्य कुतः सत्त्वमसत्त्वस्य कुतो जनिः ।
अजातस्य कुतो नाशः प्रारब्धमसतः कुतः ।। ४६२ ।।

ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ।
तिष्ठत्ययं कथं देह इति शंकावतो जडान् ।
समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ।। ४६३ ।।

न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ।

यतः श्रुतेरभिप्रायः परमार्थैकगोचरः ॥ ४६४ ॥
परिपूर्णमनाद्यंतमप्रमेयमविक्रियम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६५ ॥
सद्घनं चिद्घनं नित्यमानंदघनमक्रियम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६६ ॥
प्रत्यगेकरसं पूर्णमनंतं सर्वतोमुखम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६७ ॥
अहेयमनुपादेयमनादेयमनाश्रयम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६८ ॥
निर्गुणं निष्कलं सूक्ष्मं निर्विकल्पं निरंजनम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४६९ ॥
अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४७० ॥
सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४७१ ॥
निरस्तरागा विनिरस्तभोगाः शांताः सुदांता यतयो महांतः ।
विज्ञाय तत्त्वं परमेतदंते प्राप्ताः परां निर्वृतिमात्मयोगात् ॥ ४७२ ॥
भवानपीदं परतत्त्वमात्मनः स्वरूपमानंदघनं विचार्य ।
विधूय मोहं स्वमनःप्रकल्पितं मुक्तः कृतार्थो भवतु प्रबुद्धः ॥ ४७३ ॥
समाधिना साधु विनिश्चलात्मना पश्यात्मतत्त्वं स्फुटबोधचक्षुषा ।
निःसंशयं सम्यगवेक्षितश्चेच्छ्रुतः पदार्थो न पुनर्विकल्पते ॥ ४७४ ॥
स्वस्याविद्याबंधसंबंधमोक्षात्सत्यज्ञानानंदरूपात्मलब्धौ ।
शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणं चांतःसिद्धा स्वानुभूतिः प्रमाणम् ॥ ४७५ ॥
बंधो मोक्षश्च तृप्तिश्च चिंतारोग्यक्षुधादयः ।
स्वेनैव वेद्या यज्ज्ञानं परेषामानुमानिकम् ॥ ४७६ ॥

तटस्थिता बोधयंति गुरवः श्रुतयो यथा ।
प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया ॥ ४७७ ॥
स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखंडितम् ।
संसिद्धः संमुखं तिष्ठेन्निर्विकल्पात्मनात्मनि ॥ ४७८ ॥
वेदांतसिद्धांतनिरुक्तिरेषा ब्रह्मैव जीवः सकलं जगच्च ।
अखंडरूपस्थितिरेव मोक्षो ब्रह्माद्वितीयं श्रुतयः प्रमाणम् ॥ ४७९ ॥
इति गुरुवचनाच्छ्रुतिप्रमाणात्परमवगम्य सतत्त्वमात्मयुक्त्या ।
प्रशमितकरणः समाहितात्मा क्वचिदचलाकृतिरात्मनिष्ठितोऽभूत् ॥४८०॥
कंचित्कालं समाधाय परे ब्रह्मणि मानसम् ।
उत्थाय परमानंदादिदं वचनमब्रवीत् ॥ ४८१ ॥
बुद्धिर्विनष्टा गलिता प्रवृत्तिर्ब्रह्मात्मनोरेकतयाधिगत्या ।
इदं न जानेऽप्यनिदं न जाने किंवा कियद्वा सुखमस्त्यपारम् ४८२
वाचा वक्तुमशक्यमेव मनसा मंतुं न वा शक्यते
स्वानंदामृतपूरपूरितपरब्रह्मांबुधेर्वैभवम् ।
अंभोराशिविशीर्णवार्षिकशिलाभावं भजन्मे मनो
यस्यांशांशलवे विलीनमधुनानंदात्मना निर्वृतम् ॥ ४८३ ॥
क्व गतं केन वा नीतं कुत्र लीनमिदं जगत् ।
अधुनैव मया दृष्टं नास्ति किं महदद्भुतम् ॥ ४८४ ॥
किं हेयं किमुपादेयं किमन्यत्किं विलक्षणम् ।
अखंडानंदपीयूषपूर्णे ब्रह्ममहार्णवे ॥ ४८५ ॥
न किंचिदत्र पश्यामि न शृणोमि न वेद्म्यहम् ।
स्वात्मनैव सदानंदरूपेणास्मि विलक्षणः ॥ ४८६ ॥
नमो नमस्ते गुरवे महात्मने विमुक्तसंगाय सदुत्तमाय ।
नित्याद्वयानंदरसस्वरूपिणे भूम्ने सदापारदयांबुधाम्ने ॥ ४८७ ॥
यत्कटाक्षशशिसांद्रचंद्रिकापातधूतभवतापजश्रमः ।

प्राप्तवानहमखंडवैभवानंदमात्मपदमक्षयं क्षणात् ॥ ४८८ ॥

धन्योऽहं कृतकृत्योऽहं विमुक्तोऽहं भवग्रहात् ।
नित्यानंदस्वरूपोऽहं पूर्णोऽहं तदनुग्रहात् ॥ ४८९ ॥

असंगोऽहमनंगोऽहमलिंगोऽहमभंगुरः ।
प्रशांतोऽहमनंतोऽहममलोऽहं चिरंतनः ॥ ४९० ॥

अकर्ताहमभोक्ताहमविकारोऽहमक्रियः ।
शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ ४९१ ॥

द्रष्टुः श्रोतुर्वक्तुः कर्तुर्भोक्तुर्विभिन्न एवाहम् ।
नित्यनिरंतरनिष्क्रियनिःसीमासंगपूर्णबोधात्मा ॥ ४९२ ॥

नाहमिदं नाहमदोऽप्युभयोरवभासकं परं शुद्धम् ।
बाह्याभ्यंतरशून्यं पूर्णं ब्रह्माद्वितीयमेवाहम् ॥ ४९३ ॥

निरुपममनादितत्त्वं त्वमहमिदमद इति कल्पनादूरम् ।
नित्यानंदैकरसं सत्यं ब्रह्माद्वितीयमेवाहम् ॥ ४९४ ॥

नारायणोऽहं नरकांतकोऽहं पुरांतकोऽहं पुरुषोऽहमीशः ।
अखंडबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहं च निर्ममः ॥ ४९५ ॥

सर्वेषु भूतेष्वहमेव संस्थितो ज्ञानात्मनांतर्बहिराश्रयः सन् ।
भोक्ता च भोग्यं स्वयमेव सर्वं यद्यत्पृथग्दृष्टमिदंतया पुरा ॥ ४९६ ॥

मय्यखंडसुखांभोधौ बहुधा विश्ववीचयः ।
उत्पद्यंते विलीयंते मायामारुतविभ्रमात् ॥ ४९७ ॥

स्थूलादिभावा मयि कल्पिता भ्रमादारोपिता नु स्फुरणेन लोकैः ।
काले यथा कल्पकवत्सरायनर्त्वादयो निष्कलनिर्विकल्पे ॥४९८॥

आरोपितं नाश्रयदूषकं भवेत्कदापि मूढैर्मतिदोषदूषितैः ।
नार्द्रीकरोत्यूषरभूमिभागं मरीचिकावारिमहाप्रवाहः ॥ ४९९ ॥

आकाशवल्लेपविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम् ।
अहार्यवन्नित्यविनिश्चलोऽहमंभोधिवत्पारविवर्जितोऽहम् ॥ ५०० ॥

न मे देहेन संबंधो मेघेनेव विहायसः ।
अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तयः ॥ ५०१ ॥
उपाधिरायाति स एव गच्छति स एव कर्माणि करोति भुंक्ते ।
स एव जीर्यन्म्रियते सदाहं कुलाद्रिवन्निश्चल एव संस्थितः ॥ ५०२ ॥
न मे प्रवृत्तिर्न च मे निवृत्तिः सदैकरूपस्य निरंशकस्य ।
एकात्मको यो निबिडो निरंतरो व्योमेव पूर्णः स कथं नु चेष्टते ॥ ५०३॥
पुण्यानि पापानि निरिंद्रियस्य निश्चेतसो निर्विकृतेर्निराकृतेः ।
कुतो ममाखंडसुखानुभूतेर्ब्रूते ह्यनन्वागतमित्यपि श्रुतिः ॥ ५०४ ॥
छायया स्पृष्टमुष्णं वा शीतं वा सुष्ठु दुष्ठु वा ।
न स्पृशत्येव यत्किंचित्पुरुषं तद्विलक्षणम् ॥ ५०५ ॥
न साक्षिणं साक्ष्यधर्माः संस्पृशंति विलक्षणम् ।
अविकारमुदासीनं गृहधर्माः प्रदीपवत् ।
देहेंद्रियमनोधर्मा नैवात्मानं स्पृशन्त्यहो ॥ ५०६ ॥
रवेर्यथा कर्मणि साक्षिभावो वह्नेर्यथा दाहनियामकत्वम् ।
रज्जोर्यथारोपितवस्तुसंगस्तथैव कूटस्थचिदात्मनो मे ॥ ५०७ ॥
कर्तापि वा कारयितापि नाहं भोक्तापि वा भोजयितापि नाहम् ।
द्रष्टापि वा दर्शयितापि नाहं सोऽहं स्वयंज्योतिरनीदृगात्मा ॥ ५०८ ॥
चलत्युपाधौ प्रतिबिंबलौल्यमौपाधिकं मूढधियो नयंति ।
स्वबिंबभूतं रविवद्विनिष्क्रियं कर्तास्मि भोक्तास्मि हतोऽस्मि हेति ॥ ५०९
जले वापि स्थले वापि लुठत्येष जडात्मकः ।
नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ॥ ५१० ॥
कर्तृत्वभोक्तृत्वखलत्वमत्ततजडत्वबद्धत्वविमुक्ततादयः ।
बुद्धेर्विकल्पा न तु संति वस्तुतः स्वस्मिन्परे ब्रह्मणि केवलेऽद्वये ॥५११॥
संतु विहाराः प्रकृतेर्दशधा शतधा सहस्रधा वापि ।
किं मेऽसंगचितेस्तैर्न घनः क्वचिदंबरं स्पृशति ॥ ५१२ ॥

अव्यक्तादि स्थूलपर्यंतमेतद्विश्वं यत्राभासमात्रं प्रतीतम् ।
व्योमप्रख्यं सूक्ष्ममाद्यंतहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ ५१३॥
सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम् ।
नित्यं शुद्धं निश्चलं निर्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ ५१४ ॥
यत्प्रत्यस्ताशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम् ।
सत्यज्ञानानंतमानंदरूपं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ ५१५ ॥
निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः ।
निर्विकल्पोऽस्मि नित्योऽस्मि निरालंबोऽस्मि निर्द्वयः ॥ ५१६ ॥
सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः ।
केवलाखंडबोधोऽहमानंदोऽहं निरंतरः ॥ ५१७ ॥
स्वाराज्यसाम्राज्यविभूतिरेषा भवत्कृपाश्रीमहिमप्रसादात् ।
प्राप्ता मया श्रीगुरवे महात्मने नमो नमस्तेऽस्तु पुनर्नमोऽस्तु ॥ ५१८ ॥
महास्वप्ने मायाकृतजनिजरामृत्युगहने
भ्रमंतं क्लिश्यंतं बहुलतरतापैरनुदिनम् ।
अहंकारव्याघ्रव्यथितमिममत्यंतकृपया
प्रबोध्य प्रस्वापात्परमवितवान्मामसि गुरो ॥ ५१९॥
नमस्तस्मै सदेकस्मै कस्मैचिन्महसे नमः ।
यदेतद्विश्वरूपेण राजते गुरुराज ते ॥ ५२० ॥
इति नतमवलोक्य शिष्यवर्यं समधिगतात्मसुखं प्रबुद्धतत्त्वम् ।
प्रमुदितहृदयः स देशिकेंद्रः पुनरिदमाह वचः परं महात्मा ॥ ५२१ ॥
ब्रह्मप्रत्ययसंततिर्जगदतो ब्रह्मैव सत्सर्वतः
पश्याध्यात्मदृशा प्रशांतमनसा सर्वास्ववस्थास्वपि ।
रूपादन्यदवेक्षितं किमभितश्चक्षुष्मतां दृश्यते
तद्वद्ब्रह्मविदः सतः किमपरं बुद्धेर्विहारास्पदम् ॥ ५२२ ॥
कस्तां परानंदरसानुभूतिमुत्सृज्य शून्येषु रमेत विद्वान् ।

चंद्रे महाह्लादिनि दीप्यमाने चित्रेंदुमालोकयितुं क इच्छेत् ५२३
असत्पदार्थानुभवे न किंचिन्न ह्यस्ति तृप्तिर्न च दुःखहानिः ।
तदद्वयानंदरसानुभूत्या तृप्तः सुखं तिष्ठ सदात्मनिष्ठया ॥ ५२४ ॥

स्वमेव सर्वथा पश्यन्मन्यमानः स्वमद्वयम् ।
स्वानंदमनुभुंजानः कालं नय महामते ॥ ५२५ ॥

अखंडबोधात्मनि निर्विकल्पे विकल्पनं व्योम्नि पुरः प्रकल्पनम् ।
तदद्वयानंदमयात्मना सदा शांतिं परामेत्य भजस्व मौनम् ॥ ५२६ ॥

तूष्णीमवस्था परमोपशांतिर्बुद्धेरसत्कल्पविकल्पहेतोः ।
ब्रह्मात्मना ब्रह्मविदो महात्मनो यत्राद्वयानंदसुखं निरंतरम् ॥ ५२७ ॥

नास्ति निर्वासनान्मौनात्परं सुखकृदुत्तमम् ।
विज्ञातात्मस्वरूपस्य स्वानंदरसपायिनः ॥५२८॥

गच्छंस्तिष्ठन्नुपविशञ्छयानो वान्यथापि वा !
यथेच्छं च वसेद्विद्वानात्मारामः सदा मुनिः ॥५२९॥

न देशकालासनदिग्यमादिलक्ष्याद्यपेक्षा प्रतिबद्धवृत्तेः ।
संसिद्धतत्त्वस्य महात्मनोऽस्ति स्ववेदने का नियमाद्यपेक्षा ॥५३०॥

घटोऽयमिति विज्ञातुं नियमः कोऽन्वपेक्ष्यते ।
विना प्रमाणसुष्ठुत्वं यस्मिन्सति पदार्थधीः ॥ ५३१ ॥

अयमात्मा नित्यसिद्धः प्रमाणे सति भासते ।
न देशं नापि वा कालं न शुद्धिं वाप्यपेक्षते ॥ ५३२ ॥

देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् ।
तद्वद्ब्रह्मविदोऽप्यस्य ब्रह्माहमिति वेदनम् ॥ ५३३ ॥

भानुनेव जगत्सर्वं भासते यस्य तेजसा ।
अनात्मकमसत्तुच्छं किं नु तस्यावभासकम् ॥ ५३४ ॥

वेदशास्त्रपुराणानि भूतानि सकलान्यपि ।
येनार्थवंति तं किं नु विज्ञातारं प्रकाशयेत् ॥ ५३५ ॥

एष स्वयंज्योतिरनंतशक्तिरात्माऽप्रमेयः सकलानुभूतिः ।
यमेव विज्ञाय विमुक्तबंधो जयत्ययं ब्रह्मविदुत्तमोत्तमः ॥ ५३६ ॥
न खिद्यते नो विषयैः प्रमोदते न सज्यते नापि विरज्यते च ।
स्वस्मिन्सदा क्रीडति नंदति स्वयं निरंतरानंदरसेन तृप्तः ॥ ५३७ ॥
क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ।
तथैव विद्वान् रमते निर्ममो निरहं सुखी ॥ ५३८ ॥
चिंताशून्यमदैन्यभैक्षमशनं पानं सरिद्वारिषु
स्वातंत्र्येण निरंकुशा स्थितिरभीर्निद्रा श्मशाने वने ।
वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु शय्या मही
संचारो निगमांतवीथिषु विदां क्रीडा परे ब्रह्मणि ॥ ५३९ ॥
विमानमालंब्य शरीरमेतद्भुनक्त्यशेषान्विषयानुपस्थितान् ।
परेच्छया बालवदात्मवेत्ता योऽव्यक्तलिंगोऽननुषक्तबाह्यः ॥ ५४० ॥
दिगंबरो वापि च सांबरो वा त्वगंबरो वापि चिदंबरस्थः ।
उन्मत्तवद्वापि च बालवद्वा पिशाचवद्वापि चरत्यवन्याम् ॥ ५४१ ॥
कामान्निष्कामरूपी संश्चरत्येकचरो मुनिः ।
स्वात्मनैव सदा तुष्टः स्वयं सर्वात्मना स्थितः ॥ ५४२ ॥
क्वचिन्मूढो विद्वान्क्वचिदपि महाराजविभवः ।
क्वचिद्भ्रांतः सौम्यः क्वचिदजगराचारकलितः !
क्वचित्पात्रीभूतः क्वचिदवमतः क्वाप्यविदित-
श्चरत्येवं प्राज्ञः सततपरमानंदसुखितः ॥ ५४३ ॥
निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः ।
नित्यतृप्तोऽप्यभुंजानोऽप्यसमः समदर्शनः ॥ ५४४ ॥
अपि कुर्वन्नकुर्वाणश्चाभोक्ता फलभोग्यपि ।
शरीर्यप्यशरीर्येष परिच्छिन्नोऽपि सर्वगः ॥ ५४५ ॥
अशरीरं सदा संतमिमं ब्रह्मविदं क्वचित् ।

प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे ।। ५४६ ॥
स्थूलादिसंबंधवतोऽभिमानिनः सुखं च दुःखं च शुभाशुभे च ।
विध्वस्तबंधस्य सदात्मनो मुनेः कुतः शुभं वाप्यशुभं फलं वा ।। ५४७ ।।
तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः ।
ग्रस्त इत्युच्यते भ्रांत्या ह्यज्ञात्वा वस्तुलक्षणम् ।। ५४८ ।।
तद्वद्देहादिबंधेभ्यो विमुक्तं ब्रह्मवित्तमम् ।
पश्यंति देहिवन्मूढाः शरीराभासदर्शनात् ।। ५४९ ।।
अहिर्निर्ल्वयनीं वाऽयं मुक्त्वा देहं तु तिष्ठति ।
इतस्ततश्चाल्यमानो यत्किंचित्प्राणवायुना ।। ५५० ।।
स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् ।
दैवेन नीयते देहो यथाकालोपभुक्तिषु ।। ५५१ ।।
प्रारब्धकर्मपरिकल्पितवासनाभिः
संसारिवच्चरति भुक्तिषु मुक्तदेहः ।
सिद्धः स्वयं वसति साक्षिवदत्र तूष्णीं
चक्रस्य मूलमिव कल्पविकल्पशून्यः ।। ५५२ ।।
नैवेंद्रियाणि विषयेषु नियुंक्त एष
नैवापयुंक्त उपदर्शनलक्षणस्थः ।
नैव क्रियाफलमपीषदवेक्षते स
स्वानंदसांद्ररसपानसुमत्तचित्तः ।। ५५३ ।।
लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना ।
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ॥ ५५४ ॥
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ।
उपाधिनाशाद्ब्रह्मैव सद्ब्रह्माप्येति निर्द्वयम् ॥ ५५५॥
शैलूषो वेषसद्भावाभावयोश्च यथा पुमान् ।
तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः ॥ ५५६ ॥

यत्र क्वापि विशीर्णं सत्पर्णमिव तरोर्वपुः पतनात् ।
ब्रह्मीभूतस्य यतेः प्रागेव हि तच्चिदग्निना दग्धम् ॥ ५५७ ॥
सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानंदमयात्मना सदा ।
न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिंडविसर्जनाय ॥ ५५८ ॥
देहस्य मोक्षो नो मोक्षो न दंडस्य कमंडलोः ।
अविद्याहृदयग्रंथिमोक्षो मोक्षो यतस्ततः ॥ ५५९ ॥
कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे ।
पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम् ॥ ५६० ॥
पत्रस्य पुष्पस्य फलस्य नाशवद्देहेंद्रियप्राणधियां विनाशः ।
नैवात्मनः स्वस्य सदात्मकस्यानंदाकृतेर्वृक्षवदास्त चैषः ॥ ५६१ ॥
प्रज्ञानघन इत्यात्मलक्षणं सत्यसूचकम् ।
अनूद्यौपाधिकस्यैव कथयंति विनाशनम् ॥ ५६२ ॥
अविनाशी वा अरेऽयमात्मेति श्रुतिरात्मनः ।
प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु ॥ ५६३ ॥
पाषाणवृक्षतृणधान्यकटांबराद्या
दग्धा भवंति हि मृदेव यथा तथैव ।
देहेंद्रियासुमनआदि समस्तदृश्यं
ज्ञानाग्निदग्धमुपयाति परात्मभावम् ॥ ५६४ ॥
विलक्षणं यथा ध्वांतं लीयते भानुतेजसि ।
तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते ॥ ५६५ ॥
घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ५६६ ॥
क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ।
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ ५६७ ॥
एवं विदेहकैवल्यं सन्मात्रत्वमखंडितम् ।

ब्रह्मभावं प्रपद्यैष यतिर्नावर्तते पुनः ॥ ५६८ ॥
सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः ।
अमुष्य ब्रह्मभूतत्वाद्ब्रह्मणः कुत उद्भवः ॥ ५६९ ॥
मायाक्लृप्तौ बंधमोक्षौ न स्तः स्वात्मनि वस्तुतः ।
यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ ॥ ५७० ॥
नावृतेः सदसत्त्वाभ्यां वक्तव्ये बंधमोक्षणे ।
नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम् ।
यद्यस्त्यद्वैतहानिः स्याद्द्वैतं नो सहते श्रुतिः ॥ ५७१॥
बंधं च मोक्षं च मृषैव मूढा बुद्धेर्गुणं वस्तुनि कल्पयंति ।
दृगावृतिं मेघकृतां यथा रवौ यतोऽद्वयासंगचिदेकमक्षरम् ॥ ५७२ ॥
अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि ।
बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः ॥ ५७३ ॥
अतस्तौ मायया क्लृप्तौ बंधमोक्षौ न चात्मनि ।
निष्कले निष्क्रिये शांते निरवद्ये निरंजने ॥
अद्वितीये परे तत्त्वे व्योमवत्कल्पना कुतः ॥ ५७४ ॥
न निरोधो न चोत्पत्तिर्न बंधो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ५७५ ॥
सकलनिगमचूडास्वांतसिद्धांतरूपं
परमिदमतिगुह्यं दर्शितं ते मयाद्य ।
अपगतकलिदोषं कामनिर्मुक्तबुद्धिं
स्वसुतवदसकृत्वा भावयित्वा मुमुक्षुम् ॥ ५७६ ॥
इति श्रुत्वा गुरोर्वाक्यं प्रश्रयेण कृतानतिः ।
स तेन समनुज्ञातो ययौ निर्मुक्तबंधनः ॥ ५७७ ॥
गुरुरेवं सदानंदसिंधौ निर्मग्नमानसः ।
पावयन्वसुधां सर्वां विचचार निरंतरम् ॥ ५७८ ॥

इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् ।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥ ५७९ ॥
हितमिममुपदेशमाद्रियंतां विहितनिरस्तसमस्तचित्तदोषाः ।
भवसुखविरताः प्रशांतचित्ताः श्रुतिरसिका यतयो मुमुक्षवो ये ॥ ८० ॥
संसाराध्वनि तापभानुकिरणप्रोद्भूतदाहव्यथा-
खिन्नानां जलकांक्षया मरुभुवि श्रांत्या परिभ्राम्यताम् ।
अत्यासन्नसुधांबुधिं सुखकरं ब्रह्माद्वयं दर्शय-
न्त्येषा शंकरभारती विजयते निर्वाणसंदायिनी ॥ ५८१ ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ विवेकचूडामणिः समाप्तः ॥

---

श्रीमच्छंकराचार्यप्रणीता

# उपदेशसाहस्री।

-:o:-

## ( गद्यप्रबंधः प्रथमो भागः । )

### शिष्यप्रतिबोधविधिप्रकरणम् ॥१॥

अथ मोक्षसाधनोपदेशविधिं व्याख्यास्यामो मुमुक्षूणां श्रद्दधानानामर्थिनामर्थाय ॥१॥

तदिदं मोक्षसाधनं ज्ञानं साधनसाध्यादनित्यात्सर्वस्माद्विरक्ताय त्यक्तपुत्रवित्तलोकैषणाय प्रतिपन्नपरमहंसपारिव्राज्याय शमदमदयादियुक्ताय शास्त्रप्रसिद्धशिष्यगुणसंपन्नाय शुचये ब्राह्मणाय विधिवदुपसन्नाय शिष्याय जातिकर्मवृत्तविद्याभिजनैः परीक्षिताय ब्रूयात् पुनःपुनः यावद्ग्रहणं दृढीभवति ॥२॥

श्रुतिश्च— 'परीक्ष्य लोकान्...तत्त्वतो ब्रह्मविद्याम्—' इति। दृढगृहीता हि विद्या आत्मनः श्रेयसे संतत्यै च भवति। विद्यासंततिश्च प्राण्यनुग्रहाय भवति, नौरिव नदीं तितीर्षोः। शास्त्रं च— 'यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात् एतदेव ततो भूयः' इति। अन्यथा च ज्ञानप्राप्त्यभावात्—'आचार्यवान् पुरुषो वेद', 'आचार्याद्धैव विद्या विदिता', 'आचार्यः प्लावयिता तस्य सम्यग्ज्ञानं प्लव इहोच्यते' इत्यादिश्रुतिभ्यः, 'उपदेक्ष्यंति ते ज्ञानं' इत्यादिस्मृतेश्च ॥३॥

शिष्यस्य ज्ञानाग्रहणं च लिंगैर्बुद्ध्वा अग्रहणे हेतून् अधर्मलौकिकप्रमादनित्यानित्यविवेकविषयासंजातदृढपूर्वश्रुतत्वलोकचिंतावेक्षणजात्याद्य-

भिमानादीन् तत्प्रतिपक्षैः श्रुतिस्मृतिविहितैः अपनयेत् अक्रोधादिभिरहिंसादिभिश्च यमैः ज्ञानाविरुद्धैश्च नियमैः ॥४॥

अमानित्वादिगुणं च ज्ञानोपायं सम्यक् ग्राहयेत् ॥५॥

आचार्यस्तु ऊहापोहग्रहणधारणशमदमदयानुग्रहादिसंपन्नो लब्धागमो दृष्टादृष्टभोगेष्वनासक्तः त्यक्तसर्वकर्मसाधनो ब्रह्मवित् ब्रह्मणि स्थितोऽभिन्नवृत्तो दंभदर्पकुहकशाठ्यमायामात्सर्यानृताहंकारममत्वादिदोषवर्जितः । केवलपरानुग्रहप्रयोजनो विद्योपयोगार्थी । पूर्वमुपदिशेत्—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं,' 'यत्र नान्यत्पश्यति,' 'आत्मैवेदं सर्वम्', 'आत्मा वा इदमेक एवाग्र आसीत्', 'सर्वं खल्विदं ब्रह्म' इत्याद्याः आत्मैक्यप्रतिपादनपराः श्रुतीः ॥६॥

उपदिश्य च ग्राहयेत् ब्रह्मणो लक्षणम्––'य आत्माऽपहतपाप्मा,' 'यत्साक्षादपरोक्षाद्ब्रह्म,' 'योऽशनायापिपासे,' 'नेति नेति,' 'अस्थूलमनणु,' 'स एष नेति,' 'अदृष्टं द्रष्टृ,' 'विज्ञानमानंदम्,' 'सत्यं ज्ञानमनंतम्,' 'अदृश्येऽनात्म्ये,' 'स वा एष महानज आत्मा,' 'अप्राणो ह्यमनाः,' 'सबाह्याभ्यंतरो ह्यजः,' 'विज्ञानघन एव,' 'अनंतरमबाह्यम्,' 'अन्यदेव तद्विदितादथो अविदितात्,' 'आकाशो वै नाम' इत्यादिश्रुतिभिः॥७॥

स्मृतिभिश्च–– 'न जायते म्रियते वा,' 'नादत्ते कस्यचित्पापम्,' 'यथाऽऽकाशस्थितो नित्यम्' 'क्षेत्रज्ञं चापि मां विद्धि,' 'न सत्तन्नासदुच्यते ' 'अनादित्वान्निर्गुणत्वात्' 'समं सर्वेषु भूतेषु' 'उत्तमः पुरुषस्त्वन्यः' इत्यादिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रतिपादनपराभिः तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च ॥८॥

एवं श्रुतिस्मृतिभिः गृहीतपरमात्मलक्षणं शिष्यं संसारसागरादुत्तितीर्षुं पृच्छेत् कस्त्वमसि सोम्येति ॥९॥

स यदि ब्रूयात्–– ब्राह्मणपुत्रः अदोन्वयः ब्रह्मचार्यासम्––गृहस्थो

चा, इदानीमस्मि परमहंसपरिव्राद् संसारसागरात् जन्ममृत्युमहाग्राहात् उत्तितीर्षुरिति ॥१०॥

आचार्यो ब्रूयात्––इहैव तव सोम्य मृतस्य शरीरं वयोभिरद्यते मृद्भावं वापद्यते, तत्र कथं संसारसागरादुत्तर्तुमिच्छसीति । नहि नद्याः अवरे कूले भस्मीभूतो नद्याः पारं तरिष्यसीति ॥११॥

स यदि ब्रूयात्––अन्योऽहं शरीरात् । शरीरं तु जायते, म्रियते, वयोभिरद्यते, शस्त्राग्न्यादिभिश्च विनाश्यते, व्याध्यादिभिश्च प्रयुज्यते । तस्मिन् अहं स्वकृतधर्माधर्मवशात् पंक्षी नीडमिव प्रविष्टः पुनःपुनः शरीरविनाशे धर्माधर्मवशात् शरीरांतरं यास्यामि, पूर्वनीडविनाशे पक्षीव नीडांतरम् । एवमेवाहमनादौ संसारे देवमनुष्यतिर्यङ्निरयस्थानेषु पूर्वकर्मवशादुपात्तमुपात्तं शरीरं त्यजन् नवं नवं च । अन्यदुपाददानो, जन्ममरणप्रबंधचक्रे घटीयंत्रवत् स्वकर्मणा भ्राम्यमाणः, क्रमेणेदं शरीरमासाद्य,संसारचक्रभ्रमणात् अस्मान्निर्विण्णो, भगवंतमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमाय । तस्मान्नित्य एवाहं शरीरादन्यः, शरीराणि आगच्छंत्यपगच्छंति च वासांसीव पुरुषस्येति ॥१२॥

आचार्यो ब्रूयात्––साध्ववादीः सम्यक्पश्यसि । कथं मृषाऽवादीः ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यासम्, गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राडिति ॥१३॥

स यदि ब्रूयात्–– भगवन्, कथमहं मृषाऽवादिषमिति ॥१४॥

तं प्रति ब्रूयादाचार्यः–– यतस्त्वं भिन्नजात्यन्वयसंस्कारं शरीरं जात्यन्वयसंस्कारवर्जितस्यात्मनः प्रत्यभ्यज्ञासीः ब्राह्मणपुत्रोऽदोन्वय इत्यादिना वाक्येनेति ॥१५॥

स यदि पृच्छेत्––कथं भिन्नजात्यन्वयसंस्कारं शरीरं, कथं वा अहं जात्यन्वयसंस्कारवर्जित इति ॥१६॥

आचार्यो ब्रूयात्––शृणु सोम्य, यथेदं शरीरं त्वत्तो भिन्नं भिन्नजात्य-

न्वयसंस्कारं, त्वं च जात्यन्वयसंस्कारवर्जितः । इत्युक्त्वा तं स्मारयेत् स्मर्तुमर्हसि सोम्य, परमात्मानं सर्वात्मानं यथोक्तलक्षणं श्रावितोऽसि 'सदेव सोम्येदम्' इत्यादिभिः श्रुतिभिः स्मृतिभिश्च । लक्षणं च तस्य श्रुतिभिः स्मृतिभिश्च ॥१७॥

लब्धपरमात्मलक्षणस्मृतये ब्रूयात्——योऽसावाकाशनामा नामरूपाभ्यामर्थांतरभूतः, अशरीरः, अस्थूलादिलक्षणः, अपहतपाप्मत्वादिलक्षणश्च, सर्वैः संसारधर्मैः अनागंधितः 'यत्साक्षादपरोक्षाद्ब्रह्म,' 'य आत्मा सर्वांतरः' 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मंता अविज्ञातो विज्ञाता' नित्यविज्ञानस्वरूपः, अनंतरः, अबाह्यः, विज्ञानघन एव, परिपूर्णः आकाशवत्, अनंतशक्तिः, आत्मा सर्वस्य, अशनायादिवर्जितः, आविर्भावतिरोभाववर्जितश्च' स्वात्मविलक्षणयोः नामरूपयोः जगद्बीजभूतयोः स्वात्मस्थयोः तत्त्वान्यत्वाभ्यामनिर्वचनीययोः स्वसंवेद्ययोः सद्भावमात्रेणाचिंत्यशक्तित्वाद्व्याकर्ता अव्याकृतयोः ॥१८॥

ते नामरूपे अव्याकृते सती व्याक्रियमाणे तस्मादेतस्मादात्मन आकाशनामाकृती संवृत्ते । तच्चाकाशाख्यं भूतमनेन प्रकारेण परमात्मनः संभूतं प्रसन्नादिव सलिलान्मलमिव फेनम् । न सलिलं न च सलिलादत्यंतभिन्नं फेनम् । सलिलव्यतिरेकेणादर्शनात् । सलिलं तु स्वच्छं अन्यत्फेनान्मलरूपात् । एवं परमात्मा नामरूपाभ्यामन्यः फेनस्थानीयाभ्यां, शुद्धः प्रसन्नः तद्विलक्षणः । ते नामरूपे अव्याकृते सती व्याक्रियमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ॥१९॥

ततोऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायुभावमापद्येते, ततोऽप्यग्निभावं, अग्नेरब्भावं, ततः पृथ्वीभावं, इत्येवंक्रमेण पूर्वपूर्वभवस्योत्तरोत्तरानुप्रवेशेन पंच महाभूतानि पृथिव्यंतान्युत्पन्नानि । ततः पंचगुणविशिष्टा पृथ्वी । पृथ्व्याश्च पंचात्मक्यो व्रीहियवाद्या ओषधयो जायन्ते । ताभ्यो भक्षिताभ्यो लोहितं च शुक्रं च स्त्रीपुंसशरीरसंबंधि

जायते। तदुभयमृतुकाले अविद्याप्रयुक्तकामखजनिर्मथनोद्धृतं मंत्रसंस्कृतं गर्भाशये निषिच्यते। तत्स्वयोनिरसानुप्रवेशेन विवर्धमानं गर्भीभूतं नवमे दशमे वा मासि संजायते ॥२०॥

तज्जातं लब्धनामाकृतिकं जातकर्मादिभिः मंत्रसंस्कृतं पुनः उपनयनसंस्कारयोगेण ब्रह्मचारिसंज्ञं भवति। तदेव शरीरं पत्नीसंयोगसंस्कारयोगेण गृहस्थसंज्ञं भवति। तदेव वनस्थसंस्कारेण तापससंज्ञं भवति। तदेव क्रियाविनिवृत्तिनिमित्तसंस्कारेण परिव्राट्संज्ञं भवति। इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम् ॥२१॥

मनश्चेंद्रियाणि च नामरूपात्मकान्येव 'अन्नमयं हि सोम्य मनः' इत्यादिश्रुतिभ्यः ॥२२॥

कथं चाहं भिन्नजात्यन्वयसंस्कारवर्जित इत्येतच्छृणु— योऽसौ नामरूपयोर्व्याकर्ता नामरूपधर्मविलक्षणः स एव नामरूपे व्याकुर्वन् सृष्ट्वेदं शरीरं स्वयं संस्कारधर्मवर्जितो नामरूपे इह प्रविष्टः अन्यैरदृष्टः स्वयं पश्यन् तथाऽश्रुतः शृण्वन्— अमतो मन्वानो—अविज्ञातो विजानन् 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति। अस्मिन्नर्थे श्रुतयः सहस्रशः 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'अंतः प्रविष्टः शास्ता जनानाम्', 'स एष इह प्रविष्टः', 'एष त आत्मा', 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत', 'एष सर्वेषु भूतेषु गूढोऽऽत्मा', 'सेयं देवतैक्षत हंताहमिमास्तिस्रो देवताः' इत्याद्याः ॥२३॥

स्मृतयोऽपि 'आत्मैव देवताः सर्वाः' 'नवद्वारे पुरे देही', 'क्षेत्रज्ञं चापि मां विद्धि', 'समं सर्वेषु भूतेषु', 'उपद्रष्टानुमंता च', 'उत्तमः पुरुषस्त्वन्यः', 'अशरीरं शरीरेषु' इत्याद्याः। तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वमिति सिद्धम् ॥२४॥

स यदि ब्रूयात्— अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसारी—अन्योऽसौ मद्विलक्षणः असंसारी देवः, तमहं बल्युपहारनम-

स्कारादिभिः वर्णाश्रमकर्ममिश्राराध्य संसारसागरादुत्तितीर्षुरस्मि, कथमहं स एवेति ॥ २५ ॥

आचार्यो ब्रूयात्— 'नैवं सोम्य प्रतिपत्तुमर्हसि, प्रतिषिद्धत्वाद्भेदप्रतिपत्तेः' । कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह— 'अन्योऽसावन्योऽहमस्मीति न स वेद', 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवमाद्याः ॥२६॥

एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति ॥२७॥

अभेदप्रतिपत्तेश्च मोक्षं दर्शयंति सहस्रशः । 'स आत्मा तत्त्वमसि' इति परमात्मभावं विधाय 'आचार्यवान्पुरुषो वेद' इत्युक्त्वा 'तस्य तावदेव चिरम्' इति मोक्षं दर्शयंत्यभेदविज्ञानादेव । सत्याभिसंधस्यातस्करस्येव दाहाद्यभावदृष्टांतेन— संसाराभावं दर्शयंति भेददर्शनादसत्याभिसंधस्य संसारगमनं दर्शयंति तस्करस्येव दाहादिदृष्टांतेन ॥२८॥

'त इह व्याघ्रो वा' इत्यादिना च अभेददर्शनात् 'स स्वराड् भवति' इत्युक्त्वा तद्विपरीतेन भेददर्शनेन संसारगमनं दर्शयंति— 'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवंति' इति प्रतिशाखम् । तस्मात् मृषैवैवमवादीः ब्राह्मणपुत्रोऽदोन्वयः संसारी परमात्मविलक्षण इति ॥२९॥

तस्मात् प्रतिषिद्धत्वाद्भेददर्शनस्य, भेदविषयत्वाच्च कर्मोपादानस्य, कर्मसाधनत्वाच्च यज्ञोपवीतादेः कर्मसाधनोपादानस्य परमात्माऽभेदप्रतिपत्त्या प्रतिषेधः कृतो वेदितव्यः । कर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमात्माऽभेदप्रतिपत्तिविरुद्धत्वात् । संसारिणो हि कर्माणि विधीयंते तत्साधनानि च यज्ञोपवीतादीनि । न परमात्मनोऽभेददर्शिनः । भेददर्शनमात्रेण च ततोऽन्यत्वम् ॥३०॥

यदि कर्माणि कर्तव्यानि न निवर्तयिषितानि कर्मसाधनासंबंधिनः कर्मनिमित्तजात्याश्रमाद्यसंबंधिनश्च, परमात्मनश्च आत्मनैवाभेदप्रतिपत्तिं

नावक्ष्यत् 'स आत्मा तत्त्वमसि' इत्येवमादिभिर्निश्चितरूपैर्वाक्यैः, भेदप्रतिपत्तिनिंदां च नाभ्यधास्यत् 'एष नित्यो महिमा ब्राह्मणस्य', 'अनन्वागतं पुण्येनानन्वागतं पापेन', 'अत्र स्तेनोऽस्तेनः' इत्यादिना ॥३१॥

कर्मासंबंधिस्वरूपत्वं कर्मनिमित्तवर्णाद्यसंबंधरूपतां च नाभ्यधास्यत् कर्माणि च कर्मसाधनानि च यज्ञोपवीतादीनि यद्यपरितित्याजयिषितानि । तस्मात् ससाधनं कर्म परित्यक्तव्यं मुमुक्षुणा परमात्माऽभेददर्शनविरोधात् । आत्मा च पर एवेति प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥ ३२ ॥

स यदि ब्रूयात्— भगवन्, दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदना, अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम । परश्चायमात्मा, 'अयमात्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः' सर्वगंधरसवर्जितः श्रूयते सर्वश्रुतिषु स्मृतिषु च । कथं तद्विलक्षणः अनेकसंसारधर्मसंयुक्तः परमात्मानमात्मत्वेन च मां संसारिणं परमात्मत्वेन अग्निमिव शीतत्वेन प्रतिपद्येय ? संसारी च सन् सर्वाभ्युदयनिःश्रेयससाधने अधिकृतः, अभ्युदयनिःश्रेयससाधनानि कर्माणि तत्साधनानि च यज्ञोपवीतादीनि कथं परित्यजेयमिति ॥३३॥

तं प्रति ब्रूयात्— यदवोचो दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति, तदसत् । कस्मात् ? दह्यमाने छिद्यमान इव वृक्षे उपलब्धुरुपलभ्यमाने कर्माणि शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव वेदना । यत्र हि दाहः छेदो वा क्रियते तत्रैव व्यपदिशति दाहादिवेदनां लोकः, न वेदनां दाहाद्युपलब्धरीति । कथं ? क्व ते वेदनेति पृष्टः शिरसि मे वेदना उरसि उदरे इति वा यत्र दाहादिस्तत्रैव व्यपदिशति न तूपलब्धरीति । यद्युपलब्धरि वेदना स्यात् वेदनानिमित्तं वा दाहच्छेदादि वेदनाश्रयत्वेनोपदिशेद्दाहाद्याश्रयवत् ॥३४॥

स्वयं च नोपलभ्येत चक्षुर्गतरूपवत् । तस्मात् दाहच्छेदादिसमानाश्रयत्वेन उपलभ्यमानत्वाद्दाहादिवत् कर्मभूतैव वेदना । भावरूप-

त्वाच्च साश्रया तंडुलपाकवत् । वेदनासमानाश्रय एव तत्संस्कारः । स्मृतिसमानकाल एवोपलभ्यमानत्वात् । वेदनाविषयः तन्निमित्तविषयश्च द्वेषोऽपि संस्कारसमानाश्रय एव । तथा चोक्तम् 'रूपसंस्कारतुल्याऽऽधी रागद्वेषौ भयं च यत् ॥ गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा' ३५

किमाश्रयाः पुनः रूपादिसंस्कारादय इति । उच्यते—यत्र कामादयः। क्व पुनस्ते कामादयः ? 'कामः संकल्पो विचिकित्सा' इत्यादिश्रुतेः बुद्धावेव । तत्रैव रूपादिसंस्कारादयोऽपि 'कस्मिन्न रूपाणि प्रतिष्ठितानीति हृदये' इति श्रुतेः । 'कामा येऽस्य हृदि श्रिताः', 'तीर्णो हि यदा सर्वान् शोकान् हृदयस्य', 'असंगो ह्ययम्', 'तद्वा अस्यैतदतिच्छंदाः' इत्यादिश्रुतिभ्यः, 'अविकार्योऽयमुच्यते', 'अनादित्वान्निर्गुणत्वात्' इत्यादिभ्यः, इच्छाद्वेषादि च क्षेत्रस्यैव विषयस्य धर्मो नात्मन इति स्मृतिभ्यश्च, कर्मस्थैवाशुद्धिः नात्मस्था इति ॥३६॥

अतो रूपादिसंस्काराद्यशुद्धिसंबंधाभावात् न परस्मादात्मनो विलक्षणत्वमिति प्रत्यक्षादिविरोधाभावात् युक्तं पर एवात्माऽहमिति प्रतिपत्तुम्— 'तदात्मानमेवावेदहं ब्रह्मास्मि', 'एकधैवानुद्रष्टव्यम्', 'अहमेवाऽधस्तात्', 'आत्मैवाऽधस्तात्', 'सर्वमात्मानं पश्येत्' 'यत्र त्वस्य सर्वमात्मैव', 'इदं सर्वं यदयमात्मा', 'स एषोऽकलः', 'अनंतरमबाह्यम्', 'सबाह्याभ्यंतरो ह्यजः', 'ब्रह्मैवेदम्', 'एतया द्वारा प्रापद्यत', 'प्रज्ञानस्य नामधेयानि', 'सत्यं ज्ञानमनंतं ब्रह्म', 'तस्माद्वा एतस्मात्' 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी', 'अशरीरं शरीरेषु', 'न जायते म्रियते', 'स्वप्नांतं जागरितांतम्', 'स म आत्मेति विद्यात्', 'यस्तु सर्वाणि भूतानि', 'तदेजति तन्नैजति', 'वेनस्तत्पश्यन्', 'तदेवाग्निः', 'अहं मनुरभवं सूर्यश्च', 'अंतः प्रविष्टः शास्ता जनानाम्', 'सदेव सोम्य', 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुतिभ्यः ॥३७॥

स्मृतिभ्यश्च 'पूः प्राणिनः सर्व एव गुहाशयस्य', 'आत्मैव देवताः',

'नवद्वारे पुरे', 'समं सर्वेषु भूतेषु', 'विद्याविनयसंपन्ने', 'अविभक्तं विभक्तेषु', 'वासुदेवः सर्वम्' इत्यादिभ्यः एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ।।३८।।

स यदि ब्रूयात्—यदि भगवन्, 'अनंतरोऽबाह्यः' 'सबाह्याभ्यंतरो ह्यजः' 'कृत्स्नः प्रज्ञानघन एव' सैंधवघनवदात्मा सर्वमूर्तिभेदवर्जितः आकाशवदेकरसः, तर्हि किमिदं दृश्यते वा साध्यं साधनं वा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रतिपत्तिविषयं इति ।।३९।।

आचार्यो ब्रूयात्— अविद्याकृतमेतद्यदिदं दृश्यते श्रूयते वा, साध्यं साधनं साधकश्चेति परमार्थतस्त्वेक एवात्मा, अविद्यादृष्टेः अनेकवत् आभासते, तिमिरदृष्टया अनेकचंद्रवत् । 'यत्र वा अन्यदिव स्यात्', 'यत्र हि द्वैतमिव भवति तादितर इतरं पश्यति', 'मृत्योः स मृत्युमाप्नोति', 'अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पं अथ यदल्पं तन्मर्त्यमिति', 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'अन्योऽसावन्योऽहम्' इति भेददर्शननिंदोपपत्तेरविद्याकृतं द्वैतम् 'एकमेवाऽद्वितीयम्', 'यत्र त्वस्य', 'को मोहः कः शोकः' इत्याद्येकत्वविधिश्रुतिभ्यश्चेति ॥४०॥

यद्येवं भगवन्, किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते उत्पत्तिः प्रलयश्चेति ? ॥४१॥

अत्रोच्यते— अविद्यावतः उपात्तशरीरादिभेदस्य इष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयितुं शास्त्रं, न साध्यसाधनादिभेदं विधत्ते, अनिष्टरूपः संसारो हि स इति । तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयाद्येकत्वोपपत्तिप्रदर्शनेन ॥४२॥

अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः 'अनंतरमबाह्यम्', 'सबाह्याभ्यंतरो ह्यजः', 'सैंधवघनवत्', 'प्रज्ञानघन एवैक आत्मा', 'आका-

शवत्परिपूर्णः' इत्यत्रैव एका प्रज्ञा प्रतिष्ठा परमार्थदर्शिनो भवति । न साध्यसाधनोत्पत्तिप्रलयादिभेदेन अशुद्धिर्गंधोऽप्युपपद्यते ॥४३॥

तच्चैतत् परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्याभिमानकृतपांक्तरूपपुत्रवित्तलोकैषणादिभ्यो व्युत्थानं कर्तव्यम् । सम्यक्प्रत्ययविरोधात्तदभिमानस्य । भेददर्शनप्रतिषेधार्थोपपत्तिश्चोपपद्यते । नह्येकस्मिन्नात्मन्यसंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति । नह्यग्नौ शीतत्वबुद्धिः, शरीरे वा अजरामरणबुद्धिः । तस्मादविद्याकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥४४॥

-----

## कूटस्थाद्वयात्मबोधप्रकरणम् ॥२॥

सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चिद्ब्रह्मचारी जन्ममरणलक्षणात् संसारात् निर्विण्णो मुमुक्षुः विधिवदुपसन्नः पप्रच्छ— भगवन्, कथमहं संसारान्मोक्षिष्ये शरीरेंद्रियविषयवेदनावान्? जागरिते दुःखमनुभवामि तथा स्वप्नेऽनुभवामि च पुनः पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य । किमयमेव मम स्वभावः, किंवा अन्यस्वभावस्य सतो नैमित्तिकः इति । यदि अयमेव स्वभावः, न मे मोक्षाशा, स्वभावस्यावर्जनीयत्वात् । अथ नैमित्तिकः, निमित्तपरिहारे स्यान्मोक्षोपपत्तिः ॥४५॥

तं गुरुरुवाच— शृणु वत्स, न तवायं स्वभावः । किंतु नैमित्तिकः ॥४६॥

इति उक्तः शिष्य उवाच—किं निमित्तं, किं वा तस्य निवर्तकम्, को वा मम स्वभावः यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रतिपद्येयेति ॥४७॥

गुरुरुवाच—अविद्या निमित्तं, विद्या तस्या निवर्तिका । अविद्यायां निवृत्तायां तन्निमित्ताभावात् मोक्ष्यसे जन्ममरणलक्षणात् संसारात् । स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति ॥४८॥

शिष्य उवाच—का सा अविद्या, किंविषया वा, विद्या च का अविद्यानिवर्तिका यया स्वभावं प्रतिपद्येयेति ॥४९॥

गुरुरुवाच— त्वं परमात्मानं संतं असंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे, अकर्तारं संतं कर्तेति, अभोक्तारं संतं भोक्तेति, विद्यमानं च अविद्यमानमिति । इयमविद्या ॥५०॥

शिष्य उवाच-- यद्यप्यहं विद्यमानः तथापि न परमात्मा । कर्तृत्व-भोक्तृत्वलक्षणः संसारो मम स्वभावः, प्रत्यक्षादिभिः प्रमाणैः अनुभूयमानत्वात् । न अविद्यानिमित्तः अविद्यायाः आत्मविषयत्वानुपपत्तेः । अविद्या नाम अन्यस्मिन् अन्यधर्माध्यारोपणा, यथा प्रसिद्धं रजतं प्रसिद्धायां शुक्तिकायां, यथा प्रसिद्धं पुरुषं स्थाणावध्यारोपयति, प्रसिद्धं वा स्थाणुं पुरुषे । नाप्रसिद्धं प्रसिद्धे प्रसिद्धं वा अप्रसिद्धे । न चात्मन्यनात्मानमध्यारोपयति आत्मनः अप्रसिद्धत्वात् । तथा आत्मानं अनात्मनि आत्मनोऽप्रसिद्धत्वादेव ॥५१॥

तं गुरुरुवाच-- न, व्यभिचारात् । नहि वत्स, प्रसिद्धं प्रसिद्ध एवाध्यारोपयतीति नियंतुं शक्यम् । आत्मन्यध्यारोपणदर्शनात् । गौरोऽहं कृष्णोऽहमिति देहधर्मस्य अहंप्रत्ययविषये आत्मनि, अहंप्रत्ययविषयस्य च आत्मनः देहे अयमहमस्मीति ॥५२॥

शिष्य आह-- प्रसिद्ध एव तर्ह्यात्मा अहंप्रत्ययविषयतया देहश्च अयमिति । तत्रैवं सति प्रसिद्धयोरेव देहात्मनोरितरेतराध्यारोपणा स्थाणुपुरुषयोः शुक्तिकारजतयोरिव । तत्र कं विशेषमाश्रित्य भगवतोक्तं प्रसिद्धयोरितरेतराध्यारोपणेति नियंतुं न शक्यते इति ॥५३॥

गुरुराह-- शृणु । सत्यं प्रसिद्धौ देहात्मानौ । नतु स्थाणुपुरुषाविव विविक्तप्रत्ययविषयतया सर्वलोकप्रसिद्धौ । कथं तर्हि ? नित्यमेव निरंतराविविक्तप्रत्ययविषयतया । नहि अयं देहः, अयमात्मा, इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति यः कश्चित् । अतएव हि मोमुह्यते

लोकः आत्मानात्मविषये, एवमात्मा नैवमात्मा इति । इमं विशेषमाश्रित्यावोचं नैवं नियंतुं शक्यमिति ॥५४॥

ननु अविद्याऽध्यारोपितं, यत्र यत् तदसत् तत्र दृष्टं, यथा रजतं शुक्तिकायां, स्थाणौ पुरुषः, रज्ज्वां सर्पः, आकाशे तलमलिनत्वमित्यादि। तथा देहात्मनोरपि नित्यमेव निरंतराविविक्तप्रत्ययतया इतरेतराध्यारोपणा कृता स्यात् । तदितरेतरयोः नित्यमेव असत्त्वं स्यात् । यथा शुक्तिकादिषु अविद्याध्यारोपितानां रजतादीनां नित्यमेव अत्यंतासत्त्वं, तद्विपरीतानां च विपरीतेषु, तद्वत् देहात्मनोरविद्ययैव इतरेतराध्यारोपणा कृता स्यात् । तत्रैवं सति देहात्मनोरसत्त्वं प्रसज्येत । तच्चानिष्टं वैनाशिकपक्षत्वात् । अथ तद्विपर्ययेण देहः आत्मन्यविद्ययाऽध्यारोपितः देहस्यात्मनि सति असत्त्वं प्रसज्येत । तच्चानिष्टं प्रत्यक्षादिविरोधात् । तस्माद्देहात्मानौ नाविद्यया इतरेतरस्मिन् अध्यारोपितौ । कथं तर्हि,वंशस्तंभवन्नित्यसंयुक्तौ ॥५५॥

न । अनित्यत्वपरार्थत्वप्रसंगात् । संहतत्वात् परार्थत्वं अनित्यत्वं च वंशस्तंभादिवदेव । किंच यस्तु परैर्देहेन संहतः कल्पित आत्मा स संहतत्वात् परार्थः । तेन असंहतः परोऽन्यो नित्यः सिद्धस्तावत् ॥५६॥

तस्यासंहतस्य देहे देहमात्रतया अध्यारोपितत्वेन असत्त्वानित्यत्वादिदोषप्रसंगो भवति । तत्र निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥५७॥

न । स्वत एवात्मनः आकाशस्येव असंहतत्वाभ्युपगमात् । सर्वेणासंहतः स च आत्मेति न निरात्मको देहादिः सर्वः स्यात् । यथाच आकाशं सर्वेणासंहतमिति सर्वं न निराकाशं भवति एवम् । तस्मान्न वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥५८॥

यत्पुनरुक्तं देहस्यात्मन्यसत्त्वे प्रत्यक्षादिविरोधः स्यादिति । तन्न । प्रत्यक्षादिभिः आत्मनि देहस्य सत्त्वानुपलब्धेः । नह्यात्मनि कुंडे बदरं

क्षीरे सर्पिः तिले तैलं भित्तौ चित्रमिव च प्रत्यक्षादिभिः देह उपलभ्यते । तस्मान्न प्रत्यक्षादिविरोधः ॥५९॥

कथं तर्हि प्रत्यक्षाद्यप्रसिद्धात्मनि देहाध्यारोपणा, देहे च आत्मारोपणा ? ॥६०॥

नायं दोषः । स्वभावप्रसिद्धत्वादात्मनः । नहि कादाचित्कसिद्धावेव अध्यारोपणा न नित्यसिद्धौ इति नियंतुं शक्यं, आकाशे तलमलाद्यध्यारोपणदर्शनात् ॥६१॥

।किं भगवन्, देहात्मनोः इतरेतराध्यारोपणा देहादिसंघातकृता अथवा आत्मकृतेति ॥६२॥

गुरुरुवाच— यदि देहादिसंघातकृता यदि वा आत्मकृता ।किं तत्र स्यात् ? ॥६३॥

इत्युक्तः शिष्य आह— यद्यहं देहादिसंघातमात्रः ततो ममाचेतनत्वात् परार्थत्वमिति न मत्कृता देहात्मनोः इतरेतराध्यारोपणा । अथाहमात्मा परोऽन्यः संघातात् चितिमत्त्वात् स्वार्थ इति मयैव चितिमता आत्मानि अध्यारोपणा क्रियते सर्वानर्थबीजभूता ॥६४॥

इत्युक्तो गुरुरुवाच—अनर्थबीजभूतां चेत् मिथ्याध्यारोपणां जानीषे, मा कार्षीस्तर्हि ॥३५॥

नैव भगवन् शक्नोमि न कर्तुम् । अन्येन केनचित् प्रयुक्तोऽहं न स्वतंत्र इति ॥६५॥

न तर्हि अचितिमत्त्वात् स्वार्थः त्वम् । येन प्रयुक्तः अस्वतंत्रः प्रवर्तसे स चितिमान् स्वार्थः । संघात एव त्वम् ॥६७॥

यद्यचेतनोऽहं कथं सुखदुःखवेदनां भवदुक्तं च जानामि ॥६८॥

गुरुरुवाच— किं सुखदुःखवेदनाया मदुक्ताच्चान्यस्त्वं, किं वा अनन्य एवेति ॥६९॥

शिष्य उवाच— नाहं तावदनन्यः । कस्मात् ? यस्मात्तदुभयं

कर्मभूतं घटादिकमिव जानामि । यद्यनन्योऽहं तेन तदुभयं न जानीयां, किंतु जानामि, तस्मादन्यः । सुखदुःखवेदनविक्रिया च स्वार्थैव प्राप्नोति, त्वदुक्तं च स्यात् अनन्यत्वे । न च तयोः स्वार्थता युक्ता । नहि चंदनकंटककृते सुखदुःखे चंदनकंटकार्थे, घटोपयोगो वा घटार्थः । तस्मात् तद्विज्ञातुर्मम चंदनादिकृतः अर्थः । अहं हि ततोऽन्यः समस्तमर्थं जानामि बुद्ध्यारूढम् ॥७०॥

तं गुरुरुवाच-- एवं तर्हि स्वार्थस्त्वं चितिमत्त्वान्न परेण प्रयुज्यसे। नहि चितिमान् परतंत्रः परेण प्रयुज्यते— चितिमतश्चितिमदर्थत्वानुपपत्तेः समत्वात्प्रदीपप्रकाशयोरिव । नापि अचितिमदर्थत्वं चितिमतो भवति, अचितिमतोऽचितिमत्त्वादेव स्वार्थसंबंधानुपपत्तेः । नापि अचितिमतोः अन्योन्यार्थत्वं दृष्टम् । नहि काष्ठकुड्ये अन्योन्यार्थं कुर्वाते ॥ ७१ ॥

ननु चितिमत्त्वे समेऽपि भृत्यस्वामिनोः अन्योन्यार्थत्वं दृष्टम् ॥७२॥

नैवं— अग्नेरुष्णप्रकाशवत् तव चितिमत्त्वस्य विवक्षितत्वात् । प्रदर्शितश्च दृष्टांतः प्रदीपप्रकाशयोरिवेति । तत्रैवं सति स्वबुद्ध्यारूढमेव सर्वमुपलभसे अग्न्युष्णप्रकाशतुल्येन कूटस्थनित्यचैतन्यस्वरूपेण । यदि चैवमात्मनः सर्वदा निर्विशेषत्वमुपगच्छसि, किमित्यूचिवान् सुषुप्ते विश्रम्य विश्रम्य जाग्रत्स्वप्नयोः दुःखमनुभवामि इति । किं अयमेव मम स्वभावः किंवा नैमित्तिकः इति च । किमसौ व्यामोहोऽपगतः किंवा नेति ।.७३॥

इत्युक्तः शिष्य आह— भगवन्, अपगतः त्वत्प्रसादात् व्यामोहः, किंतु मम कूटस्थतायां संशयः । कथम्— शब्दादीनां स्वतः सिद्धिर्नास्ति, अचेतनत्वात् । शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषाम् । प्रत्ययानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्याकारवतां स्वतःसिद्ध्यसंभवात् । तस्माद्बाह्याकारनिमित्तत्वं गम्यते इति बाह्याकारवत् शब्दाद्याकारत्वसिद्धिः । तथा प्रत्ययानामपि अहंप्रत्ययालंबनवस्तुभेदानां संहतत्वात् अचैतन्योपपत्तेः । स्वार्थत्वासंभवात् स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः शब्दादिवदेव ।

असंहतत्वे सति चैतन्यात्मकत्वात् स्वार्थोऽपि अहंप्रत्ययानां नीलपीताद्याकाराणामुपलब्धेति विक्रियावानेव, कथं कूटस्थ, इति संशयः ॥७४॥

तं गुरुरुवाच— न युक्तस्तव संशयः । यतस्तेषां प्रत्ययानां नियमेन अशेषतः उपलब्धेरेव अपरिणामित्वात् कूटस्थत्वसिद्धौ निश्चयहेतुमेव अशेषचित्तप्रचारोपलब्धिं संशयहेतुमात्थ । यदि हि तव परिणामित्वं स्यात् अशेषस्वविषयचित्तप्रचारोपलब्धिर्न स्यात् चित्तस्येव स्वविषये । यथा चेंद्रियाणां स्वविषयेषु । नच तथा आत्मनस्तव स्वविषयैकदेशोपलब्धिः । अतः कूटस्थतैव तवेति ॥७५॥

तत्राह— उपलब्धिर्नाम धात्वर्थो विक्रियैव, उपलब्धुः कूटस्थात्मता चेति विरुद्धम् ॥७६॥

न धात्वर्थविक्रियायां उपलब्ध्युपचारात् । यो हि बौद्धः प्रत्ययः स धात्वर्थो विक्रियात्मकः आत्मनः उपलब्ध्याभासफलावसान इति उपलब्धिशब्देन उपचर्यते । यथा छिदिक्रिया द्वैधीभावफलावसानेति धात्वर्थेन उपचर्यते तद्वत् ॥७७॥

इत्युक्तः शिष्य आह–– ननु भगवन्, मम कूटस्थत्वप्रतिपादनं प्रति असमर्थो दृष्टांतः । कथम्, छिदिः छेद्यविक्रियावसाना उपचर्यते–– यथा धात्वर्थत्वेन तथा उपलब्धिशब्दोऽपचरितोऽपि धात्वर्थो बौद्धः प्रत्ययः आत्मनः उपलब्धिविक्रियावसानश्चेत् नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः ॥७८॥

गुरुरुवाच–– सत्यमेवं स्यात् यदि उपलब्ध्युपलब्धोः विशेषः । नित्योपलब्धिमात्र एव हि उपलब्धा । नतु तार्किकसमय इव अन्या उपलब्धिः अन्यः उपलब्धा च ॥७९॥

ननु उपलब्धिफलावसानो धात्वर्थः कथमिति ॥८०॥

उच्यते–– शृणु उपलब्ध्याभासफलावसान इत्युक्तं, किं न श्रुतं तत् त्वया ? नतु आत्मा विक्रियोत्पादनावसान इति मयोक्तम् ॥८१॥

शिष्य उवाच–– कथं तर्हि कूटस्थे मयि अशेषस्वविषयचित्तप्रचारोपलब्धृत्वमित्यात्थ ॥८२॥

तं गुरुरुवाच–– सत्यमवोचं, तेनैव कूटस्थतामब्रवं तव ॥८३॥

यद्येवं भगवन्, कूटस्थनित्योपलब्धिस्वरूपे मयि शब्दाद्याकारबौद्धप्रत्ययेषु च मत्स्वरूपोपलब्ध्याभासफलावसानवत्सु उत्पद्यमानेषु कस्त्वपराधो मम ॥८४॥

सत्यं नास्त्यपराधः किंतु अविद्यामात्रस्तु अपराध इति प्रागेवावोचम् ॥८५॥

यदि भगवन्, सुषुप्त इव मम विक्रिया नास्ति, कथं स्वप्नजागरिते ॥८६॥

तं गुरुरुवाच–– किंत्वनुभूयेते त्वया संततम् ॥८७॥

बाढम् अनुभवामि, किंतु विच्छिद्यविच्छिद्य नतु संततम् ॥८८॥

तं गुरुरुवाच–– तर्हि आगंतुके त्वेते, न तवात्मभूते । यदि तवात्मभूते, चैतन्यस्वरूपवत् स्वतःसिद्धे संतते एव स्याताम् । किंच स्वप्नजागरिते न तव आत्मभूते व्यभिचारित्वात् वस्त्रादिवत् । नहि यस्य यत्स्वरूपं तत् तद्व्यभिचारि दृष्टम् । स्वप्नजागरिते तु चैतन्यमात्रत्वाद्व्यभिचरतः । सुषुप्ते चेत् स्वरूपं व्यभिचरेत् तन्नष्टं नास्तीति वा बाध्यमेव स्यात् आगंतुकानां अतद्धर्माणां उभयात्मकत्वदर्शनात् । यथा धनवस्त्रादीनां नाशो दृष्टः स्वप्नभ्रांतिलब्धानां तु अभावो दृष्टः ॥८९॥

नन्वेवं भगवन्, चैतन्यस्वरूपमपि आगंतुकं प्राप्तम् । स्वप्नजागरितयोरिव सुषुप्ते अनुपलब्धेः । अचैतन्यस्वरूपो वा स्यामहम् ॥९०॥

न । पश्य । तदनुपपत्तेः । चैतन्यस्वरूपं चेत् आगंतुकं पश्यसि, पश्य । नैतद्वर्षशतेनापि उपपत्त्या कलयितुं शक्नुमो वयम्, अन्यो वाऽचैतन्योऽपि । तस्य संहतत्वात् पारार्थ्यं अनेकत्वं नाशित्वं च न केनचित् उपपत्त्या वारयितुं शक्यम् । अस्वार्थस्य स्वतःसिद्ध्यभावादित्यवोचाम ।

चैतन्यस्वरूपस्य तु आत्मनः स्वतःसिद्धेः अन्यानपेक्षत्वं न केनचित् वारयितुं शक्यम्, अव्यभिचारात् ॥ ९१ ॥

ननु व्यभिचारो दर्शितो मया सुषुप्ते न पश्यामीति ॥ ९२ ॥

न । व्याहतत्वात् । कथं व्याघातः ? पश्यतस्तव न पश्यामि इति व्याहतं वचनम् । नहि कदाचित् भगवन्, सुषुप्ते मया चैतन्यं अन्यद्वा किंचित् दृष्टम् । पश्यन् तर्हि सुषुप्ते त्वम् यस्मात् दृष्टमेव प्रतिषेधसि न दृष्टिम् । या तव दृष्टिः तत् चैतन्यमिति मयोक्तम् । यया त्वं विद्यमानया न किंचित् दृष्टमिति प्रतिषेधसि सा दृष्टिः त्वच्चैतन्यम् । तर्हि सर्वत्र अव्यभिचारात् कूटस्थनित्यत्वं सिद्धं स्वतः एव, न प्रमाणापेक्षम् । स्वतःसिद्धस्य हि प्रमातुः अन्यस्य प्रमेयस्य परिच्छित्तिं प्रति प्रमाणापेक्षा । या तु अन्या नित्या परिच्छित्तिः अपेक्ष्यते अन्यस्य अपरिच्छित्तिरूपस्य परिच्छेदाय सा हि नित्यैव कूटस्था स्वयंज्योतिःस्वभावा, आत्मनि प्रमाणत्वे प्रमातृत्वे वा न तां प्रति प्रमाणापेक्षा, तत्स्वभावत्वात् । यथा प्रकाशनं उष्णत्वं वा लोहोदकादिषु परतः अपेक्ष्यते अग्न्यादित्यादिभ्यः अतत्स्वभावत्वात् । न अग्न्यादित्यादीनां तदपेक्षा सर्वदा तत्स्वभावत्वात् ॥ ९३ ॥

अनित्यत्वे एव प्रमा स्यात् न नित्यत्वे इति चेत् ॥ ९४ ॥

न । अवगतेः नित्यत्वानित्यत्वयोः विशेषानुपपत्तेः । नहि अवगतेः प्रमात्वे अनित्या अवगतिः प्रमा न नित्या इति विशेषः अवगम्यते ॥ ९५ ॥

नित्यायां प्रमातुः अपेक्षाऽभावः । अनित्यायां तु यत्नांतरितत्वात् अवगतिः अपेक्ष्यत इति विशेषः स्यात् इति चेत् ॥ ९६ ॥

सिद्धा तर्हि आत्मनः प्रमातुः स्वतःसिद्धिः प्रमाणनिरपेक्षतयैवेति ॥ ९७ ॥

अभावेऽपि अपेक्षाऽभावः नित्यत्वात् इति चेत् ॥ ९८ ॥

न । अवगतेरेव आत्मनि सद्भावादिति परिहृतमेतत् प्रमातुश्चेत् प्रमाणा-

युक्त्याऽऽलोड्य व्यासवचांस्यत्र हि लभ्यः
क्षेत्रक्षेत्रज्ञान्तरविद्भिः पुरुषाख्यः ।
योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वांतविनाशं हरिमीडे ॥ २८ ॥
एकीकृत्यानेकशरीरस्थमिमं ज्ञं
यं विज्ञायेहैव स एवाशु भवन्ति ।
यस्मिंल्लीना नेह पुनर्जन्म लभन्ते
तं संसारध्वान्तविनाशं हरिमीडे ॥ २९ ॥
द्वंद्वैकत्वं यच्च मधुब्राह्मणवाक्यैः
कृत्वा शक्रोपासनमासाद्य विभूत्या ।
योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३० ॥
योऽयं देहे चेष्टयितान्तःकरणस्थः
सूर्ये चासौ तापयिता सोऽस्म्यहमेव ।
इत्यात्मैक्योपासनया यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३१ ॥
विज्ञानांशो यस्य सतः शक्त्यधिरूढो
बुद्धिर्बुध्यत्यत्र बहिर्बोध्यपदार्थान् ।
नैवान्तःस्थं बुध्यति यं बोधयितारं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३२ ॥
कोऽयं देहे देव इतीत्थं सुविचार्य
ज्ञाता श्रोताऽऽनंदयिता चैष हि देवः ।
इत्यालोच्य ज्ञांश इहास्मीति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३३ ॥
को ह्येवान्यादात्मनि न स्यादयमेष

ह्येवानंदः प्राणिति चापानिति चेति ।
इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३४ ॥
प्राणो वाऽहं वाक्श्रवणादीनि मनो वा
बुद्धिर्वाऽहं व्यस्त उताहोऽपि समस्तः ।
इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३५ ॥
नाहं प्राणो नैव शरीरं न मनोऽहं
नाहं बुद्धिर्नाहमहंकारधियौ च ।
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३६ ॥
सत्तामात्रं केवलविज्ञानमजं सत्
सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय ।
साम्नामंते प्राह पिता यं विभुमाद्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३७ ॥
मूर्तामूर्ते पूर्वमपोह्याथ समाधौ
दृश्यं सर्वं नेति च नेतीति विहाय ।
चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३८ ॥
ओतं प्रोतं यत्र च सर्वं गगनान्तं
योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः ।
ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्य-
स्तं संसारध्वान्तविनाशं हरिमीडे ॥ ३९ ॥
तावत्सर्वं सत्यमिवाभाति यदेत-
द्यावत्सोऽस्मीत्यात्मनि यो ज्ञो नहि दृष्टः ।

दृष्टे तस्मिन्सर्वमसत्यं भवतीदं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४०॥
रागामुक्तं लोहयुतं हेम यथाग्नौ।
योगाष्टांगैरुज्ज्वलितज्ञानमयाग्नौ।
दग्ध्वाऽऽत्मानं ज्ञं परिशिष्टं च विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४१ ॥
यं विज्ञानज्योतिषमाद्यं सुविभान्तं
हृद्यर्केंद्वग्न्येकसमीड्यं तडिदाभम्।
भक्त्याराध्येहैव विशन्त्यात्मनि सन्तं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४२ ॥
पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो
भक्त्या स्तौतीत्यांगिरसं विष्णुरिमं माम्।
इत्यात्मानं स्वात्मनि संहृत्य सदैक-
स्तं संसारध्वान्तविनाशं हरिमीडे ॥ ४३ ॥

———

# भक्तिस्तोत्राणि।



## शिवभुजंगप्रयातस्तोत्रम्।

गलद्दानगण्डं मिलद्भृंगखण्डं चलच्चारुशुंडं जगत्त्राणशौंडम्। लसद्दंतकांडं विपद्भंगचंडं शिवप्रेमपिंडं भजे वक्रतुंडम् ॥१॥ अनाद्यंतमाद्यं परं तत्त्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम्। हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महः शैवमीडे ॥ २ ॥ स्वशक्त्यादिशक्त्यंतसिंहासनस्थं मनोहारिसर्वांगरत्नादिभूषम्। जटाहींदुगंगास्थिशश्यर्कमौलिं परं शक्तिमित्रं नुमः पंचवक्त्रम् ॥३॥ शिवेशानतत्पूरुषाघोरवामादिभिर्ब्रह्मभिर्हृन्मुखैः षड्भिरंगैः। अनौपम्यषट्त्रिंशतं तत्त्वविद्यामतीतं परं त्वां कथं वेत्ति को वा ॥४॥ प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिश्रीमहःश्याममर्धम्। गुणस्यूतमेकं वपुश्चैकमंतः स्मरामि स्मरापत्तिसंपत्तिहेतुम् ॥५॥ स्वसेवासमायातदेवासुरेंद्रानमन्मौलिमंदारमालाभिषिक्तम्। नमस्यामि शंभो पदांभोरुहं ते भवांभोधिपोतं भवानीविभाव्यम् ॥५॥ जगन्नाथ मन्नाथ गौरीसनाथ प्रपन्नानुकंपिन्विपन्नार्तिहारिन्। महःस्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥७॥ महादेव देवेश देवादिदेव स्मरारे पुरारे यमारे हरेति। ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद ॥८॥ विरुपाक्ष विश्वेश विद्यादिकेश त्रयीमूल शंभो शिव त्र्यंबक त्वम्। प्रसीद स्मर त्राहि पश्याव पुष्य क्षमस्वाप्नुहीति क्षपा हि क्षिपामः ॥९॥ त्वदन्यः शरण्यः प्रपन्नस्य नेति प्रसीद स्मरन्नेव हन्यास्तु दैन्यम्। न चेत्ते भवेद्भक्तवात्सल्यहानिस्ततो मे दयालो दयां संनिधेहि ॥१०॥ अयं दानकालस्त्वहं दानपात्रं भवान्नाथ दाता त्वदन्यं न याचे। भवद्भक्तिमेव स्थिरां देहि मह्यं कृपाशील शंभो कृतार्थोऽस्मि तस्मात् ॥११॥ पशुं वेत्सि चेन्मां त्वमेवाधिरूढं कलंकीति वा मूर्ध्नि धत्से त्वमेव। द्विजिह्वः

पुनः सोपि ते कंठभूषा त्वदंगीकृताः सर्व सर्वेऽपि धन्याः ॥१२॥ न शक्नोमि कर्तुं परद्रोहलेशं कथं प्रीयसे त्वे न जाने गिरीश । तदा हि प्रसन्नोसि कस्यापि कान्तासुतद्रोहिणो वा पितृद्रोहिणो वा ॥१३॥ स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन्महेशावलंबे । त्रसन्तं सुतं त्रातुमग्रे मृकंडोर्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥१४॥ अकंठे कलंकादनंगे भुजंगादपाणौ कपालादभालेऽनलाक्षात् । अमौलौ शशांकादवामे कलत्रादहं देवमन्यं न मन्ये न मन्ये ॥१५॥

---

## शिवपंचाक्षरस्तोत्रम् ।

नागेंद्रहाराय त्रिलोचनाय भस्मांगरागाय महेश्वराय । नित्याय शुद्धाय दिगंबराय तस्मै नकाराय नमः शिवाय ॥१॥ मंदाकिनीसलिलचंदनचर्चिताय नंदीश्वरप्रमथनाथमहेश्वराय । मंदारपुष्पबहुपुष्पसुपूजिताय तस्मै मकाराय नमः शिवाय ॥२॥ शिवाय गौरीवदनाब्जवृंदसूर्याय दक्षाध्वरनाशकाय । श्रीनीलकंठाय वृषध्वजाय तस्मै शिकाराय नमः शिवाय ॥३॥ वसिष्ठकुंभोद्भवगौतमार्यमुनींद्रदेवार्चितशेखराय । चंद्रार्कवैश्वानरलोचनाय तस्मै वकाराय नमः शिवाय ॥४॥ यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय । दिव्याय देवाय दिगंबराय तस्मै यकाराय नमः शिवाय ॥५॥ पंचाक्षरमिदं पुण्यं यः पठेच्छिवसंनिधौ । शिवलोकमवाप्नोति शिवेन सह मोदते ॥६॥

---

## वेदसारशिवस्तवः ।

पशूनां पतिं पापनाशं परेशं गजेंद्रस्य कृत्तिं वसानं वरेण्यम् । जटाजूटमध्ये स्फुरद्गांगवारिं महादेवमेकं स्मरामि स्मरारिम् ॥१॥महेशं सुरेशं सुरारार्तिनाशं ।विभुं विश्वनाथं विभूत्यंगभूषम् । विरूपाक्षमिंद्वर्कवह्नित्रिनेत्रं सदानंदमीडे प्रभुं पंचवक्त्रम् ॥२॥ गिरीशं गणेशं गले नीलवर्णं गवेंद्राधिरूढं

गणातीतरूपम् । भवं भास्वरं भस्मना भूषितांगं भवानीकलत्रं भजे पंचवक्त्रम् ॥३॥ शिवाकान्त शंभो शशांकार्धमौले महेशान शूलिन् जटाजूटधारिन् । त्वमेको जगद्व्यापको विश्वरूप प्रसीद प्रसीद प्रभो पूर्णरूप ॥४॥ परात्मानमेकं जगद्बीजमाद्यं निरीहं निराकारमोंकारवेद्यम् । यतो जायते पाल्यते येन विश्वं तमीशं भजे लीयते यत्र विश्वम् ॥५ ॥ न भूमिर्न चापो न वह्निर्न वायुर्न चाकाशमास्ते न तंद्रा न निद्रा । न ग्रीष्मो न शीतं न देशो न वेषो न यस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे ॥६॥ अजं शाश्वतं कारणं कारणानां शिवं केवलं भासकं भासकानाम् । तुरीयं तमःपारमाद्यंतहीनं प्रपद्ये परं पावनं द्वैतहीनम् ॥७॥ नमस्ते नमस्ते विभो विश्वमूर्ते नमस्ते नमस्ते चिदानंदमूर्ते । नमस्ते नमस्ते तपोयोगगम्य नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥८॥ प्रभो शूलपाणे विभो विश्वनाथ महादेव शंभो महेश त्रिनेत्र । शिवाकान्त शान्त स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥९॥ शंभो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन् । काशीपते करुणया जगदेतदेकस्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥१०॥ त्वत्तो जगद्भवति देव भव स्मरारे त्वय्येव तिष्ठति जगन्मृड विश्वनाथ । त्वय्येव गच्छति लयं जगदेतदीश लिंगात्मकं हर चराचरविश्वरूपिन् ॥११॥

---

## कालभैरवाष्टकम् ।

देवराजसेव्यमानपावनांघ्रिपंकजं व्यालयज्ञसूत्रमिंदुशेखरं कृपाकरम् । नारदादियोगिवृंदवंदितं दिगंबरं काशिकापुराधिनाथकालभैरवं भजे ॥१॥ भानुकोटिभास्वरं भवाब्धितारकं परं नीलकंठमीप्सितार्थदायकं त्रिलोचनम् । कालकालमंबुजाक्षमक्षशूलमक्षरं काशिका० ॥२॥ शूलटंकपाशदंडपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम् । भीमविक्रमं प्रभुं विचित्रतांडवप्रियं काशिका० ॥३॥ भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं

भक्तवत्सलं स्थितं समस्तलोकविग्रहम् ।विनिक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं काशिका०॥४॥धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम् । स्वर्णवर्णशेषपाशशोभितांगमंडलं काशिका० ॥५॥ रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरंजनम् । मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिका० ॥६॥ अट्टहासभिन्नपद्मजांडकोशसंततिं दृष्टिपातनष्टपापजालमुग्रशासनम् । अष्टसिद्धिदायकं कपालमालिकंधरं काशिका० ॥७॥ भूतसंघनायकं विशालकीर्तिदायकं काशिवासलोकपुण्यपापशोधकं विभुम् । नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिका०॥८॥ कालभैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् । शोकमोहदैन्यलोभकोपतापनाशनं ते प्रयान्ति कालभैरवांघ्रिसन्निधिं ध्रुवम् ॥ ९ ॥

---

## श्रीमदच्युताष्टकम् ।

अच्युताच्युत हरे परमात्मन् राम कृष्ण पुरुषोत्तम विष्णो । वासुदेव भगवन्ननिरुद्ध श्रीपते शमय दुःखमशेषम् ॥ १ ॥ विश्वमंगल विभो जगदीश नंदनंदन नृसिंह नरेंद्र । मुक्तिदायक मुकुंद मुरारे श्रीपते शमय दुःखमशेषम् ॥ २ ॥ रामचंद्र रघुनायक देव दीननाथ दुरितक्षयकारिन् । यादवेंद्र यदुभूषण यज्ञ श्रीपते शमय दुःखमशेषम् ॥ ३ ॥ देवकीतनय दुःखदवाग्ने राधिकारमण रम्यसुमूर्ते । दुःखमोचन दयार्णव नाथ श्रीपते शमय दुःखमशेषम् ॥ ४ ॥ गोपिकावदनचंद्रचकोर नित्य निर्गुण निरंजन जिष्णो । पूर्णरूप जय शंकर शर्व श्रीपते शमय दुःखमशेषम् ॥५॥ गोकुलेश गिरिधारण धीर यमुनाच्छतटलेखन वीर । नारदादिमुनिवंदितपाद श्रीपते शमय दुःखमशेषम् ॥ ६ ॥ द्वारकाधिप दुरंतगुणाब्धे प्राणनाथ परिपूर्ण भवारे । ज्ञानगम्य गुणसागर ब्रह्मन् श्रीमते शमय दुःखमशेषम् ॥ ७ ॥ दुष्टनिदर्लन देव दयालो पद्मनाभ धरणीधरधारिन्

रावणांतक रमेश मुरारे श्रीपते शयय दुःखमशेषम् ॥ ८ ॥ अच्युताष्टक मिदं रमणीयं निर्मितं भवभयं विनिहंतुम् ॥ । यः पठेद्विषयवृत्तिनिवृत्तिर्जन्मदुःखमखिलं स जहाति ॥ ९ ॥

---

## अच्युताष्टकम् ।

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् । श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे ॥१॥ अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितं । इंदिरामंदिरं चेतसा सुंदरं देवकीनंदनं नंदजं संदधे ॥२॥ विष्णवे जिष्णवे शंखिने चक्रिणे रुक्मिणीरागिणे जानकीजानये । बल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥३॥ कृष्ण गोविंद हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे । अच्युतानंत हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक॥४॥राक्षसक्षोभितः सीतया शोभितो दंडकारण्यभूपुण्यताकारणः । लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम् ॥ ५ ॥ धेनुकारिष्टकोऽनिष्टकोऽनिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः । पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥ ६ ॥ विद्युदुद्योतवान्प्रस्फुरद्वाससं प्रावृडंभोदवत्प्रोल्लसद्विग्रहम् । वन्यया मालया शोभितोरःस्थलं लोहितांघ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥ कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिं लसत्कुंडलं गंडयोः । हारकेयूरकं कंकणप्रोज्ज्वलं किंकिणीमंजुलं श्यामलं तं भजे ॥८॥ अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् । वृत्ततः सुंदरं कर्तृ विश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९ ॥

---

## नारायणस्तोत्रम् ।

॥ नारायण नारायण जय गोविंद हरे । नारायण नारायण जय

गोपाल हरे ॥ ध्रु० ॥ करुणापारावारा वरुणालयगंभीरा । नारायण० ॥ ॥ १ ॥ घननीरदसंकाशा कृतकलिकल्मषनाशा । नारायण० ॥ २ ॥ यमुनातीरविहारा धृतकौस्तुभमणिहारा । नारायण० ॥ ३ ॥ पीतांबरपरिधाना सुरकल्याणनिधाना । नारायण० ॥ ४ ॥ मंजुलगुंजाभूषा मायामानुषवेषा । नारायण० ॥ ५ ॥ राधाऽधरमधुरसिका रजनीकरकुलतिलका । नारायण० ॥ ६ ॥ मुरलीगानविनोदा वेदस्तुतभूपादा । नारायण० ॥ ७ ॥ बर्हिनिबर्हापीडा नटनाटकफणिक्रीडा । नारायण० ॥ ॥ ८ ॥ वारिजभूषाभरणा राजीवरुक्मिणीरमणा । नारायण० ॥ ९ ॥ जलरुहदलनिभनेत्रा जगदारंभकसूत्रा । नारायण० ॥ १० ॥ पातकरजनीसंहर करुणालय मामुद्धर । नारायण० ॥ ११ ॥ अघबकक्षयकंसारे केशव कृष्ण मुरारे । नारायण० ॥ १२ ॥ हाटकनिभपीतांबर अभयं कुरु मे मावर । नारायण० ॥ १३ ॥ दशरथराजकुमारा दानवमदसंहारा । नारायण० ॥ १४ ॥ गोवर्धनगिरिरमणा गोपीमानसहरणा । नारायण० ॥ १५ ॥ शरयूतीरविहारा सज्जनऋषिमंदारा । नारायण० ॥ ॥ १६ ॥ विश्वामित्रमखत्रा विविधपरासुचरित्रा । नारायण० ॥ १७ ॥ ध्वजवज्रांकुशपादा धरणीसुतसहमोदा । नारायण० ॥ १८ ॥ जनकसुताप्रतिपाला जय जय संस्मृतिलीला । नारायण० ॥ १९ ॥ दशरथवाग्धृतिभारा दंडकवनसंचारा । नारायण० ॥ २० ॥ मुष्टिकचाणूरसंहारा मुनिमानसविहारा । नारायण० ॥ २१ ॥ वालिविनिग्रहशौर्या वरसुग्रीवहितार्या । नारायण० ॥ २२ ॥ मां मुरलीकरधीवर पालय पालय श्रीधर । नारायण० ॥ २३ ॥ जलनिधिबंधनधीरा रावणकंठविदारा । नारायण० ॥ २४ ॥ ताटीमददलनाढ्या नटगुणविविधधनाढ्या । नारायण० ॥ २५ ॥ गौतमपत्नीपूजन करुणाघनावलोकन । नारायण० ॥ २६ ॥ संभ्रमसीताहारा साकेतपुरविहारा । नारायण० ॥ २७ ॥ अचलोद्धृतिचंचत्कर भक्तानुग्रहतत्पर । नारायण० ॥ २८ ॥ नैगमगान-

विनोदा रक्षःसुतप्रह्लादा । नारायण० ॥ २९ ॥ भारतियतिवरशंकर नामामृतमखिलान्तर । नारायण नारायण जय गोपाल हरे ॥ ३० ॥

——

## विष्णुपादादिकेशान्तवर्णनस्तोत्रम् ।

॥ लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं नीलाद्रेस्तुंगशृंगस्थितमिव रजनीनाथबिंबं विभाति । पायान्नः पांचजन्यः स सकलदितिजत्रासनैः पूरयन्स्वैर्निध्वानैर्नीरदौघध्वनिपरिभवदैरंबरं कम्बुराजः ॥ १ ॥ आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं ध्वांतस्यैकांतमंतं यदपि च परमं सर्वधाम्नां च धाम । चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं शश्वन्नो विश्ववंद्यं वितरतु विपुलं शर्म धर्मांशुशोभम् ॥२॥ अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्तेरस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः । सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविस्फारनादः संयत्कल्पांतसिंधौ शरसलिलघटावार्मुचः कार्मुकस्य ॥ ३ ॥ जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयन्ती युद्धेषूद्भूयमाना झटिति तडिदिवालक्ष्यते यस्य मूर्तिः । सोऽसिस्त्रासाकुलाक्षत्रिदशवपुरिपुः शोणितास्वाददृप्तो नित्यानंदाय भूयान्मधुमथनमनोनंदको नंदको नः ॥ ४ ॥ कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता सम्यग्वृत्ता स्थिताग्रे सपदि न सहते दर्शनं या परेषाम् । राजन्ती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा कामं दीप्तांशुकान्ता प्रदिशतु दयितेवास्य कौमोदकी नः ॥ ५ ॥ यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो यं संचिंत्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतन्ति । चंचच्चंडोरुतुंडत्रुटितफणिवसारक्तपंकांकितास्यं वंदे छंदोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥ ६ ॥ विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता सोऽनंतः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः । पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहन्ता सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो

नः ॥ ७ ॥ वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः । कुंदेंदुस्वच्छमंदस्मित-मधुरमुखांभोरुहां सुंदरांगीं वंदे वंद्यामशेषैरपि मुरभिदुरोमंदिरामिंदिरां ताम् ॥ ८ ॥ या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो धत्ते या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् । धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥ ९ ॥ येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गैर्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः । नित्यं निर्मूलनेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः पद्माक्षस्यांघ्रिपद्मद्वयतल-निलयाः पांसवः पापपंकम् ॥ १० ॥ रेखा लेखाभिवंद्याश्चरणतलगताश्च-क्रमत्स्यादिरूपाः स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षामसूत्राय-मानाः । दद्युर्नो मंगलानि भ्रमरभरजुषा कोमलेनाब्धिजायाः कम्रेणाम्रे-ड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ॥ ११ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदंडायमानादाश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता । भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तंभशोभां दधानः पातामेतौ पयोजोदरललिततलौ पंकजाक्षस्य पादौ ॥ १२ ॥ आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ याभ्यां वैरोचनींद्रौ युगपदपि विपत्संपदोरेकधाम । ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्यांचिताभ्या-मुभाभ्यां प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपंकेरुहाभ्याम् ॥ १३ ॥ येभ्यो वर्णश्चतुर्थश्चरणत उदभूदादिसर्गे प्रजानां साहस्री चापि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम् । व्याप्ता विश्वंभरा यैरतिविततनो-र्विश्वमूर्तेर्विराजो विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वंघ्रिपंकेरुहेभ्यः ॥ १४ ॥ विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या राजी-वस्येव रम्या हिमजलकणिकालंकृताग्रा दलाली । अस्माकं विस्मयार्हा-ण्यखिलमुनिजनप्रार्थनीयानि सेयं दद्यादाद्यानवद्या ततिरतिरुचिरा मंग-

लान्यंगुलीनाम् ॥ १५ ॥ यस्यां दृष्टामलायां प्रतिकृतिममराः स्वां भवन्त्यानमंतः सेंद्राः सांद्रीकृतेर्ष्याः स्वपरसुरकुलाशंकयातंकवन्तः । सा सद्यः सातिरेकां सकलसुखकरीं संपदं साधयेन्नश्चंचच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली ॥ १६ ॥ पादांभोजन्मसेवासमवनतसुरव्रातभास्वत्किरीटप्रत्युप्तोच्चावचाश्मप्रवरकरगणैश्चित्रितं यद्विभाति । नम्रांगाणां हरेर्नो हरिदुपलमहाकूर्मसौंदर्यहारिच्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमंतम् ॥ ७ ॥ श्रीमत्यौ चारुवृत्ते करपरिमलनानंदहृष्टे रमायाः सौंदर्याढ्येंद्रनीलोपलरचितमहादंडयोः कांतिचोरे । सुरींद्रैः स्तूयमाने सुरकुलमुखदे सुदितारातिसंघे जंघे नारायणीये मुहुरपि जयतामस्मदंहो हरन्त्यौ ॥१८॥ सम्यक् साह्यं विधातुं सममपि सततं जंघयोः खिन्नयोर्ये भारीभूतोरुदंडद्वयभरणकृतोत्तंभभावं भजेते। चित्तादर्शं निधातुं महितमिव सतां ते समुद्गायमाने वृत्ताकारे विधत्तां हृदि मुदमजितस्यानिशं जानुनी नः ॥१९॥ देवो भीतिं विधातुः सपदि विदधतौ कैटभाख्यं मधुं यावारोप्यारूढगर्वावधिजलधि ययोरेव दैत्यो जघान। वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीलावूरू चारू हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम् ॥२०॥ पीतेन द्योतते यच्चतुरपरिहितेनांबरेणात्युदारं जातालंकारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः । एतत्पातित्यदान्नो जघनमतिघनादेनसो माननीयं सातत्येनैव चेतो विषयमवतरत्पातु पीतांबरस्य ॥२१॥ यस्या दाम्न्या विधाम्नो जघनकलितया भ्राजतेऽगं यथाब्धेर्मध्यस्थो मंदराद्रिर्भुजगपतिमहाभोगसंनद्धमध्यः । कांची सा कांचनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता कल्यां कल्याणदात्रीं मम मतिमनिशं कम्ररूपां करोतु ॥२२॥ उन्नम्रं कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रैः पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् । तस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुद्ध्या नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥२३॥

पातालं यस्य नालं वलयमपि दिशां पत्रपंक्तिं नगेंद्रान्विद्वांसः केसराली-
र्विदुरिह विपुलां कर्णिकां स्वर्णशैलम् । भूयाद्गायत्स्वयंभूमधुकरभवनं भूमयं
कामदं नो नालीकं नाभिपद्माकरभवमुरु तन्नागशब्दस्य शौरेः ॥२४॥
कांत्यंभःपूरपूर्णे लसदसितवलीभंगभास्वत्तरंगे गंभीराकारनाभीचतुरतर-
महावर्तशोभिन्युदारे । क्रीडत्वानद्धहेमोदरनलिनमहावाडवाग्निप्रभाढ्ये कामं
दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥२५॥ नानानालीकमूला-
दधिकपरिमलोन्मोहितानामलीनां माला नीलेव यान्ती स्फुरति रुचिमती
वक्त्रपद्मोन्मुखी या । रम्या सा रोमराजिर्महितरुचिमती मध्यभागस्य
विष्णोश्चित्तस्था मा विरंसीच्चिरतरमुचितां साधयन्ती श्रियं नः ॥२६॥
आदौ कल्पस्य यस्मात्प्रभवति विततं विश्वमेतद्विकल्पैः कल्पान्ते यस्य
चान्तः प्रविशति सकलं स्थावरं जंगमं च । अत्यंताचिंत्यमूर्तेश्चिरतरम-
जितस्यांतरिक्षस्वरूपे तस्मिन्नस्माकमंतःकरणमतिमुदा क्रीडतात्क्रोड-
भागे ॥२७॥ संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं श्रीव-
त्सोल्लासिफुल्लप्रतिनवनवमालांशुराजद्भुजान्तम् । वक्षः श्रीवृक्षकान्तं मधु-
करनिकरश्यामलं शार्ङ्गपाणेः संसाराध्वश्रमार्तैरुपवनमिव यत्सेवितं तत्प्र-
पद्ये ॥२८॥ कांतं वक्षो नितांतं विदधदिव गलं कालिमा कालशत्रोरिं-
दोर्बिंबं यथांको मधुप इव तरोर्मंजरीं राजते यः । श्रीमान्नित्यं विधेया-
दविरल मिलितः कौस्तुभश्रीप्रतानैः श्रीवत्सः श्रीपतेः स श्रिय इव दयितो
वत्स उच्चैः श्रियं नः ॥२९॥ संभूयांभोधिमध्यात्सपदि सहजया यः
श्रिया संनिधत्ते नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये । आशाः
सर्वाः प्रकाशा विदधदपि दधच्चात्मभासान्यतेजांस्याश्चर्यस्याकरो नो
द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै ॥३०॥ या वायावानुकूल्यात्स-
रति मणिरुचा भासमाना समाना साकं सा कंपमंसे वसति विदधती
वासुभद्रं सुभद्रम् । सारं सारंगसंगैर्मुखरितकुसुमा मेचकान्ता च कान्ता
माला मालालितास्मान्न विरमतु सुखैर्योजयन्ती जयन्ती ॥३१॥ हार-

स्योरुप्रभाभिः प्रतिवनवनमालांशुभिः प्रांशुभिर्यच्छ्रीभिश्चाप्यंगदानां शबलितरुचिभिर्निष्कभाभिश्च भाति। बाहुल्येनैव बद्धांजलिपुटमजितस्याभियाचामहे तद्वंधार्तिं बाधतां नो बहुविहितकरीं बंधुरं बाहुमूलम् ॥३२॥ विश्वत्राणैकदीक्षारतनुगुणगणक्षत्रनिर्माणदक्षाः कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणामद्भुतानाम्। शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशंखौ सहस्रं बिभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो मोहहानिम् ॥३३॥ कंठाकल्पोद्गतेर्यः कनकमयलसत्कुंडलोस्त्रैरुदारैरुद्द्योतैः कौस्तुभस्याप्युरुभिरुपाचितश्चित्रवर्णो विभाति। कंठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे वैकुंठीयेऽत्र कंठे वसतु मम मतिः कुंठभावं विहाय ॥३४॥ पद्मानंदप्रदाता परिलसदरुणश्रीपरीताग्रभागः काले काले च कम्बुप्रवरशशधरापूरणे यः प्रवीणः। वक्त्राकाशान्तरस्थस्तिरयति नितरां दंततारौघशोभां श्रीभर्तुर्दंतवासोद्युमणिरघतमोनाशनायास्त्वसौ नः ॥३५॥ नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमाया वक्त्रेंदोरंतराले कृतवसतिरिवाभाति नक्षत्रराजिः। लक्ष्मीकांतस्य कांताकृतिरतिविलसन्मुग्धमुक्ताफलश्रीर्दंताली संततं सा नतिनुतिनिरतान्रक्षतादक्षता नः ॥३६॥ ब्रह्म ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां शंभो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः। इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्नस्यास्येंदोरास्रवन्ती वरवचनसुधा ह्लादयेन्मानसं नः ॥३७॥ कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुंडलप्रोतदीप्यन्माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत्। प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारेर्गाढामागामिनीं नो गमयतु विपदं गंडयोर्मंडलं तत् ॥३८॥ वक्त्रांभोजे लसन्तं मुहुरधरमणिं पक्वबिंबाभिरामं दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुंडदंडायते नः। घोणः श्रोणीकृतात्मा श्रवणयुगलसत्कुंडलोस्त्रैर्मुरारेः प्राणाख्यस्यानिलस्य प्रसरणसरणिः प्राणदानाय नः स्यात् ॥३९॥ दिक्कालौ वेदयन्तौ जगति मुहुरिमौ संचरन्तौ रवींदू त्रैलोक्यालोकदीपावभिदधाति ययो-

रेव रूपं मुनींद्राः। अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे॥४०॥लक्ष्माकारालकालिस्फुरदलिकशशांकार्धसंदर्शमीलन्नेत्रांभोजप्रबोधोत्सुकानिभृततरालीनभृंगच्छदाभे। लक्ष्मीनाथस्य लक्षीकृतविबुधगणापांगबाणासनार्धच्छाये नो भूतिभूरिप्रसवकुलशते भ्रूलते पालयेताम् ॥४१॥ पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसंघाः। नृत्यल्लालाटरंगे रजनिकरतनोरर्धखंडावदाते कालव्यालद्वयं वा विलसति समया बालिका मातरं नः ॥४२॥ रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्षप्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिंगम् । भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वंद्वमध्यादुत्थं तत्पुंड्रमूर्ध्वं जनिमरणतमःखंडनं मंडनं च ॥४३॥ पीठीभूतालकान्ते कृतमुकुटमहादेवलिंगप्रतिष्ठे लालाटे नाट्यरंगे विकटतरतटे कैटभारेश्चिराय। प्रोद्घाट्यैवात्मतंद्रीप्रकटपटकुटीं प्रस्फुरन्तीं स्फुटांगं पट्वीयं भावनाख्यां चटुलमतिनटी नाटिकां नाटयेन्नः ॥४४॥ मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुंतलाली कालिन्द्यारुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु। राहुर्वा याति वक्त्रं सकलशशिकलाभ्रान्तिलोलान्तरात्मा लोकैरालोच्यते या प्रदिशतु सकलैः साखिलं मंगलं नः ॥४५॥ सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपा व्याप्तव्योमांतरालास्तरलरुचिजलारंजिताः स्पष्टभासः। देहच्छायोद्गमाभा रिपुवपुरगुरुप्लोषरोषाग्निधूम्याः केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥४६॥ यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिः प्रतानस्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या। कुर्वत्पारेपयोधि ज्वलदकृतमहाभास्वदौर्वाग्निशंकां शश्वन्नः शर्म दिश्यात्कलिकलुषतमःपाटनं तत्किरीटम्॥४७॥भ्रान्त्वा भ्रान्त्वा यदंतस्त्रिभुवनगुरुरप्यब्दकोटीरनेका गन्तुं नान्तं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात्।उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं देहांभोभिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः

॥ ४८ ॥ मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्की भविष्यन् । विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥ ४९ ॥ यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणाः स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः । नित्यानंदं स्वसंविन्निरवधिममृतं स्वान्तसंक्रांतबिंबच्छायापत्त्यापि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥ ५० ॥ आ पादादा च शीर्ष्णो वपुरिदमनघं वैष्णवं यः स चित्ते धत्ते नित्यं निरस्ताखिलकलिकलुषे संततांतः प्रमोदः । जुह्वज्जिह्वाकृशानौ हरिचरितहविःस्तोत्रमंत्रानुपाठैस्तत्पादांभोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥ ५१ ॥

---

## आनंदलहरी ।

भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः प्रजानामीशानस्त्रिपुरमथनः पंचभिरपि ! न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिस्तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥१॥ घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैर्विशिष्यानाख्येयो भवति रसनामात्रविषयः । तथा ते सौंदर्यं परमशिवदृङ्मात्रविषयः कथंकारं ब्रूमः सकलनिगमागोचरगुणे ॥२॥ मुखे ते तांबूलं नयनयुगुले कज्जलकला ललाटे काश्मीरं विलसति गले मौक्तिकलता । स्फुरत्कांची शाटी पृथुकटितटे हाटकमयी भजामस्त्वां गौरीं नगपतिकिशोरीमविरतम् ॥३॥ विराजन्मंदारद्रुमकुसुमहारस्तनतटी नदद्वीणानादश्रवणविलसत्कुंडलगुणा । नतांगी मातंगी रुचिरगतिभंगी भगवती सती शंभोरंभोरुहचटुलचक्षुर्विजयते ॥४॥ नवीनार्कभ्राजन्मणिकनकभूषापरिकरैर्वृतांगी सारंगीरुचिरनयनांगीकृतशिवा । तडित्पीता पीताम्बरललितमंजीरसुभगा ममापर्णा पूर्णा निरवधिसुखैरस्तु सुमुखी ॥५॥ हिमाद्रेः संभूता सुललितकरैः पल्लवयुता सुपुष्पा मुक्ताभिर्भ्रमरकलिता चालकभरैः।

कृतस्थाणुस्थाना कुचफलनता सूक्तिसरसा रुजां हंत्री गंत्री विलसति चिदानंदलतिका ॥६॥ सपर्णामाकीर्णां कतिपयगुणैः सादरमिह श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति । अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥७॥ विधात्री धर्माणां त्वमसि सकलाम्नायजननी त्वमर्थानां मूलं धनदनमनीयांघ्रिकमले त्वमादिः कामानां जननि कृतकंदर्पविजये सतां भक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥८॥ प्रभूता भक्तिस्ते यदपि न ममालोलमनसस्त्वया तु श्रीमत्या सदयमवलोक्योऽहमधुना । पयोदः पानीयं दिशति मधुरं चातकमुखे भृशं शंके कैर्वा विधिभिरनुनीता मम मतिः ॥९॥ कृपापांगालोकं वितर तरसा साधुचरिते न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते । न चेदिष्टं दद्यादनुपदमहो कल्पलतिका विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥१०॥ महान्तं विश्वासं तव चरणपंकेरुहयुगे निधायान्यन्नैवाश्रितमिह मया दैवतमुमे। तथापि त्वच्चेतो यदि मयि न जायेत सदयं निरालंबो लंबोदरजननि कं यामि शरणम् ॥११॥ अयः स्पर्शे लग्नं सपदि लभते हेमपदवीं यथा रथ्यापाथः शुचि भवति गंगौघमिलितम् । तथा तत्तत्पापैरतिमलिनमंतर्मम यदि त्वयि प्रेम्णा सक्तं कथमिव न जायेत विमलम् ॥१२॥ त्वदन्यस्मादिच्छाविषयफललाभेन नियमस्त्वमर्थानामिच्छाधिकमपि समर्था वितरणे । इति प्राहुः प्रांचः कमलभवनाद्यास्त्वयि मनस्त्वदासक्तं नक्तंदिवमुचितमीशानि कुरु तत् ॥१३॥ स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफलत्त्वदाकारं चंचच्छशधरविलासौधशिखरम् । मुकुंदब्रह्मेंद्रप्रभृतिपरिवारं विजयते तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥१४॥ निवासः कैलासे विधिशतमखाद्याः स्तुतिकराः कुटुंबं त्रैलोक्यं कृतकरपुटः सिद्धिनिकरः । महेशः प्राणेशस्तदवनिधराधीशतनये न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना॥१५॥ वृषो वृद्धो यानं विषमशनमाशा निवसनं श्मशानं क्रीडाभूर्भुजगनिवहो भूषणनिधिः । समग्रा सामग्री जगति विदितैव स्मररिपोर्यदेतस्यैश्वर्यं तव

जननि सौभाग्यमहिमा ॥ १६ ॥ अशेषब्रह्मांडप्रलयविधिनैसर्गिकमतिः श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः । दधौ कंठे हालाहलमखिलभूगोलकृपया भवत्याः संगत्याः फलमिति च कल्याणि कलये ॥१७॥ त्वदीयं सौंदर्यं निरतिशयमालोक्य परया भियैवासीद्गंगा जलमयतनुः शैलतनये । तदेतस्यास्ताम्यद्वदनकमलं वीक्ष्य कृपया प्रतिष्ठामातेने निजशिरसि वासेन गिरिशः ॥१८॥ विशालश्रीखंडद्रवमृगमदाकीर्णघुसृणप्रसूनव्यामिश्रं भगवति तवाभ्यंगसलिलम् । समादाय स्रष्टा चलितपदपांसून्निजकरैः समाधत्ते सृष्टिं विबुधपुरपंकेरुहदृशाम् ॥१९॥ वसंते सानंदे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे । सखीभिः खेलन्तीं मलयपवनांदोलितजलैः स्मरेद्यस्त्वां तस्य ज्वरजनितपीडाऽपसरति ॥२०॥

---

## त्रिपुरसुंदरीस्तोत्रम् ।

कदंबवनचारिणीं मुनिकदंबकादंबिनीं नितंबजितभूधरां सुरनितंबिनीसेविताम् । नवांबुरुहलोचनामभिनवांबुदश्यामलां त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥१॥ कदंबवनवासिनीं कनकवल्लकीधारिणीं महार्हमणिहारिणीं मुखसमुल्लसद्वासिनीम् । दयाविभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥२॥ कदंबवनशालया कुचभरोल्लसन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया । मदारुणकपोलया मधुरगीतवाचालया कयापि घननीलया कवचिता वयं लीलया ॥३॥ कदंबवनमध्यगां कनकमंडलोपस्थितां षडंबुरुहवासिनीं सततसिद्धसौदामिनीम् । विडंबितजपारुचिं विकचचंद्रचूडामणिं त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥४॥ कुचांचितविपंचिकां कुटिलकुंचतालंकृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् । मदारुणविलोचनां मनसिजारिसंमोहिनीं मतंगमुनिकन्यकां मधुरभाषिणीमाश्रये ॥५॥ स्मरेत्प्रथमपुष्पिणीं रुधिरबिंदुनीलांबर

गृहीतमधुपात्रिकां मधुविघूर्णनेत्रांचलाम् । घनस्तनभरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥६॥ सकुंकुमविलेपनामलकचुंबिकस्तूरिकां समंदहसितेक्षणां सशरचापपाशांकुशाम् । अशेषजनमोहिनीमरुणमाल्यभूषांबरां जपाकुसुमभासुरां जपविधौ स्मराम्यंबिकाम् ॥७॥ पुरंदरपुरंध्रिकाचिकुरबंधसैरंध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् । मुकुंदरमणीं मणीलसदलंक्रियाकारिणीं भजामि भुवनांबिकां सुरवधूटिकाचेटिकाम् ॥८॥

---

## अन्नपूर्णास्तोत्रम् ।

नित्यानंदकरी वराभयकरी सौंदर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलंबनकरी मातान्नपूर्णेश्वरी ॥१॥ नानारत्नविचित्रभूषणकरी हेमांबराडंबरी मुक्ताहारविलंबमानविलसद्वक्षोजकुम्भांतरी । काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी भिक्षां देहि० ॥२॥ योगानंदकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी चंद्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यसमस्तवांछितकरी काशीपुराधीश्वरी भिक्षां देहि० ॥३॥ कैलासाचलकंदरालयकरी गौरी उमा शंकरी कौमारी निगमार्थगोचरकरी ओंकारबीजाक्षरी । मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी भिक्षां देहि० ।४। दृश्यादृश्यप्रभूतवाहनकरी ब्रह्मांडभांडोदरी लीलानाटकसूत्रभेदनकरी विज्ञानदीपांकुरी । श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥५॥ उर्वी सर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी वेणीनीलसमानकुंतलहरी नित्यान्नदानेश्वरी । सर्वानंदकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥६॥ आदिक्षान्तसमस्तवर्णनकरी शंभोस्त्रिभावाकरी काश्मीरा त्रिजलेश्वरी त्रिलहरी नित्यांकुरा शर्वरी । कामाकांक्षकरी जनोदयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥७॥ देवी सर्वविचित्ररत्नरचिता

दाक्षायणी सुंदरी वामं स्वादुपयोधरप्रियकरी सौभाग्यमाहेश्वरी । भक्ताभीष्टकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥८॥ चंद्रार्कानलकोटिकोटिसदृशा चंद्रांशुबिंबाधरी चंद्रार्काग्निसमानकुंतलधरी चंद्रार्कवर्णेश्वरी । मालापुस्तकपाशसांकुशधरी काशीपुराधीश्वरी भिक्षां देहि ॥९॥ क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी । दक्षाक्रंदकरी निरामयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥१०॥ अन्नपूर्णे सदापूर्णे शंकरप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वती ॥११॥ माता च पार्वती देवी पिता देवो महेश्वरः । बांधवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥१२॥

---

## अंबाष्टकम् ।

चेटीभवन्निखिलखेटीकदंबतरुवाटीषु नाकिपटलीकोटीरचारुतरकोटीमणीकिरणकोटीकरंबितपदा । पाटीरगंधकुचशाटी कवित्वपरिपाटीमगाधिपसुता घोटी कुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ॥१॥ कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधाकोलाहलक्षपितकालामरी कुशलकीलालपोषणनभाः । स्थूला कुचे जलदनीला कचे कलितलीला कदंबविपिने शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ॥२॥ यत्राशयो लगति तत्रागजा वसतु कुत्रापि निस्तुलशुका सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा । छत्रानिलातिरयपत्राभिरामगुणमित्रामरीसमवधूः कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदाननिपुणा ३ द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा । नीपालया सुरभिधूपालका दुरितकूपादुदंचयतु मां रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ॥४॥ यालीभिरात्मतनुताली सकृत्प्रियकपालीषु खेलति भयव्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा । बालीभृति श्रवसि तालीदलं वहति यालीकशो-

भितिलका सालीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ॥५॥ न्यंकाकरे वपुषि कंकादिरक्तपुषि कंकादिपक्षिविषये त्वं कामनामयसि किं कारणं हृदयपंकारिमेहि गिरिजाम् । शंकाशिलानिशितटंकायमानपदसंकाशमानसुमनोझंकारिमानततिमंकानुपेतशशिसंकाशिवक्त्रकमलाम्॥६॥कुंवावतीसमविडंबा गलेन नवतुंबाभवीणसविधा शं बाहुलेयशशिबिंबाभिराममुखसंबाधितस्तनभरा । अंबा कुरंगमदजंबालरोचिरिह लंबालका दिशतु मे बिंबाधरा विनतशंबायुधादिनकुरंबा कदंबविपिने ॥७॥ इंधानकीरमणिबंधा भवे हृदयबंधावतीव रसिका संधावती भुवनसंधारणेऽप्यमृतसिंधावुदारनिलया । गंधानुभानमुहुरंधालिवीतकचबंधा समर्पयतु मे शंधाम भानुमपि संधानमाशु पदसंधानमप्यगसुता ॥८॥

———

## कृष्णाष्टकम् ।

श्रियाश्लिष्टो विष्णुः स्थिरचरवपुर्वेदविषयो धियां साक्षी शुद्धो हरिरसुरहंताब्जनयनः । गदी शंखी चक्री विमलवनमाली स्थिररुचिः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ १ ॥ यतः सर्वं जातं वियदनिलमुख्यं जगदिदं स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा । लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥२॥ असूनायम्यादौ यमनियममुख्यैः सुकरणैर्निरुध्येदं चित्तं हृदि विलयमानीय सकलम् । यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ शरण्यो लोकेशो मम० ॥३॥ पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा यमित्यादौ वेदो वदति जगतामीशममलम् । नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ शरण्यो लोकेशो मम० ॥४॥ महेंद्रादिर्देवो जयति दितिजान्यस्य बलतो न कस्य स्वातंत्र्यं क्वचिदपि कृतौ यत्कृतिमृते । कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः शरण्यो लोकेशो मम० ॥५॥ विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां विना यस्य ज्ञानं जनिमृतिभयं

याति जनता । विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः शरण्यो लोकेशो मम०॥६॥नरातंकोत्तंकः शरणशरणो भ्रांतिहरणो घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः । स्वयंभूर्भूतानां जनक उचिताचारसुखदः शरण्यो लोकेशो मम० ॥७॥ यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः । सतां धाता स्वच्छो निगमगुणगीतो व्रजपतिः शरण्यो लोकेशो मम० ॥८॥ इति हरेरखिलात्माराधितः शंकरेण श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः । इति वरनिकटे श्रीयुक्त आविर्बभूव स्वगुणवृत उदारः शंखचक्राब्जहस्तः ॥९॥

---

## श्रीगोविंदाष्टकम् ।

सत्यं ज्ञानमनंतं नित्यमनाकाशं परमाकाशं गोष्ठप्रांगणरिंगणलोलमनायासं परमायासम् । मायाकल्पितनानाकारमनाकारं भुवनाकारं क्ष्मामानाथमनाथं प्रणमत गोविंदं परमानंदम् ॥१॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसंत्रासं व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालम् । लोकत्रयपुरमूलस्तंभं लोकालोकमनालोकं लोकेशं परमेशं प्रणमत गोविंदं परमानंदम् ॥ २ ॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं कैवल्यं नवनीताहारमनाहारं भुवनाहारम् । वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं शैवं केवलशान्तं प्रणमत गोविंदं परमानंदम् ॥ ३ ॥ गोपालं भूलीलाविग्रहगोपालं कुलगोपालं गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् । गोभिर्निगदितगोविंदस्फुटनामानं बहुनामानं गोपीगोचरदूरं प्रणमत गोविंदं परमानंदम् ॥ ४ ॥ गोपीमंडलगोष्ठीभेदं भेदावस्थमभेदाभं शश्वद्गोखुरनिर्धूतोत्कृतधूलीधूसरसौभाग्यम् । श्रद्धाभक्तिगृहीतानंदमचिंत्यं चिंतितसद्भावं चिंतामणिमहिमानं प्रणमत गोविंदं परमानंदम् ॥५॥ स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं व्यादित्संतीरथ दिग्वस्त्राद्युपदातुमुपाकर्षन्तम् । निर्धूतद्वयशोकविमोहं बुद्धं बुद्धे-

रुप्यंतस्थं सत्तामात्रशरीरं प्रणमत गोविंदं परमानंदम् ॥६॥ कांतं कारण-कारणमादिमनादिं कालमनाभासं कालिंदीगतकालियशिरसि मुहुर्नृत्यन्तं सुनृत्यन्तम् । कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगति-हेतुं प्रणमत गोविंदं परमानंदम् ॥७॥ वृंदावनभुवि वृंदारकगणवृंदाराधित वन्देऽहं कुंदाभामलमंदस्मेरसुधानंदं सुहृदानंदम् । वंद्याशेषमहामुनिमानस-वंद्यानंदपदद्वंद्वं वंद्याशेषगुणाब्धिं प्रणमत गोविंदं परमानंदम् ॥८॥ गोविं-दाष्टकमेतदधीते गोविंदार्पितचेता यो गोविंदाच्युत माधव विष्णो गोकुल-नायक कृष्णेति । गोविंदांघ्रिसरोजध्यानसुधाजलधौतसमस्ताघो गोविंदं परमानंदामृतमंतस्थं स समभ्येति ॥९॥

------

## कृष्णाष्टकम् ।

भजे व्रजैकमंडनं समस्तपापखंडनं स्वभक्तचित्तरंजनं सदैव नंदनंदनम्। सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं अनंगरंगसागरं नमामि कृष्णनाग-रम् ॥१॥ मनोजगर्वमोचनं विशाललोललोचनं विधूतगोपशोचनं नमामि पद्मलोचनम् । करारविंदभूधरं स्मितावलोकसुंदरं महेंद्रमानदारणं नमामि कृष्णवारणम् ॥२॥ कदंबसूनकुंडलं सुचारुगंडमंडलं व्रजांगनैकवल्लभं नमामि कृष्णदुर्लभम् । यशोदया समोदया सगोपया सनंदया युतं सुखै-कदायकं नमामि गोपनायकम् ॥ ३ ॥ सदैव पादपंकजं मदीयमानसे निजं दधानमुत्तमालकं नमामि नंदबालकम् । समस्तदोषशोषणं समस्त-लोकपोषणं समस्तगोपमानसं नमामि कृष्णलालसम् ॥४॥ भुवो भराव-तारकं भवाब्धिकर्णधारकं यशोमतीकिशोरकं नमामि दुग्धचोरकम् । दृगन्तकान्तभंगिनं सदासदालसंगिनं दिने दिने नवं नवं नमामि नंदसं-भवम् ॥५॥ गुणाकरं सुखाकरं कृपाकरं कृपावरं सुरद्विषन्निकंदनं नमामि गोपनंदनम् । नवीनगोपनागरं नवीनकेलिलंपटं नमामि मेघसुंदरं तडि-त्प्रभालसत्पटम् ॥६॥ समस्तगोपनंदनं हृदंबुजैकमोहनं नमामि कुंजमध्यगं

प्रसन्नभानुशोभनम् । निकामकामदायकं दृगन्तचारुसायकं रसालवेणुगायकं नमामि कुंजनायकम् ॥७॥ विदग्धगोपिकामनोमनोज्ञतल्पशायिनं नमामि कुंजकानने प्रवृद्धवह्निपायिनम् । यदा तदा यथा तथा तथैव कृष्णसत्कथा मया सदैव गीयतां तथा कृपा विधीयताम् । प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान्भवेत्स नंदनंदने भवे भवे सुभक्तिमान् ॥८॥

---

## पांडुरंगाष्टकम् ।

महायोगपीठे तटे भीमरथ्यां वरं पुंडरीकाय दातुं मुनींद्रैः । समागत्य तिष्ठन्तमानंदकंदं परब्रह्मलिंगं भजे पांडुरंगम् ॥१॥ तडिद्वाससं नीलमेघावभासं रमामंदिरं सुंदरं चित्प्रकाशम् । वरं त्विष्टिकायां समन्यस्तपादं पर० ॥२॥प्रमाणं भवाब्धेरिदं मामकानां नितंबः कराभ्यां धृतो येन तस्मात् । विधातुर्वसत्यै धृतोनाभिकोशः पर० ॥३॥ स्फुरत्कौस्तुभालंकृतं कंठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम् । शिवं शान्तमीडयं वरं लोकपालं पर० ॥४॥शरच्चंद्रबिंबाननं चारुहासं लसत्कुंडलक्रान्तगंडस्थलांगम् । जपारागबिंबाधरं कंजनेत्रं पर० ॥५॥ किरीटोज्ज्वलत्सर्वदिक्प्रान्तभागं सुरैरर्चितं दिव्यरत्नैरनर्घैः। त्रिभंगाकृतिं बर्हमाल्यावतंसं पर० ॥६॥ विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम् । गवां वृंदकानन्दनं चारुहासं पर० ॥७॥ अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम् । प्रसन्नं प्रसन्नार्तिहं देवदेवं परब्रह्मलिंगं भजे पांडुरंगम् ॥८॥ स्तवं पांडुरंगस्य वै पुण्यदं ये पठन्त्येकचित्तेन भक्त्या च नित्यम् । भवांभोनिधिं तेऽपि तीर्त्वाऽन्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति ॥९॥

---

## गंगाष्टकम् ।

ब्रह्मांडं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती स्वर्लोकादापतन्ती कनकगिरिगुहागंडशैलात्स्खलन्ती । क्षोणीपृष्ठे लुठन्ती दुरितचयचमूर्निर्भरं

भर्त्सयन्ती पाथोधिं पूरयन्ती सुरनगरसरित्पावनी नः पुनातु ॥१॥ आदावादिपितामहस्य नियमव्यापारमात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम्। भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ २ ॥ शैलेंद्रादवतारिणी निजजले मज्जज्जनोत्तारिणी पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी। शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी काशीप्रांतविहारिणी विजयते गंगा मनोहारिणी ॥ ३ ॥ कुतो वीचिर्वीचिस्तव यदि गता लोचनपथं त्वमापीता पीतांबरपुरनिवासं वितरसि। त्वदुत्संगे गंगे पतति यदि कायस्तनुभृतां तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः ॥४॥ गंगे त्रैलोक्यसारे सकलसुरवधूधौतविस्तीर्णतोये पूर्णब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे। प्रायश्चित्तं यदि स्यात्तव जलकणिका ब्रह्महत्यादिपापे कस्त्वां स्तोतुं समर्थस्त्रिजगदघहरे देवि गंगे प्रसीद ॥५॥ मातर्जाह्नवि शंभुसंगवलिते मौलौ निधायांजलिं त्वत्तीरे वपुषोऽवसानसमये नारायणांघ्रिद्वयम्। सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥६॥

---

## यमुनाष्टकम्।

कृपापारावारां तपनतनयां तापशमनीं मुरारिप्रेयस्यां भवभयदवां भक्तिवरदाम्। वियज्ज्वालान्मुक्तां श्रियमपि सुखाप्तेः परिदिनं सदा धीरो नूनं भजति यमुनां नित्यफलदाम् ॥१॥ मधुवनचारिणि भास्करवाहिनि जाह्नविसंगिनि सिंधुसुते मधुरिपुभूषिणि माधवतोषिणि गोकुलभीतिविनाशकृते। जगदघमोचनि मानसदायिनि केशवकेलिनिदानगते जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥२॥ अयि मधुरे मधुमोदविलासिनि शैलविहारिणि वेगभरे परिजनपालिनि दुष्टनिषूदिनि वांछितकामविलासधरे। व्रजपुरवासिजनार्जितपातकहारिणि विश्वजनोद्धरिके जय

यमुने० ॥३॥ अतिविपदंबुधिमग्नजनं भवतापशताकुलमानसकं गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम् । ऋणभयभीतिमनिष्कृतिपातककोटिशतायुतपुंजतरं जय यमुने० ॥४॥ नवजलदद्युतिकोटिलसत्तनुहेममयाभररंजितके तडिदवहेलिपदांचलचंचलशोभितपीतसुचैलधरे । मणिमयभूषणचित्रपटासनरंजितगंजितभानुकरे जय यमुने०॥५॥शुभपुलिने मधुमत्तयदूद्भवरासमहोत्सवकेलिभरे उच्चकुलाचलराजितमौक्तिकहारमयाभररोदसिके। नवमणिकोटिकभास्करकंचुकिशोभिततारकहारयुते जय यमुने०॥ करिवरमौक्तिकनासिकभूषणवातचमत्कृतचंचलके मुखकमलामलसौरभचंचलमत्तमधुव्रतलोचनिके । मणिगणकुंडललोलपरिस्फुरदाकुलगंडयुगामलके जय यमुने० ॥७॥ कलरवनूपुरहेममयांचितपादसरोरुहसारुणिके धिमिधिमिधिमिधिमितालविनोदितमानसमंजुलपादगते । तव पदपंकजमाश्रितमानवचित्तसदाखिलतापहरे जय यमुने० ॥८॥

------

## नर्मदाष्टकम् ।

सबिंदुसिंधुरस्खलत्तरंगभंगरंजितं द्विषत्सु पापजातजातकारिवारिसंयुतम् । कृतांतदूतकालभूतभीतिहारिवर्मदे त्वदीयपादपंकजं नमामि देवि नर्मदे ॥१॥ त्वदंबुलीनदीनमीनदिव्यसंप्रदायकं कलौ मलौघभारहारि सर्वतीर्थनायकम् । सुमत्स्यकच्छनक्रचक्रचक्रवाकशर्मदे त्वदीयपाद० ॥२॥ महागभीरनीरपूरपापधूतभूतलं ध्वनत्समस्तपातकारिदारितापदाजलम् । जगल्लये महाभये मृकंडुसूनुहर्म्यदे त्वदीयपाद० ॥३॥ गतं तदैव मे भयं त्वदंबु वीक्षितं यदा मृकंडुसूनुशौनकासुरारिसेवि सर्वदा । पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्वदीयपाद० ॥४॥ अलक्षलक्षकिन्नरामरासुरादिपूजितं सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् । वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे त्वदीयपाद० ॥५॥ सनत्कुमारनाचिकेतकश्यपात्रिषट्पदैर्धृतं स्वकीयमानसेषु नारदादिषट्पदैः । रवींदुरंतिदेव-

देवराजकर्मशर्मदे त्वदीयपाद० ॥६॥ अलक्षलक्षलक्षपापलक्षसारसायुधं ततस्तु जीवजंतुतंतुभुक्तिमुक्तिदायकम् । विरिंचिविष्णुशंकरस्वकीयधामवर्मदे त्वदीयपाद० ॥७॥ अहो मृतं स्वनं श्रुतं महेशकेशजातटे किरातसूतवाडवेषु पंडिते शठे नटे। दुरंतपापतापहारिसर्वजंतुशर्मदे त्वदीपाद॥८॥ इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा पठन्ति ते निरंतरं न यान्ति दुर्गतिं कदा । सुलभ्य देहदुर्लभं महेशधामगौरवं पुनर्भवा नरा न वै विलोकयन्ति रौरवम् ॥९॥

---

## श्रीमणिकर्णिकाष्टकम् ।

त्वत्तीरे मणिकार्णिके हरिहरौ सायुज्यमुक्तिप्रदौ वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे । मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्तन्मध्याद्भृगुलांछनो गरुडगः पीतांबरो निर्गतः ॥१॥ इंद्राद्यास्त्रिदशाः पतन्ति नियतं भोगक्षये ते पुनर्जायन्ते मनुजास्ततोऽपि पशवः कीटाः पतंगादयः । ये मातर्मणिकर्णिके तव जले मज्जन्ति निष्कल्मषाः सायुज्येऽपि किरीटकौस्तुभधरा नारायणाः स्युर्नराः ॥२॥ काशी धन्यतमा विमुक्तिनगरी सालंकृता गंगया तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किंकरी । स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥३॥ गंगातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः । देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं पूर्वोपार्जितपुण्यपुंजगमकं पुण्यैर्जनैः प्राप्यते ॥४॥ दुःखांभोनिधिमग्नजंतुनिवहास्तेषां कथं निष्कृतिर्ज्ञात्वैतद्धि विरंचिना विरचिता वाराणसी शर्मदा । लोकाः स्वर्गसुखास्ततोऽपि लघवो भोगांतपातप्रदाः काशी मुक्तिपुरी सदा शिवकरी धर्मार्थकामोत्तरा ॥५॥ एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरो योऽप्येकः किल शंकरो विषधरो गंगाधरो माधरः । ये

मातर्मणिकार्णिके तव जले मज्जन्ति ते मानवा रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं कथम् ॥६॥ त्वत्तीरे मरणं तु मंगलकरं देवैरपि श्लाघ्यते शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदा तत्परः । आयान्तं सविता सहस्रकिरणैः प्रत्युद्गतोऽभूत्सदा पुण्योऽसौ वृषगोऽथवा गरुडगः किं मंदिरं यास्यति ॥७॥ मध्याह्ने मणिकर्णिकास्नपनजं पुण्यं न वक्तुं क्षमः स्वीयैरब्दशतैश्चतुर्मुखसुरो वेदार्थदीक्षागुरुः । योगाभ्यासबलेन चंद्रशिखरस्तत्पुण्यपारं गतस्त्वत्तीरे प्रकरोति सप्तपुरुषं नारायणं वा शिवम् ॥७॥ कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं तत्सर्वं मणिकर्णिकास्नानजे पुण्ये प्रविष्टं भवेत् । स्नात्वा स्तोत्रमिदं नरः पठति चेत्संसारपाथोनिधिं तीर्त्वा पल्वलवत्प्रयाति सदनं तेजोमयं ब्रह्मणः ॥९॥

---

## दक्षिणामूर्तिस्तोत्रम् ।

उपासकानां यदुपासनीयमुपात्तवासं वटशाखिमूले । तद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥१॥ अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे । मौनेन मंदस्मितभूषितेन महर्षिलोकस्य तमो नुदन्तम् ॥२॥ विद्रावितशेषतमोगणेन मुद्राविशेषेण मुहुर्मुनीनाम् । निरस्य मायां दयया विधत्ते देवो महांस्तत्त्वमसीति बोधम् ॥ ॥ अपारकारुण्यसुधातरंगैरपांगपातैरवलोकयन्तम् । कठोरसंसारनिदाघतप्तान्मुनीनहं नौमि गुरुं गुरूणाम् ॥४॥ ममाद्य देवो वटमूलवासी कृपाविशेषात्कृतसंनिधानः । ओंकाररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु ॥५॥ कलाभिरिंदोरिव कल्पितांगं मुक्ताकलापैरिव बद्धमूर्तिम् । आलोकये देशिकमप्रमेयमनाद्यविद्यातिमिरप्रभातम् ॥३॥ स्वदक्षजानुस्थितवामपादं पादोदरालंकृतयोगपट्टम् । अपस्मृतेराहितपादमंगं प्रणौमि देवं प्रणिधानवन्तम् ॥७॥ तत्त्वार्थमंते वसतामृषीणां युवापि यः सन्नुपदेष्टुमीष्टे । प्रणौमि तं प्राक्तनपुण्यजालैराचार्यमाश्चर्यगुणाधिवासम् ॥८॥

एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः । स्वजानुविन्यस्तकरः पुरस्तादाचार्यचूडामणिराविरस्तु ॥९॥ आलेपवन्तं मदनांगभूत्या शार्दूलकृत्या परिधानवन्तम् । आलोकये कंचन देशिकेन्द्रमज्ञानवाराकरवाडवाग्निम् ॥१०॥ चारु स्थितं सोमकलावतंसं वीणाधरं व्यक्तजटाकलापम् । उपासते केचन योगिनस्त्वामुपात्तनादानुभवप्रमोदम् ॥११॥ उपासते यं मुनयः शुकाद्या निराशिषो निर्ममताधिवासाः । तं दक्षिणामूर्तितनुं महेशमुपास्महे मोहमहार्तिशान्त्यै ॥१२॥ कान्त्या निन्दितकुंदकंदलवपुर्न्यग्रोधमूले वसन्कारुण्यामृतवारिभिर्मुनिजनं संभावयन्वीक्षितैः । मोहध्वान्तविभेदनं विरचयन्बोधेन तत्तादृशा देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥१३॥ अगौरनेत्रैरललाटनेत्रैरशान्तवेषैरभुजंगभूषैः । अबोधमुद्रैरनपास्तनिद्रैरपूरकामैरमरैरलं नः ॥१४॥ दैवतानि कति सन्ति चावनौ नैव तानि मनसो मतानि मे । दीक्षितं जडधियामनुग्रहे दक्षिणाभिमुखमेव दैवतम् ॥१५॥ मुदिताय मुग्धशशिनावतंसिने भसितावलेपरमणीयमूर्तये । जगदिंद्रजालरचनापटीयसे महसे नमोऽस्तु वटमूलवासिने ॥१६॥ व्यालम्बिनीभिः परितो जटाभिः कलावशेषेण कलाधरेण । पश्यँल्ललाटेन मुखेन्दुना च प्रकाशसे चेतसि निर्मलानाम् ॥१७॥ उपासकानां त्वमुमासहायः पूर्णेन्दुभावं प्रकटीकरोषि । यदद्य ते दर्शनमात्रतो मे द्रवत्यहो मानसचंद्रकांतः ॥१८॥ यस्ते प्रसन्नामनुसंदधानो मूर्तिं मुदा मुग्धशशांकमौलेः । ऐश्वर्यमायुर्लभते च विद्यामन्ते च वेदान्तमहारहस्यम् ॥१९॥

---

## द्वादशज्योतिर्लिंगस्तोत्रम् ।

सौराष्ट्रदेशे विशदेऽतिरम्ये ज्योतिर्मयं चंद्रकलावतंसम् । भक्तिप्रदानाय कृपावतीर्णं तं सोमनाथं शरणं प्रपद्ये ॥ १ ॥ श्रीशैलसंगे विबुधातिसंगे तुलाद्रितुंगेऽपि मुदा वसन्तम् । तमर्जुनं मल्लिकपूर्वमेकं नमामि

संसारसमुद्रसेतुम् ॥ २ ॥ अवंतिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम् । अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहासुरेशम् ॥ ३ ॥ कावेरिकानर्मदयोः पवित्रे समागमे सज्जनतारणाय । सदैव मान्धातृपुरे वसन्तमोंकारमीशं शिवमेकमीडे ॥ ४ ॥ पूर्वोत्तरे प्रज्वलिकानिधाने सदा वसन्तं गिरिजासमेतम् । सुरासुराराधितपादपद्मं श्रीवैजनाथं तमहं नमामि ॥ ५ ॥ याम्ये सदंगे नगरेऽतिरम्ये विभूषितांगं विविधैश्च भोगैः । सद्भक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये ॥ ६ ॥ महाऽद्रिपार्श्वे च तटे रमन्तं संपूज्यमानं सततं मुनीन्द्रैः । सुरासुरैर्यक्षमहोरगाद्यैः केदारमीशं शिवमेकमीडे ॥ ७ ॥ सह्याद्रिशीर्षे विमले वसन्तं गोदावरीतीरपवित्रदेशे । यद्दर्शनात्पातकमाशु नाशं प्रयाति तं त्र्यंबकमीशमीडे ॥ ८ ॥ सुताम्रपर्णीजलराशियोगे निबध्य सेतुं विशिखैरसंख्यैः । श्रीरामचंद्रेण समर्पितं तं रामेश्वराख्यं नियतं नमामि ॥ ९ ॥ यं डाकिनीशाकिनिकासमाजे निषेव्यमाणं पिशिताशनैश्च । सदैव भीमादिपदप्रसिद्धं तं शंकरं भक्तहितं नमामि ॥ १० ॥ सानंदमानंदवने वसंन्तमानंदकंदं हतपापवृन्दम् । वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥ ११ ॥ इलापुरे रम्यविशालकेऽस्मिन्समुल्लसन्तं च जगद्वरेण्यम् । वन्दे महोदारतरस्वभावं घृष्णेश्वराख्यं शरणं प्रपद्ये ॥ १२ ॥ ज्योतिर्मयद्वादशलिंगकानां शिवात्मनां प्रोक्तमिदं क्रमेण । स्तोत्रं पठित्वा मनुजोऽतिभक्त्या फलं तदालोक्य निजं भजेच्च ॥ १३ ॥

---

## ललितापंचकम् ।

प्रातः स्मरामि ललितावदनारविंदं बिंबाधरं पृथुलमौक्तिकशोभिनासम् । आकर्णदीर्घनयनं मणिकुंडलाढ्यं मंदस्मितं मृगमदोज्ज्वलफालदेशम् ॥ १ ॥ प्रातर्भजामि ललिताभुजकल्पवल्लीं रक्तांगुलीयलसदंगुलिपल्लवाढ्याम् । माणिक्यहेमवलयांगदशोभमानां पुण्ड्रेक्षुचापकुसुमेषुसृणीर्दधानाम् ॥ २ ॥

प्रातर्नमामि ललिताचरणारविंदं भक्तेष्टदाननिरतं भवसिंधुपोतम् । पद्मासनादिसुरनायकपूजनीयं पद्मांकुशध्वजसुदर्शनलांछनाढ्यम् ॥ ३ ॥ प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यंतवेद्यविभवां करुणानवद्याम् । विश्वस्य सृष्टिविलयस्थितिहेतुभूतां विद्येश्वरीं निगमवाङ्मनसातिदूराम् ॥ ४ ॥ प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति । श्रीशांभवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥५॥ यः श्लोकपंचकमिदं ललितांबिकायाः सौभाग्यदं सुललितं पठति प्रभाते । तस्मै ददाति ललिता झटिति प्रसन्ना विद्यां श्रियं विमलसौख्यमनंतकीर्तिम् ॥ ६ ॥

---

## भ्रमरांबाष्टकम् ।

चांचल्यारुणलोचनाञ्चितकृपाचंद्रार्कचूडामणिं चारुस्मेरमुखां चराचरजगत्संरक्षणीं तत्पदाम् । चंचच्चंपकनासिकाग्रविलसन्मुक्तामणीरंजितां श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥१॥ कस्तूरीतिलकांचितेंदुविलसत्प्रोद्भासिफालस्थलीं कर्पूरद्रवमिश्रचूर्णखदिरामोदोल्लसद्वीटिकाम् । लोलापांगतरंगितैरधिकृपासारैर्नतानंदिनीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥२॥ राजन्मत्तमरालमंदगमनां राजीवपत्रेक्षणां राजीवप्रभवादिदेवमुकुटै राजत्पदांभोरुहाम् । राजीवायतमंदमंडितकुचां राजाधिराजेश्वरीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥३॥ षट्तारां गणदीपिकां शिवसतीं षड्वैरिवर्गापहां षट्चक्रान्तरसंस्थितां वरसुधां षड्योगिनीवेष्टिताम् । षट्चक्रांचितपादुकांचितपदां षड्भावगां षोडशीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥४॥ श्रीनाथादृतपालितत्रिभुवनां । श्रीचक्रसंसारिणीं ज्ञानासक्तमनोजयौवनलसद्गंधर्वकन्यादृताम् दीनानामतिवेलभाग्यजननीं दिव्यांबरालंकृतां श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥५॥ लावण्याधिकभूषितांगतिलकां

लाक्षालसद्रागिणीं सेवायातसमस्तदेववनितां सीमन्तभूषान्विताम् । भावोल्लासवशीकृतप्रियतमां भंडासुरच्छेदिनीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥६॥ धन्यां सोमविभावनीयचरितां धाराधरश्यामलां मुन्याराधनमेधिनीं सुमवतां मुक्तिप्रदानव्रताम् । कन्यापूजनसुप्रसन्नहृदयां कांचीलसन्मध्यमां श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ॥७॥ कर्पूरागरुकुंकुमांकितकुचां कर्पूरवर्णस्थितां कृष्टोत्कृष्टसुकृष्टकर्मदहनां कामेश्वरीं कामिनीम् । कामाक्षीं करुणारसार्द्रहृदयां कल्पान्तरस्थायिनीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥८॥ गायत्रीं गरुडध्वजां गगनगां गन्धर्वगानप्रियां गंभीरां गजगामिनीं गिरिसुतां गंधाक्षतालंकृताम् । गंगागौतमगर्गसंनुतपदां गां गौतमीं गोमतीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥९॥

———

# अनात्मश्रीविगर्हणम् ।



लब्धा विद्या राजमान्या ततः किं प्राप्ता संपत्प्राभवाढ्या ततः किम् ।
भुक्ता नारी सुंदरांगी ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १ ॥
केयूराद्यैर्भूषितो वा ततः किं कौशेयाद्यैरावृतो वा ततः किम् ।
तृप्तो मृष्टान्नादिना वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥२॥
दृष्टा नाना चारुदेशास्ततः किं पुष्टाश्चेष्टा बंधुवर्गास्ततः किम् ।
नष्टं दारिद्र्यादिदुःखं ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ३ ॥
स्नातं तीर्थे जह्नुजादौ ततः किं दानं दत्तं द्व्यष्टसंख्यं ततः किम् ।
जप्ता मंत्राः कोटिशो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत्॥४॥
गोत्रं सम्यग्भूषितं वा ततः किं गात्रं भस्माच्छादितं वा ततः किम् ।
रुद्राक्षादिः सुधृतो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥५॥
अन्नैर्विप्रास्तर्पिता वा ततः किं यज्ञैर्देवास्तोषिता वा ततः किम् ।
कीर्त्या व्याप्ताः सर्वलोकास्ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ६
कायः क्लिष्टश्चोपवासैस्ततः किं लब्धाः पुत्राः स्वीयपत्न्यास्ततः किम् ।
प्राणायामः साधितो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥७॥
युद्धे शत्रुर्निर्जितो वा ततः किं भूयो मित्रैः पूरितो वा ततः किम् ।
योगैः प्राप्ताः सिद्धयो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत्॥८॥
अब्धिः पद्भ्यां लंघितो वा ततः किं वायुः कुंभे स्थापितो वा ततः किम्
मेरुः पाणावुद्धृतो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ ९ ॥
क्ष्वेलः पीतो दुग्धवद्वा ततः किं वह्निर्जग्धो लाजवद्वा ततः किम् ।
प्राप्तश्चारः पक्षिवत्खे ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥१०॥
बद्धाः सम्यक्पावकाद्यास्ततः किं साक्षाद्विद्धा लोहवर्गास्ततः किम् ।
लब्धो निक्षेपोंऽजनाद्यैस्ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत्॥११॥
भूपेंद्रत्वं प्राप्तमुर्व्यां ततः किं देवेंद्रत्वं संभृतं वा ततः किम् ।

मुर्दीद्रत्वं चोपलब्धं ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १२ ॥
मंत्रैः सर्वः स्तंभितो वा ततः किं बाणैर्लक्ष्यो भेदितो वा ततः किम् ।
कालज्ञानं चापि लब्धं ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १३ ॥
कामातंकः खंडितो वा ततः किं कोपावेशः कुंठितो वा ततः किम् ।
लोभाश्लेषो वर्जितो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १४ ॥
मोहध्वांतः पेषितो वा ततः किं जातो भूमौ निर्मदो वा ततः किम् ।
मात्सर्यार्तिर्मीलिता वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् ॥ १५ ॥
धातुर्लोकः साधितो वा ततः किं विष्णोर्लोको वीक्षितो वा ततः किम् ।
शंभोर्लोकः शासितो वा ततः किं येन स्वात्मा नैव साक्षात्कृतोऽभूत् १६

यस्येदं हृदये सम्यगनात्मश्रीविगर्हणम् ।
सदोदेति स एवात्मसाक्षात्कारस्य भाजनम् ॥ १७ ॥
अन्ये तु मायिकजगद्भ्रांतिव्यामोहमोहिताः ।
न तेषां जायते कापि स्वात्मसाक्षात्कृतिर्भुवि ॥ १८ ॥

---

# आत्मानात्मविवेकः ।

———:०:———

दृश्यं सर्वमनात्मा स्याद्दृगेवात्मा विवेकिनः ।
आत्मानात्मविवेकोऽयं कथितो ग्रंथकोटिभिः ॥ १ ॥

आत्मानात्मविवेकः कथ्यते ॥ २ ॥

आत्मनः किं निमित्तं दुःखम् ? शरीरपरिग्रहनिमित्तम् । नेह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतेः ॥ ३ ॥

शरीरपरिग्रहः केन भवति ? कर्मणा ॥ ४ ॥

कर्म केन भवतीति चेत् ? रागादिभ्यः ॥ ५ ॥

रागादयः कस्मात् भवन्तीति चेत् ? अभिमानात् ॥ ६ ॥

अभिमानोऽपि कस्मात् भवति ? अविवेकात् ॥ ७ ॥

अविवेकः कस्मात् भवति ? अज्ञानात् । अज्ञानं केन भवतीति चेत् ? न केनापि । अज्ञानं नाम अनादि सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किंचिदिति वदन्ति, अहमज्ञ इत्याद्यनुभवात् । "देवात्मशक्तिं स्वगुणैर्निगूढां" इत्यादिश्रुतेः । तस्मादज्ञानादविवेकी जायते । अविवेकादभिमानो जायते । अभिमानाद्रागादयो जायन्ते । रागादिभ्यः कर्माणि जायन्ते । कर्मभ्यः शरीरपरिग्रहो जायते । शरीरपरिग्रहात् दुःखं जायते ॥ ८ ॥

दुःखस्य कदा निवृत्तिः ? सर्वात्मना शरीरपरिग्रहनाशे सति दुःखस्य निवृत्तिर्भवति । सर्वात्मपदं किमर्थम् ? सुषुप्त्यवस्थायां दुःखे निवृत्तेऽपि पुनरुत्थानसमये उत्पद्यमानत्वात् वासनात्मना स्थितं भवति ॥ ९॥

अतस्तन्निवृत्त्यर्थं सर्वात्मपदम् । शरीरपरिग्रहनिवृत्तिः कदा भवति ? सर्वात्मना कर्माणि निवृत्ते सति । कर्मनिवृत्तिः कदा भवति ? सर्वात्मना रागादौ निवृत्ते सति । रागादिनिवृत्तिः कदा भवति ? सर्वात्मना अभिमाने निवृत्ते सति । कदा अभिमाननिवृत्तिः ? सर्वात्मना अवि-

वक निवृत्ते सति । कदा अविवेकनिवृत्तिः ? सर्वात्मना अज्ञाने निवृत्ते सति । कदा अज्ञाननिवृत्तिः ? ब्रह्मात्मैकत्वे जाते सति अविद्यानिवृत्तिः सर्वात्मना भवति ॥ १० ॥

ननु नित्यानां कर्मणां विहितत्वात् नित्येभ्यः कर्मभ्यो अविद्यानिवृत्तिः स्यात् किमर्थं ज्ञानेन. इत्याशंक्य न कर्मादिना अविद्यानिवृत्तिः । तत्कुत इति चेत् ? कर्मज्ञानयोर्विरोधो भवेत् ॥११॥

अतो ज्ञानेनैव अज्ञाननिवृत्तिः । तज्ज्ञानं कुत इति चेत् ? विचारादेव भवति । आत्मानात्मविवेकविषयविचाराद्भवति । तस्मिन् विचारे को वा को वा अधिकारी ? साधनचतुष्टयसंपन्नोऽधिकारी । साधनचतुष्टयं नाम —१ नित्यानित्यवस्तुविवेकः, २ इहामुत्रफलभोगविरागः, ३ शमादिषट्सम्पत्तिः, ४ मुमुक्षुत्वं चेति ।

१ नित्यानित्यवस्तुविवेको नाम, ब्रह्म सत्यं, जगन्मिथ्यैवेति निश्चयः । २ इह अस्मिँल्लोके देहधारणव्यतिरिक्तविष ये स्रक्चंदनवनितादिसंभोगे वान्ताशनमूत्रपुरीषादौ यथा इच्छा नास्ति, तथा इच्छाराहित्यमिति इहलोकविरागः । अमुत्र स्वर्गलोकादिब्रह्मलोकान्तर्वर्त्तिषु रंभोर्वश्यादिसंभोगादिविषयेषु तद्वत् । ३ शमादिषट्कं नाम, शम-दमोपरति-तितिक्षा-समाधानं श्रद्धा । शमो नाम अंतरिंद्रियनिग्रहः । अंतरिंद्रियं नाम मनः । तस्य निग्रहः श्रवणमननिदिध्यासनव्यतिरिक्तविषयेभ्यो निवृत्तिः । श्रवणादौ वर्तमानत्वं वा शमः । श्रवणं नाम षड्विधलिंगैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्यावधारणम् ॥ १२ ॥

षड्विधलिंगानि तु उपक्रमोपसंहाराभ्यास–फलापूर्वतार्थवादोपपत्त्याख्यानि । प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यंतयोरुपपादनमुपक्रमोपसंहारौ । यथा छांदोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः एकमेवाद्वितीयमित्यादौ ऐतदात्म्यमित्यंते च प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः । यथा तत्रैवाद्वितीयवस्तुनो मध्ये तत्त्व-

मसीति नवकृत्वः प्रतिपादनम् । फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र श्रूयमाणं प्रयोजनम् । यथा तत्र तत्र 'आचार्यवान् पुरुषो वेद' 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति अद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं फलं श्रूयते । अपूर्वता तु प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणम् ॥१३॥

यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम् । प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । यथा तत्र उत तमादेशमप्राक्षो येन अश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातमिति अद्वितीयवस्तुप्रशंसनम् ॥१४॥

प्रकरणप्रतिपाद्यार्थसाधने तत्र श्रूयमाणा युक्तिरुपपत्तिः । यथा तत्र सौम्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादौ अद्वितीयवस्तुसाधने विकारस्य वाचारंभणमात्रत्वे युक्तिः श्रूयते ॥१५॥

मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिंतनम् । विजातीयदेहादिप्रत्ययरहिताद्विजातीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनम् । अस्यार्थः । विजातीयदेहादिबुद्ध्यंतजडपदार्थनिराकरणेन सजातीयाद्वितीयवस्तुविषयप्रत्ययप्रवाहीकरणं निदिध्यासनमित्यर्थः ॥१६॥

दमो नाम बाह्येंद्रियनिग्रहः । बाह्येंद्रियाणि कानि ? कर्मेंद्रियाणि पंच ज्ञानेंद्रियाणि पंच । तेषां निग्रहः श्रवणादिव्यतिरिक्तविषयेभ्यो निवृत्तिर्दमः । उपरतिर्नाम विहितानां कर्मणां विधिना परित्यागः । श्रवणादिष्वेव वर्तमानस्य मनसः श्रवणादौ वर्तमानं वा उपरतिः । तितिक्षा नाम देहविच्छेदव्यतिरिक्तं शीतोष्णादिद्वंद्वसहनम् । निग्रहशक्तावपि परापराधसोढृत्वं वा तितिक्षा । समाधानं नाम, श्रवणादिषु वर्तमानं मनो वासनावशाद्विषयेषु यदा यदा गच्छति तदा दोषदृष्ट्या तेषु तेषु श्रवणादिषु समाधिः समाधानम् ॥१७॥

श्रद्धा नाम, गुरुवेदान्तवाक्येषु अतीव विश्वासः ॥१८॥

इदं तावत् शमादिषट्कमित्युक्तम् । ४ मुमुक्षुत्वं नाम, मोक्षेऽतितीव्रेच्छावत्त्वम् । एतत्साधनचतुष्टयसंपत्तिः, तद्वान् साधनचतुष्टयसंपन्नः । तस्य आत्मानात्मविचारेऽधिकारः । यथा ब्रह्मचारिणः कर्तव्यान्तरं नास्ति, तथास्यान्यत् कर्तव्यं नास्ति ॥१८॥

साधनचतुष्टयसंपत्त्यभावेऽपि गृहस्थानामात्मविचारे क्रियमाणे सति तेन प्रत्यवायो नास्ति, किन्तु अतीव श्रेयो भवति । यथा

" दिने दिने च वेदान्तविचाराद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं भवेत् " इत्युक्तम् । ॥२०॥

आत्मानात्मविचारः कर्तव्य इत्युक्तम् । आत्मा नाम स्थूलसूक्ष्मकारणशरीरत्रयविलक्षणः पंचकोशव्यतिरिक्तः अवस्थात्रयसाक्षी सच्चिदानंदस्वरूपः ॥२१॥

अनात्मा नाम अनृतजडदुःखात्मकं समष्टिव्यष्ट्यात्मकशरीरत्रयम् । शरीरत्रयं नाम स्थूलसूक्ष्मकारणशरीरत्रयम् । स्थूलशरीरं नाम पंचीकृतभूतकार्यं कर्मजन्यं जन्मादिषड्भावविकारम् । तथा चोक्तं–

पंचीकृतमहाभूत–संभवं कर्मसंचितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥२२॥

पंचीकरणं तु–

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ॥
स्वस्वेतरद्वितीयांशैर्योजनात् पंच पंच ते ॥ इति ॥

शीर्यते वयोभिर्बाल्यकौमारयौवनवार्धक्यादिभिरिति शरीरम् । दह भस्मीकरणे इति व्युत्पत्त्या च देहः भस्मीभावं प्राप्नोति । ननु केचिद्देहा न भस्मीभावं प्राप्नुवन्ति, केचिद्देहाः खननादि प्राप्नुवन्ति, कथमुच्यते सर्व स्थूलादिकं स्थूलदेहजातं भस्मीभावं प्राप्नोति । यद्यप्येवं तथापि केनाग्निना दाहत्वं संभवतीत्यत चाह, सर्वेषां स्थूलदेहानां आध्यात्मिकाधिभौतिकाधिदैविकादितापत्रयाग्निना दाहत्वं संभवति । आध्यात्मिकं

नाम आत्मानं देहं अधिकृत्य वर्तत इत्यध्यात्मम् । अध्यात्मं च तत् दुःखं आध्यात्मिकं वातपित्तकफजातं शिरोरोगज्वरादिना व्याधिरूपम् । आधिभौतिकं नाम भूतमधिकृत्य वर्तते इत्याधिभौतिकं व्याघ्रतस्करादिजन्यदुःखम् । आधिदैविकं नाम देवमधिकृत्य वर्तते इत्याधिदैविकं शीतातपवातवर्षवैद्युतादि दुःखम् ॥ २३ ॥

सूक्ष्मशरीरं नाम अपंचीकृतभूतकार्यं सप्तदशकं लिंगम् । सप्तदशकं नाम ज्ञानेंद्रियाणि पंच, कर्मेंद्रियाणि पंच, प्राणादिवायवः पंच, बुद्धिर्मनश्चेति । ज्ञानेंद्रियाणि कानि ? श्रोत्रत्वक्–चक्षुर्जिव्हा–घ्राणानि ॥ श्रोत्रेंद्रियं नाम, कर्णव्यतिरिक्तं कर्णशष्कुल्यवच्छिन्ननभोदेशाश्रयं शब्दग्रहणशक्तिमदिंद्रियं श्रोत्रेंद्रियमिति । त्वगिंद्रियं नाम, त्वग्व्यतिरिक्तं त्वगाश्रयं आपादतलमस्तकव्यापि शीतोष्णादिस्पर्शग्रहणशक्तिमदिंद्रियं त्वगिंद्रियमिति । चक्षुरिंद्रियं नाम, गोलोकव्यतिरिक्तं गोलोकाश्रयं कृष्णतारकाग्रवर्ति रूपादिग्रहणशक्तिमदिंद्रियं चक्षुरिंद्रियमिति । जिह्वेंद्रियं नाम जिह्वाव्यातिरिक्तं जिह्वाश्रयं जिह्वाग्रवर्त्ति रसादिग्रहणशक्तिमदिंद्रियं जिह्वेंद्रियमिति । घ्राणेंद्रियं नाम, नासिकाव्यातिरिक्तं नासिकाश्रयं नासिकाग्रवर्ति गन्धादिग्रहणशक्तिमदिंद्रियं घ्राणेंद्रियमुच्यते ।

कर्मेंद्रियाणि कानि ? वाक्पाणिपादपायूपस्थानि । वागिंद्रियं नाम, वाग्व्यतिरिक्तं वागाश्रयं अष्टस्थानवर्ति शब्दोच्चारणशक्तिमदिंद्रियं वागिंद्रियमिति । अष्ट स्थानानि, उरःकंठशिरस्तालुजिह्वादंतौष्ठनासिकाः । पाणींद्रियं नाम, पाणिव्यतिरिक्तं करतलाश्रयं दानादानप्रतिग्रहशक्तिमदिंद्रियं पाणींद्रियमित्युच्यते । पादेंद्रियं नाम पादव्यतिरिक्तं पादाश्रयं पादतलवर्ति गमनागमनशक्तिमदिंद्रियं पादेंद्रियमिति । पायिंद्रियं नाम, गुदव्यतिरिक्तं गुदाश्रयं पुरीषोत्सर्गशक्तिमदिंद्रियं पायिंद्रियमिति । उपस्थेंद्रियं नाम, उपस्थव्यतिरिक्तं उपस्थाश्रयं मूत्रशुक्रोत्सर्गशक्तिमदिंद्रियं उपस्थेंद्रियमिति । एतानि कर्मेंद्रियाणि ।

अंतःकरणं नाम मनो बुद्धिश्चित्तमहंकारश्चेति । मनःस्थानं गलान्तम् । बुद्धेर्वदनम् । चित्तस्य नाभिः । अहंकारस्य हृदयम् । एतेषां विषयाः संशयनिश्चयधारणाभिमानाः । अनुसंधानात्मिकांतःकरणवृत्तिश्चित्तम् । अभिमानांतःकरणवृत्तिरहंकारः । चित्तस्य बुद्धावंतर्भावः, विषयपरिच्छित्तिरूपत्वाविशेषात् । अहंकारस्य मनस्यंतर्भावः, तस्यापि संकल्पात्मकत्वाविशेषात् । बुद्धेर्ह्यपूर्वो विषयः । चित्तस्य पूर्वानुभवः । मनसो बाह्याभ्यंतरश्च । अहंकारस्य त्वनात्मोपरक्त आत्मैवेति । प्राणादिवायुपंचकं नाम प्राणापानसमानोदानव्यानरूपाः । तेषां स्थानविशेषा उच्यंते—

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कंठदेशस्थो व्यानः सर्वशरीरगः ॥

एतेषां विषयाः । प्राणः प्रागननवान् अपानः अवागननवान् । उदान ऊर्ध्वमननवान् । समानः समीकरणवान् । व्यानः विष्वगननवान् ॥ २४ ॥

एतेषामुपवायवः पंच । नागः कूर्मश्च कृकरो देवदत्तो धनंजय इति । एतेषां विषयाः—

नागादुद्गिरणं चापि कूर्मादुन्मीलनं तथा ।
धनंजयात् पोषणञ्च देवदत्ताच्च जृंभणम् ॥
कृकराच्च क्षुतं जातमिति योगविदो विदुः ॥
एतेषां ज्ञानेंद्रियादीनामधिपतयो दिगादयः ॥
दिग्वातार्कप्रचेतोऽश्विवह्नींद्रोपेन्द्रमित्रकाः ।
तथा चंद्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ ईश्वरः ॥
विशिष्टो विश्वस्रष्टा च विश्वयोनिरयोनिजः ।
क्रमेण देवताः प्रोक्ताः श्रोत्रादीनां यथाक्रमात् ॥

एषु प्राणमयकोषः क्रियाशक्तिमान् कार्यरूपः । मनोमयः इच्छाशक्तिमान् करणरूपः । विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपः । एतत् सर्वं मिलितं

लिंगशरीरमित्युच्यते । कोषत्रयमुच्यते ॥ २४ ॥

तथा चोक्तं—

पंचप्राणमनोबुद्धिदशेंद्रियसमन्वितम् ।
अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम् ॥ २६ ॥

लीनमर्थं गमयतीति व्युत्पत्त्या लिंगं शरीरमित्युच्यते । कथं लीनं ? श्रवणमननादिना गमयति ज्ञापयति । शीर्यत इति व्युत्पत्त्या शरीरमित्युच्यते । कथं शीर्यते इति चेत् ? अहं ब्रह्मास्मीति ब्रह्मात्मैकत्वज्ञानेन शीर्यते ॥ २७ ॥

दह भस्मीकरण इति व्युत्पत्त्या लिंगदेहस्य पृथिवीपुरःसरं क्षय इत्युच्यते ॥ २८ ॥

कारणशरीरं नाम, शरीरद्वयहेतुः ॥ २९ ॥

अनाद्यनिर्वचनीयं साभासं, ब्रह्मात्मैकत्वज्ञाननिवर्त्यं अज्ञानं कारणशरीरमित्युच्यते ॥ ३० ॥

तथा चोक्तं—

अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥

शीर्यते इति व्युत्पत्त्या शरीरमित्युच्यते । कथमिति चेत् ? ब्रह्मात्मैकत्वज्ञानेन शीर्यते । दह भस्मीकरण इति व्युत्पत्त्या कारणशरीरस्य पृथिवीपुरःसरं क्षय इत्युच्यते । अनृतजडदुःखात्मकमित्युक्तम् । अनृतं नाम कालत्रयेषु अविद्यमानवस्तु अनृतमुच्यते । जडं नाम स्वविषयपरविषयज्ञानरहितं वस्तु जडं इत्युच्यते । दुःखं नाम अप्रीतिरूपं वस्तु दुःखमित्युच्यते । समष्टिव्यष्ट्यात्मकमित्युक्तम् । किं समष्टिः ? किं व्यष्टिः ? यथा वनस्य समष्टिः यथा वृक्षस्य व्यष्टिः । यथा वा जलाशयस्य समष्टिः जलस्य व्यष्टिः । तद्वदनेकशरीरसमष्टिः । एकशरीरस्य व्यष्टिः । अवस्थात्रयं नाम जाग्रत्स्वप्नसुषुप्तयः । जागरणं नाम इंद्रियैरर्थोपलब्धिर्जा-

गरणम् । स्वप्नो नाम जागरितसंस्कारजप्रत्ययः सविषयः । सुषुप्तिर्नाम सर्वविषयज्ञानाभावः । जाग्रत्स्थूलशरीराभिमानी विश्वः । स्वप्नसूक्ष्मशरीराभिमानी तैजसः । सुषुप्ति-कारणशरीराभिमानी प्राज्ञः । कोशपंचक नाम अन्नमय–प्राणमय–मनोमय–विज्ञानमय–आनंदमयाख्याः । अत्र मयट्प्रत्ययो विकारार्थः । तथा च—

पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते ।
देहः सोऽन्नमयो नात्मा प्राक् चोर्ध्वं तदभावतः ॥ ३१ ॥
पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः ।
वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ॥ ३२ ॥
अहंतां ममतां देहे गेहादौ च करोति यः ।
कामाद्यवस्थया भ्रान्तो नासावात्मा मनोमयः ॥ ३३ ॥
लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ।
चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥ ३४ ॥
काचिदंतर्मुखा वृत्तिरानंदप्रतिबिंबभाक् ।
पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते ॥ ३५ ॥
देहादभ्यंतरं प्राणः प्राणादभ्यंतरं पुनः ।
ततः कर्ता ततो भोक्ता गुहा सेयं परंपरा ॥ ३६ ॥

स्थूलशरीरं अन्नमयकोशः । मातृपितृभ्यामन्ने भुक्ते सति शुक्रशोणिताकारेण परिणतं तयोः संयोगादेव देहाकारेण परिणमते । कोशवदाच्छादकत्वात् कोश इत्युच्यते । अन्नविकारत्वे सति आत्मानमाच्छादयति ! कथं ? अपरिच्छिन्नमात्मानं परिच्छिन्नमिव, जन्मादिषड्भावविकाररहितमात्मानं जन्मादिषड्भाववन्तमिव, तापत्रयादिरहितमात्मानं तापत्रयवन्तमिव आच्छादयति । यथा कोशः खड्गमाच्छादयति, यथा तुषस्तंडुलमाच्छादयति, यथा वा गर्भं जरायुरावरयति, तथा प्राणमयकोशो नाम कर्मेंद्रियाणि पंच प्राणादिवायवः पंच, एतत् सर्वं मिलितं सत्

प्राणमयकोश इत्युच्यते । प्राणविकारे सति वक्तृत्वादिरहितमात्मानं वक्तारमिव दानादिरहितमात्मानं दातारमिव, गमनादिरहितमात्मानं गन्तारमिव, क्षुत्पिपासादिराहितमात्मानं क्षुत्पिपासावंतमिवावारयति । मनोमयकोशो नाम ज्ञानेंद्रियाणि पच मनश्च एतत् सर्वं मिलित्वा मनोमयकोश इत्युच्यते । कथं, मनोविकारे सति संशयादिराहितमात्मानं संशयवन्तमिव, शोकमोहादिरहितमात्मानं शोकमोहादिवन्तमिव, दर्शनादिरहितमात्मानं दर्शनादिवन्तमिवावारयति । विज्ञानमयकोशो नाम ज्ञानेंद्रियाणि पंच बुद्धिश्च एतत् सर्वं मिलित्वा विज्ञानमयकोश इत्युच्यते । कर्तृत्वभोक्तृत्वाद्यभिमानेन इहलोकपरलोकगामी व्यावहारिक जीव इत्युच्यते ॥ ३७ ॥

विज्ञानविकारत्वे सति अकर्तारमात्मानं कर्तारमिव, अविज्ञातारमात्मानं विज्ञातारमिव, निश्चयरहितमात्मानं निश्चयवन्तमिव, जाड्यादिरहितमात्मानं जाड्यादिवन्तमिवावारयति । आनंदमयकोशो नाम प्रियमोदप्रमोदवृत्तिमत् अज्ञानप्रधानमंतःकरणं आनंदमयकोश इत्युच्यते । कथं प्रियमोदप्रमोदरहितमात्मानं प्रियमोदप्रमोदवन्तमिव, अभोक्तारमात्मानं भोक्तारमिव परिच्छिन्नसुखरहितमात्मानं परिच्छिन्नसुखवन्तमिव आच्छादयति । इष्टपुत्रादिदर्शनजं प्रियम् । प्रियलाभनिमित्तो हर्षो मोदः । स एव च प्रकृष्टो हर्षः प्रमोदः । एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपः । मनोमय इच्छाशक्तिमान् करणरूपः । प्राणमयः क्रियाशक्तिमान् कार्यरूपः । तत्र हेतुमाह । योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति । एतत् कोशत्रयं मिलितं सूक्ष्मशरीरमित्युच्यते । समष्टिव्यष्टी शास्त्रान्तराद्विशेषतो ज्ञेये शरीरत्रयविलक्षणत्वमुच्यते ॥ ३८ ॥

कथम् ? सत्यस्वरूपः असत्यस्वरूपो न भवति । असत्यस्वरूपः सत्यस्वरूपो न भवति । ज्ञानस्वरूपः जडस्वरूपो न भवति । जडस्वरूपः ज्ञानस्वरूपो न भवति । एवं सुखस्वरूपो दुःखस्वरूपो न भवति ।

दुःखस्वरूपः सुखस्वरूपो न भवति । एवं शरीरत्रयविलक्षणमुक्त्वा अवस्थात्रयसाक्षित्वमुच्यते ॥ ३९ ॥

कथम्? जाग्रदवस्था जाता, जाग्रदवस्था भवति, जाग्रदवस्था भविष्यति । स्वप्नावस्था जाता, स्वप्नावस्था भवति, स्वप्नावस्था भविष्यति । सुषुप्त्यवस्था जाता, सुषुप्त्यवस्था भवति, सुषुप्त्यवस्था भविष्यति । एवमवस्थात्रयमविकारतया जानाति । अत आत्मनः पंचकोशविलक्षणत्वं दृष्टान्तरूपेण प्रतिपादयाति । ममेयं गौः ममायं वत्सः, ममायं कुमारः, ममेयं कुमारी, ममेयं स्त्री, एवमादिपदार्थवान् पुरुषो न भवति । तेभ्यो विलक्षणः । तथा मम अन्नमयकोशः, मम प्राणमयकोशः, मम मनोमयकोशः, मम विज्ञानमयकोशः, मम आनंदमय कोशः । एवं पंचकोशवानात्मा न भवति । तेभ्यो विलक्षणः साक्षी ।

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥

इत्यादिश्रुतेः ॥ ४० ॥

इदानीमात्मनः सच्चिदानंदस्वरूपत्वमुच्यते । सद्रूपत्वं नाम केनाप्यबाध्यमानत्वेन कालत्रयेऽप्येकरूपेण विद्यमानत्वमुच्यते । चिद्रूपत्वं नाम साधनान्तरनिरपेक्षतया स्वयं प्रकाशमानः सन् स्वस्मिन्नारोपितसर्वपदार्थावभासकवस्तुत्व चिद्रूपत्वमित्युच्यते । आनंदस्वरूपं नाम परमप्रेमास्पदत्वं नित्यनिरतिशयत्वमानंदत्वमित्युच्यते । "नित्यविज्ञानमानंदं ब्रह्म रातिः दातुः परायणं" इति श्रुतेः । एवं नित्यशुद्धबुद्धमुक्तस्वभावम् । ब्रह्माहमस्मीति संशयासंभावनाविपरीतभावनाराहित्येन यस्तु जानाति स जीवन्मुक्तो भवतीति ॥ ४१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्य-
श्रीशंकराचार्यविरचितः आत्मानात्मविवेकः समाप्तः ।

———

## जीवन्मुक्तानंदलहरी।



पुरे पौरान्पश्यन्नरयुवतिनामाकृतिमयान्
सुवेषान्स्वर्णालंकरणकलितांश्चित्रसदृशान् ।
स्वयं साक्षी द्रष्टेत्यपि च कलयन् तैः सह रमन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥१॥
वने वृक्षान्पश्यन्दलभरभरान्नम्रसुशिखान्
घनच्छायाच्छन्नान्बहुलकलकूजाद्द्विजगणान् ।
भजन्वस्ते रात्राववनितलतल्पैकशयनो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ २ ॥
कदाचित्प्रासादे क्वचिदपि च सौधे च धवले
कदाकाले शैले क्वचिदपि च कूलेषु सरिताम् ।
कुटीरे दान्तानां मुनिजनवराणामपि वसन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ३ ॥
क्वचिद्बालैः साध करतलजतालैश्च हसितैः
क्वचिद्वै तारुण्यांकितचतुरनार्या सह रमन्।
क्वचिद्वृद्धैश्चिंतां क्वचिदपि तदन्यैश्च विलपन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ४ ॥
कदाचिद्विद्वद्भिर्विविधसुपुरानंदरासिकैः
कदाचित्काव्यालंकृतरसरसालैः कविवरैः ।
वदन्वादांस्तर्कैरनुमितिपरैस्तार्किकवरै
र्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५ ॥
कदा ध्यानाभ्यासैः क्वचिदपि सपर्यां विकसितैः
सुगंधैः सत्पुष्पैः क्वचिदपि दलैर्वा विमलैः ।
प्रकुर्वन्देवस्य प्रमुदितमनाः संस्तुतिपरो

मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ६ ॥
शिवायाः शंभोर्वा क्वचिदपि च विष्णोरपि कदा
गणाध्यक्षस्यापि प्रकटतपनस्यापि च कदा ।
पठन्वै नामालिं नयनरचितानंदसलिलो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ७ ॥
कदा गंगांभोभिः क्वचिदपि च कूपोत्थितजलैः
क्वचित्कासारोत्थैः क्वचिदपि सदुष्णैश्च शिशिरैः ।
भजन्स्नानैर्भूत्या क्वचिदपि च कर्पूरनिभया
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ८ ॥
कदाचिज्जागृत्यां विषयकरणैः संव्यवहरन्
कदाचित्स्वप्नस्थानपि च विषयानेव च भजन् ।
कदाचित्सौषुप्तं सुखमनुभवन्नेव सततं
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ९ ॥
कदाप्याशावासाः क्वचिदपि च दिव्यांबरधरः
क्वचित्पंचास्योत्थां त्वचमपि दधानः कटितटे ।
मनस्वी निःशंकः स्वजनहृदयानंदजनको
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १० ॥
कदाचित्सत्त्वस्थः क्वचिदपि रजोवृत्तियुगत-
स्तमोवृत्तिः क्वापि त्रितयरहितः क्वापि च पुनः ।
कदाचित्संसारी श्रुतिपथविहारी क्वचिदहो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ११ ॥
कदाचिन्मौनस्थः क्वचिदपि च वाग्वादनिरतः
कदाचित्स्वानंदे हसति रभसा त्यक्तवचसा ।
कदाचिल्लोकानां व्यवहृतिसमालोकनपरो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १२ ॥

कदाचिच्छक्तीनां विकचमुखपद्मेषु कवलान्
क्षिपंस्तासां क्वापि स्वयमपि च गृह्णन्स्वमुखतः।
तदद्वैतं रूपं निजपरविहीनं प्रकटयन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १३ ॥
क्वचिच्छैवैः सार्धं क्वचिदपि च शाक्तैः सह रमन्
कदा विष्णोर्भक्तैः क्वचिदपि च सौरैः सह वसन्।
कदाचिद्गाणेशैर्गतसकलभेदोऽद्वयतया
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १४ ॥
निराकारं क्वापि क्वचिदपि च साकारममलं
निजं शैवं रूपं विविधगुणभेदेन बहुधा।
कदाश्चर्यं पश्यन्किमिदमिति हृष्यन्नपि कदा
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १५ ॥
कदा द्वैतं पश्यन्नखिलमपि सत्यं शिवमयं
महावाक्यार्थानामवगलसमभ्यासवशतः।
गतद्वैताभावः शिवशिवशिवेत्येव विलपन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १६ ॥
इमां मुक्तावस्थां परमशिवसंस्थागुरुकृपा-
सुधापांगावाप्यां सहजसुखवाप्यामनुदिनम्।
मुहुर्मज्जन्मज्जन्भजति सुकृती चेन्नरवर-
स्तदा योगी त्यागी कविरिति वदन्तीह कवयः ॥ १७ ॥
मौने मौनी गुणिनि गुणवान्पंडिते पंडितश्च
दीने दीनः सुखिनि सुखवान्भोगिनि प्राप्तभोगः।
मूर्खे मूर्खो युवतिषु युवा वाग्मिनि प्रौढवाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ १८ ॥
इति जीवन्मुक्तानंदलहरी संपूर्णा ॥

# वाक्य-सुधा ।



रूपं दृश्यं लोचनं दृक्तद्दृश्यं दृक्तु मानसम् ।
दृश्या धीवृत्तयः साक्षी दृगेव तु न दृश्यते ॥ १ ॥
नीलपीतस्थूलसूक्ष्मह्रस्वदीर्घादिभेदतः ।
नानाविधानि रूपाणि पश्येल्लोचनमेकधा ॥ २ ॥
आंध्यमांद्यपटुत्वेषु नेत्रधर्मेषु चैकधा ।
संकल्पयेन्मनःश्रोत्रत्वगादौ योज्यतामिदम् ॥ ३ ॥
कामः संकल्पसंदेहौ श्रद्धाऽश्रद्धे धृतीतरे ।
ह्रीर्धीर्भीरित्येवमादीन्भासयत्येकधा चितिः ॥ ४ ॥
नोदेति नास्तमेत्येषा न वृद्धिं याति न क्षयम् ।
स्वयं विभात्यथान्यानि भासयेत्साधनं विना ॥ ५ ॥
चिच्छायाऽऽवेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता ।
एकाहंकृतिरन्या स्यादंतःकरणरूपिणी ॥ ६ ॥
छायाहंकारयोरैक्यं तप्तायःपिंडवन्मतम् ।
तदहंकारतादात्म्याद्देहश्चेतनतामगात् ॥ ७ ॥
अहंकारस्य तादात्म्यं चिच्छायादेहसाक्षिभिः ।
सहजं कर्मजं भ्रान्तिजन्यं च त्रिविधं क्रमात् ॥ ८ ॥
संबधिनोः सतोर्नास्ति निवृत्तिः सहजस्य तु ।
कर्मक्षयात्प्रबोधाच्च निवर्तेते क्रमादुभे ॥ ९ ॥
अहंकारलये सुप्तौ भवेद्देहोऽप्यचेतनः ।
अहंकारविकासार्धः स्वप्नः सर्वस्तु जागरः ॥ १० ॥
अंतःकरणवृत्तिश्च चितिच्छायैक्यमागता ।
वासनाः कल्पयेत्स्वप्ने बोधेऽक्षैर्विषयान्बहिः ॥११॥
मनोऽहंकृत्युपादानं लिंगमेकं जडात्मकम् ।

अवस्थात्रयमन्वेति जायते म्रियते तथा ॥१२॥
शक्तिद्वयं हि मायाया विक्षेपावृतिरूपकम् ।
विक्षेपशक्तिर्लिंगादि ब्रह्मांडान्तं जगत्सृजेत् ॥१३॥
सृष्टिर्नाम ब्रह्मरूपे सच्चिदानंदवस्तुनि ।
अब्धौ फेनादिवत्सर्वनामरूपप्रसारणा ॥१४॥
अंतर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥१५॥
साक्षिणः पुरतो भातं लिंगं देहेन संयुतम् ।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥१६॥
अस्य जीवत्वमारोपात्साक्षिण्यप्यवभासते ।
आवृतौ तु विनष्टायां भेदे भातेऽपयाति तत् ॥ १७ ॥
तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ।
या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ १८ ॥
अत्राप्यावृतिनाशेन विभाति ब्रह्मसर्गयोः ।
भेदस्तयोर्विकारः स्यात्सर्गे न ब्रह्मणि क्वचित् ॥१९॥
अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम् ।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ २० ॥
खवाय्वग्निजलोर्वीषु देवतिर्यङ्नरादिषु ।
अभिन्नाः सच्चिदानंदा भिद्येते रूपनामनी ॥ २१ ॥
उपेक्ष्य नामरूपे द्वे सच्चिदानंदतत्परः ।
समाधिं सर्वदा कुर्यात् हृदये वाथवा बहिः ॥ २२ ॥
सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि ।
दृश्यशब्दानुवेधेन सविकल्पः पुनर्द्विधा ॥ २३ ॥
कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् ।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥ २४ ॥

असंगः सच्चिदानंदः स्वप्रभो द्वैतवर्जितः ।
अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २५ ॥
स्वानुभूतिरसावेशाद्दृश्यशब्दानुपेक्षितुः ।
निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् ॥ २६ ॥
हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ।
समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ २७ ॥
अखंडैकरसं वस्तु सच्चिदानंदलक्षणम् ।
इत्यविच्छिन्नचिंतेयं समाधिर्मध्यमो भवेत् ॥ २८ ॥
स्तब्धीभावो रसास्वादात् तृतीयः पूर्ववन्मतः ।
एतैः समाधिभिः षड्भिर्नयेत्कालं निरंतरम् ॥ २९ ॥
देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ३० ॥
भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ३१ ॥
अवच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पितः ।
विज्ञेयस्त्रिविधो जीवस्तत्राद्यः पारमार्थिकः ॥ ३२ ॥
अवच्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवम् ।
तस्मिञ्जीवत्वमारोपाद् ब्रह्मत्वं तु स्वभावतः ॥ ३३ ॥
अवच्छिन्नस्य जीवस्य पूर्णेन ब्रह्मणैकताम् ।
तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः ॥ ३४ ॥
ब्रह्मण्यवस्थिता माया विक्षेपावृतिरूपिणी ।
आवृत्याखंडतां तस्मिञ्जगज्जीवौ प्रकल्पयेत् ॥ ३५ ॥
जीवो धीस्थचिदाभासो भवेद्भोक्ता हि कर्मकृत् ।
भोज्यरूपमिदं सर्वं जगत्स्याद्भूतभौतिकम् ॥ ३६ ॥
अनादिकालमारभ्य मोक्षात्पूर्वमिदं द्वयम् ।

व्यवहारे स्थितं तस्मादुभयं व्यावहारिकम् ॥ ३७ ॥
चिदाभासस्थिता निद्रा विक्षेपावृतिरूपिणी ।
आवृत्य जीवजगती पूर्वे नूत्नं तु कल्पयेत् ॥ ३८ ॥
प्रतीतिकाल एवैते स्थितत्वात्प्रातिभासिके ।
नहि स्वप्नप्रबुद्धस्य पुनः स्वप्ने स्थितिस्तयोः ॥ ३९ ॥
प्रातिभासिकजीवो यस्तज्जगत्प्रातिभासिकम् ।
वास्तवं मन्यतेऽन्यस्तु मिथ्येति व्यावहारिकः ॥ ४० ॥
व्यावहारिकजीवो यस्तज्जगद्व्यावहारिकम् ।
सत्यं प्रत्येति मिथ्येति मन्यते पारमार्थिकः ॥ ४१ ॥
पारमार्थिकजीवस्तु ब्रह्मैक्यं पारमार्थिकम् ।
प्रत्येति वीक्षते नान्यद्वीक्षते त्वनृतात्मना ॥ ४२ ॥
माधुर्यद्रवशैत्यानि नीरधर्मास्तरंगके ।
अनुगम्याथ तन्निष्ठे फेनेप्यनुगता यथा ॥ ४३ ॥
साक्षिस्थाः सच्चिदानंदाः संबंधा व्यावहारिके ।
तद्द्वारेणानुगच्छन्ति तथैव प्रातिभासिके ॥ ४४ ॥
लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरंगके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥ ४५ ॥
प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ।
तल्लये सच्चिदानंदाः पर्यवस्यन्ति साक्षिणि ॥ ४६ ॥

———

# अध्यात्मपटलविवरणम् ।

अथवा

## आपस्तंबीयधर्मप्रथमप्रश्नाष्टमपटलं
## श्रीमच्छंकरभगवत्पादप्रणीतविवरणोपेतम् ।

——:०:——

**आध्यात्मिकान् योगाननुतिष्ठेन्न्यायसंहितानैश्चारिकान् ॥१॥**

ॐ अथ 'आध्यात्मिकान् योगान्—' इत्यादि अध्यात्मपटलस्य संक्षेपतो विवरणं प्रस्तूयते । किमिह प्रायश्चित्तप्रकरणे समाम्नानस्य प्रयोजनमिति । उच्यते । कर्मक्षयहेतुत्वसामान्यात् । अनिष्टकर्मक्षयहेतूनि हि प्रायश्चित्तानि भवन्ति । सर्वं च कर्म वर्णाश्रमविहितमनिष्टमेव विवेकिनः, देहग्रहणहेतुत्वात् । तत्क्षयकारणं चात्मज्ञानं, प्रवृत्तिहेतुदोषनिवर्तकत्वात् । दोषाणां च निर्घात आत्मज्ञानवतः पंडितस्य धर्माधर्मक्षये क्षेमप्राप्तिरिह विवक्षितेत्यात्मज्ञानार्थमध्यात्मपटलमारभ्यते, कर्मक्षयहेतुत्वसामान्यात् ।

ननु वर्णाश्रमविहितानां कर्मणामफलहेतुत्वात् तत्क्षयो नेष्ट इति, न, 'सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्'' (आप. ध.सू. २.२.२) इत्यादिश्रवणात् ! अपरिमितवचनात् क्षेमप्राप्तिरेवेति चेन्न, 'तत्परिवृत्तौ कर्मफलशेषेण—' इत्यादिश्रवणात् ।

गौतमे च— "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय—" इत्यादिना संसारगमनमेव दर्शयति कर्मणां फलम् । सर्वाश्रमाणां हि दोषनिर्घातलक्षणानि समयपदानि विधिनानुतिष्ठन् सार्वगामी भवति, न तु स्वधर्मानुष्ठानात् । वक्ष्यति च—'विधूय कविः—' ( सू० ५ ) "सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् " (२. २१.१३) इत्यादि ।

"तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति" (२.२१.२) इति वचनात् क्षेमशब्दस्य चापवर्गार्थत्वात् सर्वाश्रमकर्मणां ज्ञानरहितानामेव फलार्थत्वं, ज्ञानसंयुक्तानि तु क्षेमप्रापकाणि, यथा विषदध्यादीनि मंत्रशर्करादिसंयुक्तानि कार्यान्तरारंभकाणि, तद्वदिति चेन्न, अनारभ्यत्वात् क्षेमप्राप्तेः। यदि हि क्षेमप्राप्तिः कार्या स्यात्, तत इदं चिंत्यं—किं केवलैः कर्मभिरारभ्या ज्ञानसहितैर्वा ज्ञानकर्मभ्यां वा केवलेन ज्ञानेन कर्मासंयुक्तेन वेति। न त्वारभ्या केनचिदपि क्षेमप्राप्तिः नित्यत्वात्। अतोऽसदिदं ज्ञानसंयुक्तानि कर्माणि क्षेमप्राप्तिमारभन्त इति। ज्ञानसंयुक्तानां ज्ञानवदेव क्षेमप्राप्तिप्रतिबंधापनयकर्तृत्वमिति चेन्न, सकार्यकारणानामेव कर्मणां क्षेमप्राप्तिप्रतिबंधकत्वात्। अविद्यादोषहेतूनि हि सर्वकर्माणि सहफलैः कार्यभूतैः क्षेमप्राप्तिप्रतिबंधकानि। तदभावमात्रमेव हि क्षेमप्राप्तिः। न च तदभाव आत्मज्ञानादन्यतः कुतश्चिदुपलभ्यते। तथाह्युक्तं— "निर्हृत्य भूतदाहान् क्षेमं गच्छति पंडितः" (सू० ११) इति। पांडित्यं चेहात्मज्ञानं, प्रकृतत्वात्। श्रुतेश्च— "आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तै. २. ९) इति। अभयं हि क्षेमप्राप्तिः। 'अभयं वै जनक! प्राप्तोऽसि' (बृ. ४. २. ४) इति श्रुत्यंतरात्।

"तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति" (२.२१.२) इति आचार्यवचनमन्यार्थम्। कथं, यथोपदिष्टेष्वाश्रमधर्मेष्वव्यग्रो निष्कामः सन् प्रवर्तमानो ज्ञानेऽधिकृतो भवति, न यथेष्टं चेष्टन् कामकामी जायापुत्रवित्तादिकामापहृतव्यग्रचेताः। ज्ञानी च सन् सर्वसंन्यासक्रमेण क्षेमं गच्छतीत्येषोऽर्थः। नहि दोषनिर्घातः कदाचिदपि कर्मभ्य उपपद्यते। समिथ्याज्ञानानां हि दोषाणां प्रवृत्तौ सत्यां प्राबल्यमिहोपलभ्यते। 'संकल्पमूलः कामः' इति च स्मृतेः। प्रवृत्तिमान्द्ये च दोषतनुत्वदर्शनात्। न चानिर्हृत्य समिथ्याज्ञानान् दोषान् क्षेमं प्राप्नोति कश्चित्।

न च जन्मान्तरसंचितानां शुभकर्मणां विहितकर्मभ्यो निवृत्तिरुपपद्यते, शुद्धिसामान्ये विरोधाभावात् । सत्सु च तेषु तत्फलोपभोगाय शरीरग्रहणं, ततो धर्माधर्मप्रवृत्तरागद्वेषौ, पुनः शरीरग्रहणं चेति संसारः केन वार्यते । तस्मान्न कर्मभ्यः क्षेमप्राप्तिस्तत्प्रतिबंधनिवृत्तिर्वा । कर्मसहिताज्ज्ञानादविद्यानिवृत्तिरिति चेत् । यद्यपि ज्ञानकर्मणोर्भिन्नकार्यत्वात् विरोधः । तथापि तैलवर्त्यग्नीनामिव संहत्य कर्मणा ज्ञानमविद्यादि संसारकारणं निवर्तयतीति चेन्न । क्रियाकारकफलानुपमर्देनात्मलाभाभावात् ज्ञानस्य कर्मभिः संहतत्वानुपपत्तेः । तैलवर्त्यग्नीनां तु सहभावित्वोपपत्तेरितरेतरोपकार्योपकारकत्वोपपत्तेश्च संहतत्वं स्यात् । न तु ज्ञानकर्मणोस्तदुभयानुपपत्तेः संहतत्वं कदाचिदपि संभवति । केवलज्ञानपक्षे शास्त्रप्रतिषेधवचनादयुक्तमिति चेन्न । ज्ञानकार्यानिवर्तकत्वाच्छास्त्रप्रतिषेधवचनस्य । योऽयं कर्मविधिपरैः केवलज्ञानपक्षस्य सर्वसंन्यासस्य विप्रतिषेधो विरोधः, स नैव ज्ञानकार्यमविद्यादोषक्षयं वारयति 'भिद्यते हृदयग्रान्थिः' ( मुं- २. २. ८ ) 'तस्य तावदेव चिरं' ( छां. ६. १४. २ ) 'मृत्युमुखात् प्रमुच्यते' ( कठ. ३. १५ ) इत्येवमादिश्रुतिस्मृतिशतासिद्धं, कर्मविधिपरत्वात् प्रवृत्तिशास्त्रस्य । न च तत् ज्ञानस्वरूपं ब्रह्मात्मैकत्वविषयं वारयति, सर्वोपनिषदामप्रामाण्यानर्थक्यप्रसंगात्, 'पूः प्राणिनः—'( सू४) 'आत्मा वै देवता' इत्यादिस्मृतीनां च । तस्माद्यद्यपि बहुभिः प्रवृत्तिशास्त्रैर्विप्रतिषिद्धं केवलज्ञानशास्त्रमात्मैकत्वविषयमल्पं, तथापि सकार्यस्य ज्ञानस्य बलवत्तरत्वान्न केनचिद्वारयितुं शक्यम् । जीवतो दुःखानिवर्तकत्वाज्ज्ञानस्यानैकान्तिकं क्षेमप्रापकत्वमिति चेन्न, 'भिद्यते हृदयग्रंथिः' (मुं. २-२-८ ) 'ब्रह्मविदाप्नोति परं' (तै. २-१) 'निचाय्य तं मृत्युमुखात् प्रमुच्यते'(कठ ३-१५)'ब्रह्म वेद ब्रह्मैव भवति'(मुं. ३-२-९) इत्यादिश्रुतिस्मृतिन्यायेभ्यः । बहुभिर्विप्रतिषिद्धत्वात् सर्वत्यागशास्त्रस्य लोकवत् त्याज्यत्वमिति चेन्न, तुल्यप्रमाणत्वात्—मानसान्तानि सर्वाणि कर्माण्युक्त्वा "तानि

ऩ्वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" (नारायण ७८) इति तपःशब्दवाच्यानां कर्मणामवरत्वेन संसारविषयत्वमुक्त्वा न्यासशब्दवाच्यस्य ज्ञानस्य केवलस्य 'न्यास एवात्यरेचयत्' 'त्यागेनैके अमृतत्वमानशुः" (ना. ३) इत्यमृतत्वं फलं दर्शयति शास्त्रम् । "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः" (ना. ८०) इत्यादिना च विदुषः सर्वकर्माभावं दर्शयति । "द्वौ पंथानावनुनिष्क्रान्ततरौ कर्मपथश्चैव पुरस्तात् संन्यासश्च, तयोः संन्यास एवातिरेचयति" इति च । विप्रतिषेधवचनस्य निन्दापरत्वादयुक्तमिति चेन्न । अविद्वाद्विषयस्य कर्मणः स्तुत्यर्थत्वोपपत्तेः। मंदबुद्धयो हि लोके दृष्टप्रयोजनाः प्ररोचनेन प्रवर्तयितव्याः । कर्मसु न दृष्टप्रयोजना विद्वांसः । परनिंदा हि परस्तुतिरिति केवलज्ञाननिंदया कर्मस्तुतिपरमाचार्यवचनम् । यत्तु "बुद्धे चेत् क्षेमप्रापणं, इहैव न दुःखमुपलभेत" (२. २१. १६) इति ज्ञानस्य साधनत्वात् नैकांतिकवचनं, तत् 'ब्रह्मविदाप्नोति परम्' (तै. २.१) इत्यादिवाक्येभ्यः प्रत्युक्तम् । आचार्यान्तरवचनाच्च 'त्यज धर्ममधर्मं च' 'न तत्र क्रमते बुद्धिः' 'नैष्कर्म्यमाचरेत्' 'तस्मात् कर्म न कुर्वन्ति' इत्यादेः । तस्मात् केवलादेव ज्ञानात् क्षेमप्राप्तिः ॥

अथाध्यात्मिकान् योगानिति । अध्यात्मं भवन्तीत्यध्यात्मिकाः । छांदसं ह्रस्वत्वम् । के ते अध्यात्मिका योगाः । वक्ष्यमाणा अक्रोधादयः । ते हि चित्तसमाधानहेतुत्वात् योगाः । बाह्यनिमित्तनिरपेक्षत्वाच्चाध्यात्मिकाः । तानध्यात्मिकान् योगान् । न्यायसंहितान् उपपत्तिसमन्वितान् । ते हि क्रोधादिषु दोषनिर्घातं प्रति समर्था उपपद्यंते न्यायतः । अनैश्चारिकान् निश्चारयन्ति मनोऽन्तःस्थं बहिर्विषयेभ्य इति नैश्चारिकाः क्रोधादयो दोषाः, तत्प्रतिपक्षभूता ह्येते तेऽनैश्चारिकाः । अक्रोधादिषु हि सत्सु चित्तमनिश्चरणस्वरूपं प्रसन्नमात्मावलंबनं तिष्ठति । अतस्ताननुतिष्ठेत् सेवेत । अक्रोधादिलक्षणं चित्तसमाधानं कुर्यादित्यर्थः । तथा हि परः

स्व आत्मा लभ्यते । क्रोधादिदोषापहृतचेतस्तया हि स्वोऽपि पर आत्माऽविज्ञातोऽलब्ध इव सर्वस्य यतः, अतस्तल्लाभाय योगानुष्ठानं कुर्यात् ॥१॥

पुत्रवित्तादिलाभो हि परो दृष्टो लोके । किमात्मलाभेनेत्यत आह—

**आत्मलाभान्न परं विद्यते ॥ २ ॥**

आत्मलाभात् आत्मनः परस्य स्वरूपप्रतिपत्तेः न परं लाभान्तरं विद्यते । तथा विचारितं बृहदारण्यके— 'तदेतत् प्रेयः पुत्रात्' (बृ. १.४.८) इत्यादिना ॥ २ ॥

**तत्रात्मलाभीयांछ्लोकानुदाहरिष्यामः ॥३॥**

सत्यं क्रोधादयो दोषा आत्मलाभप्रतिबन्धभूता अक्रोधादिभिर्निर्हन्यन्ते । तथापि न मूलोद्वर्तनेन निवृत्तिः क्रोधादीनां, सर्वदोषबीजभूतमज्ञानं न निवृत्तमिति । तस्य चानिवृत्तौ बीजस्यानिवर्तितत्वात् सकृन्निवृत्ता अपि क्रोधादयो दोषाः पुनरुद्भविष्यन्तीति संसारस्यात्यंतिकोच्छेदो न स्यात् । तद्दोषबीजभूतस्याज्ञानस्य ज्ञानादन्यतो न निवृत्तिरित्यात्मस्वरूपप्रकाशनायाऽज्ञानाय मतान्, शाखान्तरोपनिषद्वचः, तत्र तस्मिन् आत्मलाभप्रयोजने निमित्ते । आत्मानं करतलन्यस्तमिव लंभायितुं समर्थान् आत्मलाभीयान् श्लोकानुदाहरिष्यामः उद्धृत्याहरिष्याम । ग्रंथीकृत्य दर्शयिष्याम इत्यर्थः ॥३॥

**पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्य ।**
**अचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः ॥ ४ ॥**

पूः पुरं शरीरम् । प्राणिनः प्राणवन्तः । सर्व एव ब्रह्मादीनि स्तंबपर्यन्तानि । प्राणिनः पुरं पुरमिव राज्ञः उपलब्ध्यधिष्ठानम् । कस्य पुरं, गुहाशयस्यात्मनः । यथा स्वकीये, पुरे राजा सचिवादिपरिवृत उपलभ्यते, एवं देहेष्वात्मा बुद्ध्यादिकरणसंयुक्त उपलभ्यते । उपलभते च बुद्ध्यादिकरणोपसंहृतान् भोगान् । अतोऽविद्यावरणात्मभूतायां बुद्धिगुहायां शेत इति गुहाशयः । तस्य पुरम् । तस्यां बुद्धावविद्यादिदोषमलापनये विद्व-

द्भिस्त्यक्तैषणैरुपलभ्यते । इदमपरं विशेषणं गुहाशयस्य अहन्यमानस्य, छेदनभेदनजरारोगादिभिर्हन्यमाने देहे न हन्यते । 'न वधेनास्य हन्यते' (८-१०-४) इति छांदोग्ये । तस्य विकल्मषस्य, कल्मषं पापं तदस्य नास्तीति विकल्मषः । सर्वं ह्यविद्यादोषसहितं धर्माधर्माख्यं कर्म कल्मषं भवति; विकल्मषस्येति विशेषणेन प्रतिषिध्यते; तत्कार्यं जरारोगादिदुःखरूपमहन्यमानस्येति । एवं हेतुफलसंबंधरहितस्यासंसारिण उपलब्ध्यधिष्ठानं पुः सर्वे प्राणिनः । अतो न संसार्यन्योऽस्ति । 'एको देवः सर्वभूतेषु गूढः' (६. ११) इति श्वेताश्वतरे । "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते" (३.१२) इति च काठके । 'नान्यदतोऽस्ति द्रष्टृ' (३.८.११) इत्यादि वाजसनेयके । 'स आत्मा तत्वमसि' (६. ८. ७) इति च छांदोग्ये । पूर्वार्धेन ब्रह्मणो याथात्म्यमुक्त्वोत्तरार्धेन तद्विज्ञानवतस्तद्विज्ञानफलमाह-यस्य सर्वे प्राणिनः पुरं अहन्यमानस्य विकल्मषस्य, तस्य सर्वप्राणिसंबंधादर्थसिद्धमाकाशवत् सर्वगतत्वं, 'आकाशवत् सर्वगतश्च नित्यः' इति च श्रुतेः । सर्वगतस्य चाचलत्वमर्थसिद्धमेव । तमचलं चलनिकेतं चलायां हि प्राणिगुहायां स्वयं शेते तमचलं चलनिकेतम् । येऽनुतिष्ठन्ति ममात्मेति साक्षात् प्रतिपद्यन्ते; तेऽमृताः अमरणधर्माणो भवन्ति ॥ ४॥

कथं तदनुष्ठानमिति । उच्यते—

**यदिदमिदिहेदिह लोके विषयमुच्यते ।**
**विधूय कविरेतदनुतिष्ठेद् गुहाशयम् ॥ ५ ॥**

यदिदं प्रत्यक्षतोऽवगम्यमानं स्त्र्यन्नपानादिसंभोगलक्षणम् । इदिति किंचिदर्थे यत्किंचिदिदं प्रत्यक्षम् । इहास्मिन् लोके । विषयम् । इदंशब्दसामानाधिकरण्यान्नपुंसकलिंगप्रयोगो विषयमिति; लिंगव्यत्ययो वा द्रष्टव्यः । छांदसो वा प्रयोगो विषयमिति । उभयलिंगो वा विषयशब्दः । द्वितीय इच्छब्द इहशब्दश्च । तयोः क्वचिन्नियोगः । इच्छब्दश्चार्थे । इहशब्दोऽमुष्मिन्नर्थे । लोकशब्दः काकाक्षिवदुभयत्र संबध्यते,

इह लोके इह च लोकेऽमुष्मिंश्च यदिदं विषयमुच्यते, स्वर्गादिलोके पार्श्वस्थमध्यस्थो व्यपदिशति इह लोक इति च लोक इति, तत्सर्वं विधूय परित्यज्य। कविः क्रान्तदर्शी, मेधावीत्यर्थः। फलं साधनं च तद्विधूय एषणात्रयात् व्युत्थायेत्यर्थः। अनुतिष्ठेत् गुहाशयं यथोक्तलक्षणमात्मतत्त्वम् ॥ ५ ॥

तत् क्वानुष्ठातव्यमिति। उच्यते—

**आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम्।**
**अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया।**
**महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥ ६ ॥**

आत्मन्नेव आत्मन्येव। प्रत्यगात्मा हि परमात्मा। सर्वं ह्यत्रानुष्ठेयम्। यदि देहादन्यत्रानुष्ठीयेत, सोऽनात्मा कल्पितः स्यात्। तस्माद् देहादिसंघात आत्मन्येव विधूय बाह्यासंग गुहाशयमात्मतत्त्वमनुष्ठेयम्। किमन्येष्वननुष्ठेयमिति भगवतो मतम्। बाढम्। प्रथममेव नान्येष्वनुष्ठेयमात्मतत्त्वम्। कथं तर्हि; सर्वप्रयत्नेनापि स्वदेहादिसंघाते यथोक्तमात्मतत्त्वं न लभेत, अथाहमन्येष्वादित्यादिषु प्रतीच्छामि अभिवांछामि। साधुष्ठानं साधोः परमात्मनः उपलब्धिस्थानं, यत्र गुहाशयं ब्रह्मतत्त्वमनुष्ठेयम्। अनपेक्षतयान्यत् पुत्रवित्तलोकादिसुखं छित्वा निःस्पृहतया। न ह्यात्मानुष्ठानं बाह्यार्थाकांक्षा च सह संभवतः। कस्मात् पुनरनेकान्यन्यानि हितप्रकाराण्यनपेक्ष्यात्मानुष्ठानमेव यत्नत आस्थीयत इत्यत आहाचार्यः— यथान्यान्यहितानि हितबुद्ध्या परिगृहीतानि, न तथैवमात्मसेवनम्। किं तर्हि एतत् हितमेव। तस्मात् सेवस्वेति। किंविशिष्टश्चात्मा सेवितव्य इत्याह—महान्तम् अमितान्तम्, अनन्तरत्वादबाह्यत्वाच्च महानात्मा, तं महान्तम्। गुणैर्वोपाधिसहचारिभिर्महान्तं, बृंहणमिति यद्वत्। तेजस्कायं तेजःशरीरमित्यर्थः। चैतन्यात्मज्योतिःस्वरूपम्। तद्धि तेजसां तेजः। 'येन सूर्यस्तपति तेजसेद्ध.' 'तस्य भासा सर्वमिदं विभाति' [मुं. २-

२. १० ] इति श्रुतेः । सर्वत्र सर्वदेहेषु ब्रह्मादिस्तंबपर्यंतेषु । निहितं स्थितं उपलब्धिस्वरूपेणाभिव्यक्तमित्यर्थः । न हि ब्रह्मणोऽभिव्यक्तिनिमित्तव्यतिरेकेण कस्यचिदाधारत्वसंभवः । निराधारं हि ब्रह्म, सर्वगतत्वोपपत्तेः । प्रभुं प्रभवति सर्वानीश्वरान् प्रति । अचिंत्यशक्तित्वात् । एवमाद्यनंतगुणविशिष्टमात्मानं सेवस्वेति ॥ ६ ॥

**सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः ।**
**अनंगोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः ।**
**स सर्वं परमा काष्ठा स वैषुवतं स वैभाजनं पुरम् ॥ ७ ॥**

विशिष्टमात्मानं सेवस्वेति क्रियापदमनुवर्तते । किं च सर्वभूतेषु ब्रह्मादिष्वनित्येषु यो नित्योऽविनाशी । विपश्चिन्मेधावी, सर्वज्ञ इत्यर्थः । अमृतोऽत एव, यो ह्यनित्योऽसर्वज्ञः स मर्त्यो दृष्टः; अयं तु तद्विपरीतत्वादमृतः । ध्रुवः अविचलः । निष्कंपस्वभाव इत्यर्थः । अनंगः स्थूलशरीररहित इत्यर्थः । स्थूले हि शरीरे शिरआद्यंगानि संभवन्ति । अशरीर इति लिंगशरीरवर्जित इत्येतत् । अशब्दः नास्य शब्दगुणः संभवति । शब्दविद्धि सन् अन्यथा शब्दात्मकः शब्दात्मकमेव विजानीयात् । न चैतदस्ति । अतोऽशब्दः । तथाऽस्पर्शः आकाशवायुभूतद्वयगुणप्रतिषेधेन शब्दादयो गंधावसानाः सर्वभूतगुणाः प्रतिषिद्धा वेदितव्याः । तत इदं सिद्धमाकाशादपि सूक्ष्मत्वम् । शब्दादिगुणबाहुल्याद्वाय्वादिषु स्थौल्यतारतम्यमुपलभ्यते । शब्दादिगुणाभावात् निरतिशयसूक्ष्मत्वं सर्वगतत्वादि चाप्रतिबंधेन धर्मजातं तर्केणापि शक्यं स्थापयितुम् । महान्, अत एव शुचिर्निरंजनः । अथवा शुचिः पावन इत्यर्थः । शुचि हि वस्तु पावनं दृष्टम् । यथा लोके वाय्वग्न्यादि । किंच य आत्मा प्रकृतः, स सर्वम् । 'इदं सर्वं यदयमात्मा' [ बृ. ४. ५. ७ ] इति हि वाजसनेयके । न ह्यात्मव्यतिरेकेण किंचिन्निरूप्यमाणमुपपद्यते । अत एव परमा प्रकृष्टा काष्ठा अवसानम् । 'सा काष्ठा सा परा गतिः' [ कठ. ३. ११ ]

इति काठके । संसारगतीनां अवसानं निष्ठा समाप्तिरित्यर्थः । स वैषुवतं मध्यं सर्वस्य, सर्वान्तरश्रुतेः । विषुवत्सु वा दिवाकीर्त्येषु मंत्रेषु नित्यं प्रकाश्यं भवतीति वैषुवतः । स परमात्मा । ननु स सर्वं परमा काष्ठा स वैषुवतमित्युक्तम् । कस्मात् पुनस्तदात्मतत्त्वं विभक्तमुपलभ्यत इति । उच्यते । स परमात्मा वैभाजनं, विभक्तिर्विभजनं विवेकः आत्मनो यस्मिन् देहे क्रियते, तद्विभाजनमेव वैभाजनम् । आत्मनो विवेकोपलब्ध्यधिष्ठानं हि शरीरम् । तच्चानेकधा विभक्तम् । तदुपाध्यनुवर्तित्वात् वैभाजनं सर्वथा शुद्धमेव सर्वैर्नोपलभ्यते, किं तर्हि विभक्तो विपरीतश्चोपलभ्यते ॥ ७ ॥

**तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् ।**
**दुर्दर्शं निपुणं युक्तो यः पश्येत् स मोदेत विष्टपे ॥ ८ ॥**

अतस्तदुपाध्यनुवर्तिस्वभावदर्शनमविद्याख्यं हित्वा विद्यया शास्त्रजनितदर्शनेन तं यथोक्तलक्षणमात्मानमनुतिष्ठेत् । सर्वत्र सर्वस्मिन् काले । किंच न केवलमनुष्ठानमात्रमस्य । प्राध्वं बंधनं आत्मैकत्वरसप्रज्ञतां स्थिरां बाह्यैषणाव्यावृत्तरूपां सर्वसंन्यासलक्षणाम् । तद्धि बंधनं विदुषो ब्रह्मणि । एवं हि बद्धो ब्रह्मणि संसाराभिमुखो नावर्तते । तस्मात् बंधनं चास्य सदाचरेत् । तदनुष्ठानबंधने सदाचरतः किं स्यादित्युच्यते— दुर्दर्शं दुःखेन ह्येषणात्यागादिना स दृश्यत इति दुर्दर्शम् । निपुणं यस्माद्धि दुर्दर्शं तस्मान्निपुणम् । अत्यंतकौशलेन समाहितचेतसा युक्तो यः पश्येत् साक्षात् उपलभेत अहमात्मेति, स मोदेत । एवं दृष्ट्वा हर्षमानंदलक्षणं प्राप्नुयात् । विष्टपे विगतसंतापलक्षणेऽस्मिन् ब्रह्मणीत्यर्थः ॥ ८ ॥

**आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिंतयन् कविः ।**
**आत्मानं चैव सर्वत्र यः पश्येत् ।**
**स वै ब्रह्मा नाकपृष्ठे विराजति ॥ ९ ॥**

किंच आत्मन् पश्यन् आत्मनि पश्यन् उपलभमानः । सर्वभूतानि

सर्वाणि भूतानि । सर्वेषां भूतानां आत्मस्वरूपतामेव पश्यन्तीत्यर्थः । सर्वत्रात्मानं च परम् । न मुह्येत मोहं न गच्छेत । न ह्यात्मैकत्वदर्शिनो मोहावतारः; 'तत्र को मोहः' [ ईश. १२ ] इति च मंत्रलिंगात् । कीदृग्विशिष्टमात्मदर्शनं मोहनिबर्हणमित्याह—चिंतयन् उपसंहृतकरणः कविः मेधावी सन् ध्यायमानः । न शब्दजनितदर्शनमात्रेण मोहापगमः । सर्वभूतेष्वनुप्रविष्टमेकं संव्यवहारकाले यो हि युक्तः पश्येत्, स वै ब्रह्म ब्राह्मणः । नाकपृष्ठे सुखराशौ ब्रह्मणि । विराजति विविधं दीप्यते ॥९॥

**निपुणोऽणीयान् बिसोर्णाया यः सर्वमावृत्य तिष्ठति ।**
**वर्षीयाँश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति ॥**
**स इंद्रियैर्जगतोऽस्य ज्ञाना-**
**दन्योऽनन्यस्य ज्ञेयात् परमेष्ठी विभाजः ।**
**तस्मात् कायाः प्रभवन्ति सर्वे**
**स मूलं शाश्वतिकः स नित्यः ॥ १० ॥**

किंच निपुणः सर्ववित् अणीयान् अणुतरो बिसोर्णायाः बिसतंतोरपि कोऽसौ, यः प्रकृत आत्मा सर्वं समस्तं जगत् आवृत्य संव्याप्य तिष्ठति ॥ किंच वर्षीयान् वृद्धतरः स्थूलतरश्च पृथिव्याः । सर्वात्मको हि सः । ध्रुवः नित्यः सर्वं कृत्स्नमारभ्य संस्तंभनं कृत्वा । तिष्ठति वर्तते । 'येन द्यौरुग्रा पृथिवी च दृढा' ( ऋ. ) इति मंत्रलिंगात् । स सर्वेश्वरः सर्वज्ञः एको विज्ञेय इत्यर्थः । स परमात्मा इंद्रियैर्जन्यते यज्ज्ञानं जगतोऽस्य, तस्मात् ज्ञानादन्यो विलक्षणः, लौकिकज्ञानादन्य इति विशेषणाज्ज्ञानात्मक इत्येतत् सिद्धम् । 'सत्यं ज्ञानमनंतं ( तैत्ति.२.१ ) इति च श्रुतेः । अस्य जगत इंद्रियजन्यज्ञानादन्य इत्युक्तम् । अतश्च तद्व्यतिरिक्तं जगदिति प्राप्तम् । अतस्तन्मा भूदित्याह— अनन्यस्य अपृथग्भूतस्य जगतः, ज्ञेयात् ज्ञातव्यात् परमार्थस्वरूपाद्वयात् परमेश्वरात् घटादेरिव मृदः ।स च प्र-

मेष्ठी परमे प्रकृष्टे स्वे महिम्नि हृद्याकाशेऽवस्थातुं शीलमस्येति परमेष्ठी । स्वयमेव विभाजः विभक्तो देवपितृमनुष्यादिना ज्ञातृज्ञेयज्ञानभेदेन च, यस्मात् स एव ज्ञेय आत्मा स्वतो विभजति जगदनेकधा । तस्मादेवात्मनः कायाः शरीराण्याकाशादिक्रमेण प्रभवन्ति सर्वे ब्रह्मादिलक्षणाः । अतो मूलं स जगतः "यतो वा इमानि भूतानि जायन्ते" ( तैत्ति. ३-७ ) इति श्रुतेः । अत एव स शाश्वतिकः । यो हि पृथिव्यादिविकारः, सोऽबादिक्रमेण विनश्येत्, परं मूलकारणमापद्यते, सोऽशाश्वतिकोऽनित्यः । अयं चात्मा परं मूलम् । न तस्याप्यन्यन्मूलमस्ति । यतो जातो विनश्येत्, मूलमापद्यते, ततस्तद्विलक्षणत्वाच्छाश्वतिकः शश्वदेकरूपः । अतो नित्यः एकत्वमहत्त्वमूलत्वेभ्यश्च ॥१०॥

एवं यथोक्तमात्मानं विदितवत आध्यात्मिका योगा न्यायसहिता अप्रतिबंधेन भविष्यन्ति । मिथ्याप्रत्ययपूर्वका हि दोषाः । दोषनिमित्तश्च धर्माधर्मजनितः संसारः दोषनिवृत्तावत्यंतं विनिवर्तत इत्येतमर्थं दर्शयिष्यन्नाह––

दोषाणां तु निर्घातो योगमूल इह जीविते ।
निर्हृत्य भूतदाहान् क्षेमं गच्छति पंडितः ॥११॥

दोषाणां तु क्रोधादीनां निर्घातः विनाशः । योगा अक्रोधादयः, तन्मूलः तन्निमित्त इत्यतत् । अक्रोधादिषु हि सत्सु प्रतिद्वंद्विनो दोषा दुर्बलत्वान्निर्हन्यन्ते । इह जीवित इति दोषप्रभवकर्मानिमित्तत्वाज्जीवितस्य देहधारणावसानो दोषव्यापार इत्येतत् दर्शयति । तत्प्रतिपक्षेष्वक्रोधादिषु कथं नु नाम मुमुक्षवः प्रयत्नातिशयं कुर्युरिति योगदोषयोरितरेतरविरोधित्वे सति स्थितिगतिवत् योगेभ्यो दोषाणामेव निर्घातः, न पुनर्विपर्यय इत्येतत् कथमिति चेदुच्यते – सम्यग्दर्शनसचिवत्वात् बलवन्तो योगाः । मिथ्याप्रत्ययसाचिवत्वात् दुर्बलत्वान्निर्हन्यन्ते । निहन्तीत्येतदप्युक्तम् ! बुद्धिबलवद्भयस्तद्धीनानां लोके निर्घातो दृष्टः ।

"अक्रोधनः' (१.१.२३) 'क्रोधादींश्च—' (१.११.२५) इति लिंगात् । निर्हृत्य अपहृत्य । भूतदाहान् दोषेषु ह्युद्भूतेषु भूतानि दह्यन्त इव आग्निना परितप्यन्ते । अतो भूतदाहा दोषा उच्यन्ते, तान् निर्हृत्य । क्षेमं निर्भयं मोक्षं गच्छति । "आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तै. २ ९) 'अभयं वै जनक ! प्राप्तोऽसि' (बृ. ४-२-४) 'न भवति विदुषां ततो भयम्' इत्यादिश्रुतिस्मृतिभ्यः । न दोषप्रशममात्रेणाब्रह्मविदः क्षेमप्राप्तिरित्याह—पंडित इति । ब्रह्मविदि ह्यत्र पंडितशब्दः प्रयुक्तो, न शास्त्रविदि । "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य" [बृ. ३.५.१] इति श्रुतेः, इहात्मविद्याधिकारात् ।

यदि तर्हि दोषनिर्हरणं पंडितोऽप्यपेक्षेत, तं प्रति न हि ब्रह्मविद्या क्षेमप्राप्तिनिमित्तम् । यदि ब्रह्मविद्यैव क्षेमप्राप्तिनिमित्तं, ब्रह्मविद्यानंतरमेव न दुःखमुपलभेत । नैष दोषः । उक्तो ह्यत्र परिहारः—सम्यग्ज्ञानबलावष्टम्भात् बलिनो योगा दुर्बलान् दोषान् मिथ्याप्रत्ययभवान् निहन्तुमलमिति । तस्मात् ब्रह्मविद्ययैव क्षेमप्राप्तिः । अन्यथा दोषनिर्हरणकर्मक्षययोरसंभवात् ।

विद्यया चेत् दोषनिर्हरणकर्मक्षयाववश्यं भवतः, तत इदमयत्नकार्यत्वात् दोषनिर्हरणस्य नित्यानुवादरूपमनर्थकं, निर्हृत्येति । न, प्रवृत्तकर्माक्षिप्तत्वात् दोषाणाम् । द्विविधानि ह्यनेकजन्मांतरकृतानि कर्माणि फलदानाय प्रवृत्तान्यप्रवृत्तानि च । यत्तु प्रवृत्तं कर्म, तेनाक्षिप्ता दोषाः कर्तुः सुखदुःखादिफलदानाय, दोषाभावे फलारंभकत्वानुपपत्तेः । न हि रागद्वेषादिशून्ये सुखदुःखे प्रवृत्तिलब्धिः कदाचित् कस्यचिदिह दृश्यते । तस्मात् फलदानाय प्रवृत्तेन कर्मणाक्षिप्ता दोषाः प्रसंगेन प्राप्तबला यत्नतो निर्हर्तव्याः । प्रवृत्त्याधिक्यहेतुत्वप्रसंगात् । अत एवेदमुक्तं— दोषाणां तु निर्घातो योगमूल इह जीविते इति । मन्दमध्यमोत्तमविद्यापेक्षत्वाच्च । ब्रह्मविदामपि न सर्वेषां समा ब्रह्मप्रतिपत्तिः, विवेकातिशयदर्शनात् कस्य-

चित् । 'एष ब्रह्मविदां वरिष्ठ' (मुं. ३.१.४) इति च श्रुतेः । 'सम्यग्दर्शनसं-पन्न' इति च स्मृतेः । मंदमध्यमब्रह्मविदपेक्षया त्यागवैराग्येंद्रियजयाविधे-रर्थवत्त्वं, उत्तमब्रह्मविदां त्वर्थप्राप्तमेतत् सर्वमित्यनुवादमात्रम् । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' (गी. २. ५९) इति वचनात् गुणातीतलक्षण-वचनेभ्यश्च । प्रवृत्तकर्माक्षिप्तदोषात् तज्जनितचेष्टाभ्यश्च भवति विदुषोऽपि देहान्तरोत्पत्तिरिति चेत्, मुक्तेषुवत् प्रवृत्तकर्माक्षिप्तत्वात् विद्वद्दोषचेष्टान प्रवृत्तकर्मोपभोगेनैवोपक्षीणशक्तित्वात् प्रयोजनांतराभावाच्च न जन्मांतरा-रंभकत्वमुपपद्यते । यदप्रवृत्तं कर्म, ततः स्वावस्थमेव ब्रह्मविद्याहुताशन-दग्धबीजशक्तित्वान्नालं जन्मांतरारंभाय, 'क्षीयन्ते चास्य कर्माणि' (मुं. २.२.८) 'ज्ञानाग्निः सर्वकर्माणि' (गी.४-३७) इत्यादिश्रुतिस्मृतिभ्यः । अतः सिद्धा पंडितस्य दोषनिर्हरणात् क्षेमप्राप्तिः ॥ ११ ॥

**अथ भूतदाहीयान् दोषानुदाहरिष्यामः ॥ १२ ॥**

**क्रोधो हर्षो रोषो लोभो मोहो दंभो द्रोहो मृषोद्यमत्याश-परीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥ १३ ॥**

तत्र क्रोधस्ताडनाक्रोशनादिहेतुरंतःकरणविक्षोभो गात्रस्वेदकंपनादि-लिंगः । हर्षस्तद्विपरीतोऽभीष्टलाभजनितो बाष्परोमांचनादिलिंगः । रोषोऽ-निष्टविषयो मानसो विक्रियाविशेषः । लोभः परद्रव्येप्सा स्वद्रव्याविनियो-गस्तीर्थे । मोहः कार्याकार्याविवेकिता । दंभ आत्मनो धार्मिकत्वप्रकाशनम् । द्रोहः परानिष्टचिकीर्षा । मृषोद्यं अनृतवचनम् । अत्याशपरीवादौ अत्याशोऽति-मात्रमशनम् । परीवादोऽसमक्षं परदोषाभिधानम् । असूया परगुणेष्वक्षमा । काममन्यू । कामः स्त्रीव्यतिकराभिलाषः । मन्युस्तद्विघातकृत्सु द्वेषः । अनात्म्यं अनात्मवत्ता । एष क्रोधादिरयोगः, असमाधानलक्षणो ह्येष चेतसो विक्षेपप्रकारः । तेषां योगमूलो निर्घातः ॥ १२ ॥ ॥ १३ ॥

के पुनस्ते योगा इति उच्यते--

**अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदंभोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंसं तुष्टिरिति सर्वाश्रमाणां समयपदानि । तान्यनुतिष्ठन् विधिना सार्वगामी भवति ॥ ॥ १४ ॥**

अक्रोधोऽहर्षः इत्येवमाद्या अयोगविपरीताः । अतस्ते समाधिलक्षणत्वात् योगाः । संविभागः आत्मनो यात्रासाधनस्यार्थिभ्यः संविभजनम् । त्यागः दृष्टादृष्टेष्टभोगानां शक्तितः परित्यजनं, तत्साधनानां च । आर्जवम् ऋजुता, अदुष्टाकलनपूर्विका वाङ्मनःकायानां प्रवृत्तिः । मार्दवं मृदुत्वम् । शमोऽन्तःकरणोपशमः । दमो बाह्यकरणोपशमः । इदमन्यत् योगलक्षणं संक्षेपत उच्यते— सर्वभूतैरविरोधो योगः, विरोधे हि भूतानां पीडा । तदभावेऽपीडा । स एव सर्वभूतापीडालक्षणो योगः । आर्यं आर्याणां भावः अक्षुद्रता । आनृशंसं आनृशंस्यं अक्रौर्यम् । तुष्टिः लब्धव्यस्यालाभेऽपि चेतसः प्रसन्नतयावस्थानं लाभ इव । सर्वभूताविरोधलक्षणाहिंसा परिव्राजकस्यैव संभवतीत्यार्यादीनां त्रयाणां अन्येषां चाविरुद्धानां सर्वाश्रमान् प्रति प्राप्तिरितीतिशब्दसामर्थ्यात्, इतिशब्दस्य च प्रकारवचनत्वादार्यादीनीत्थंप्रकाराणि सर्वाश्रमान् प्रति गमयति सर्वाश्रमाणां समयपदानीति । समयस्थानानीत्येतत् । अवश्यानुष्ठेयानीत्यर्थः । तान्येतानि यथोक्तान्यनुतिष्ठन् विधिना सर्वगामी सर्वगमनशीलः, ज्ञानाभिव्यक्तिक्रमेण । भवति मुच्यत इत्यर्थः ॥ १४ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ आपस्तम्बीये धर्मशास्त्रे अध्यात्मपटलविवरणं समाप्तम् ।

---

# सनत्सुजातीयभाष्यम् ।

## प्रथमोऽध्यायः ।

धृतराष्ट्र उवाच ॥ अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यते ।
तन्मे शुश्रूषतो ब्रूहि विचित्राणि हि भाषसे ॥ १ ॥
विदुर उवाच ॥ धृतराष्ट्र कुमारो वै यः पुराणः सनातनः ।
सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ २ ॥
स ते गुह्यान्प्रकाशांश्च सर्वान्हृदयसंश्रयान् ।
प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ॥ ३ ॥
धृतराष्ट्र उवाच ॥ किं त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः ।
त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ॥ ४ ॥
विदुर उवाच ॥ शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ।
कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ॥ ५ ॥
ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् ।
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ६ ॥
धृतराष्ट्र उवाच ॥ ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम् ।
कथमेतेन देहेन स्यादिहैव समागमः ॥ ७ ॥
वैशंपायन उवाच ॥ चिंतयामास विदुरस्तमृषिं शंसितव्रतम् ।
स च तच्चिंतितं ज्ञात्वा दर्शयामास भारत ॥ ८ ॥
स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ॥ ९ ॥
भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसः ।
यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ॥ १० ॥
यं श्रुत्वायं मनुष्येंद्रः सर्वदुःखातिगो भवेत् ।
लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ ॥ ११ ॥
विषहेरन्भयामर्षौ क्षुत्पिपासे मदोद्भवौ ।
अरतिश्चैव तंद्री च कामक्रोधौ क्षयोदयौ ॥ १२ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामुद्योगपर्वणि सनत्सुजातीयपर्वणि विदुरकृतसनत्सुजातप्रार्थने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्वितीयोऽध्यायः।

वैशंपायन उवाच--

**ततो राजा धृतराष्ट्रो मनीषी संपूज्य वाक्यं विदुरेरितं तत्।**
**सनत्सुजातं रहिते महात्मा पप्रच्छ बुद्धिं परमां बुभूषन् ॥१॥**

ॐनमः पुंसे पुराणाय पूर्णानंदाय विष्णवे। निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे १॥ ॐ नम आचार्येभ्यो ब्रह्मविद्भ्यः। सनत्सुजातविवरणं संक्षेपतो ब्रह्मजिज्ञासूनां सुखावबोधायारभ्यते। स्वतश्चिदानंदाद्वितीयब्रह्मात्मस्वरूपोप्यात्मा स्वाश्रयया स्वविषययाऽविद्यया स्वानुभवगम्यया स्वाभासया स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मभावात्प्रच्युतोऽनात्मनि देहादावात्मभावमापन्नोऽप्राप्ताशेषपुरुषार्थः प्राप्ताशेषानर्थोऽविद्याकामकर्मपरिकल्पितैरेव साधनैरिष्टप्राप्तिमनिष्टपरिहृतिं चाकांक्षल्लौंकिकवैदिकसाधनैरनुष्ठितैरपि परमपुरुषार्थं स्वार्थं मोक्षाख्यमलभमानो मकरादिभिरिव रागद्वेषादिभिरितस्तत आकृष्यमाणः सुरनरतिर्यगादिप्रभेदभिन्नासु नानायोनिषु परिवर्तमानो मोमुह्यमानः संसरन्कथंचित्पुण्यवशाद्वेदोदितेनेश्वरार्थकर्मानुष्ठानेनापगतरागादिमलो नित्यादिदोषदर्शनेनोत्पन्नेहामुत्रफलभोगविरागो वेदान्तेभ्यः प्रतीयमानं ब्रह्मात्मभावं बुभुत्सुर्वेदोदितशमदमादिसाधनसंपन्नो ब्रह्मविद्माचार्यमुपेत्याचार्यानुसारेण वेदान्तश्रवणादिना ब्रह्मास्मीति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानतत्कार्यो ब्रह्मरूपोवतिष्ठत इतीयं वेदान्तमर्यादा। एतत्सर्वं क्रमेण दर्शयति भगवान्सनत्सुजातः। धृतराष्ट्रः शोकमोहाभितप्तस्तरति शोकमात्मविदिति वेदान्तवादमुपश्रुत्य ब्रह्मविद्यया विना शोकापनयनमशक्यं मन्वानः "अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यत" इति विदुरायोक्तवान्। अथोक्तश्रुतवाक्योपि परमकारुणिकः सर्वज्ञः सन्ब्रह्मविद्यां विशिष्टाधिकारिविषयां मन्वानः "शूद्रयोनावहं जातो नातोन्यद्वक्तुमुत्सह" इति शूद्रयोनिजत्वादौपनिषद्-

ह्यात्मतत्त्वज्ञाने नाहमधिकृत इत्युक्त्वा कथमेनं धृतराष्ट्रं ब्रह्मविद्यायाः परमे पदे परमात्मनि पूर्णानंदे स्वाराज्ये स्थापयिष्यामीति मन्वानश्छांदोग्योपनिषत्प्रसिद्धमितिहासं स्मृत्वा नान्यो भूमानं तमसः परं परमात्मानं दर्शयितुं शक्नुयादिति मत्वा तमेव भगवन्तं सनत्सुजातं योगबलेनाहूय प्रत्युत्थानादिभिर्भगवंतं पूजयित्वाह क्षत्ता "भगवन्संशयः कश्चित् धृतराष्ट्रस्य मानसे यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि। यं श्रुत्वायं मनुष्येंद्रः सर्वदुःखातिगो भवेत्। लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ। विषहेत मदोन्मादौ क्षुत्पिपासे भयाभये। अरतिं चैव तंद्रीं च कामक्रोधौ क्षयोदयाविति"। भगवन्येनासौ सकलसंसारकारणधर्माधर्मविवर्जितः सर्वदुःखातिगो मुक्तो भवेत्तमस्मै धृतराष्ट्राय वक्तुमर्हसीत्युक्तवान्। तत इति। तत एतद्वाक्यसमनंतरम्। वैशंपायनो जनमेजयं प्रति कथयामास वक्ष्यमाणम्। विदुरेण सनत्सुजातं प्रतीरितमुक्तं यद्वाक्यं तत्संपूज्य संमान्य। सनत्सुजातं। सनदिति सनातनं ब्रह्मोच्यते हिरण्यगर्भाख्यम्। तस्मात्सनातनाद्ब्रह्मणो मानसाज्ज्ञानवैराग्याद्यादिसमन्वितः सुष्ठु जात इति सनत्सुजात इत्युक्तो भगवान्सनत्कुमारः तम्। रहिते रहसि प्राकृतजनवर्जिते। महात्मा महाबुद्धिः। पप्रच्छ पृष्टवान्। बुद्धिं परमामुत्तमां पूर्णानन्दाद्वितीयविषयाम्। किमर्थं बुभूषन्भवितुमिच्छन्ब्रह्मात्मविद्ययाऽपहृतमत्मानं लब्धुमिच्छन्नित्यर्थः॥ १॥

**धृतराष्ट्र उवाच॥**

**सनत्सुजात यदिदं शृणोमि न मृत्युरस्तीति तव प्रवादम्।**
**देवासुरा ह्याचरन्ब्रह्मचर्यममृत्यवे तत्कतरन्नु सत्यम्॥ २॥**

तदेवाह। सनत्सुजातेति। हे सनत्सुजात यन्मृत्युर्हि नास्तीति शिष्यान्प्रत्युपदिष्टमिति विदुरः प्राह। देवासुराः पुनरमृत्यवे मृत्योरभावायामृतत्वप्राप्तये ब्रह्मचर्यमाचरन्तो गुरौ वासं कृतवन्तः। श्रूयते च छांदोग्ये। तद्धोभये देवा असुरा अनुबुबुधिरे इत्याद्यारभ्य तौ ह द्वात्रिं-

शतं वर्षाणि ब्रह्मचर्यमूषतुरित्यंतेनेंद्रविरोचनयोः प्रजापतौ ब्रह्मचर्याचरणं एकशतं ह वै वर्षाणि मघवा प्रजापतौ ब्रह्मचर्यमुवासेति च। यदि मृत्युर्नास्तीति तव पक्षस्तर्हि कथं देवासुराणाममृत्यवे ब्रह्मचर्याचरणं तत्तयोर्मृत्युसद्भावासद्भावपक्षयोः कतरत्तु सत्यं यत्सत्यं तद्वक्तुमर्हसीत्यभिप्रायः ॥ २ ॥

**सनत्सुजात उवाच ॥ अमृत्युः कर्मणा केचिन्मृत्युर्नास्तीति चापरे ।**
**शृणु मे ब्रुवतो राजन्यथैतन्मा विशंकिथाः ॥३॥**

एवं पृष्टः प्राह भगवान्सनत्सुजातः। अमृत्युरिति। केचित्पुनरविद्याधिरूढाः परमार्थतो मृत्युसद्भावं मन्यमाना वेदोक्तेन कर्मणाऽमृत्युरमृतत्वं भवतीति मत्वाऽमृत्यवेऽमृतत्वप्राप्तये वेदोक्तं कर्माचरन्ति। तथाऽन्ये विषयविषान्धा विषयव्यतिरेकेण निर्विषयं मोक्षममन्यमानाः कर्मणैवामृत्युरमृतत्वं देवादिभावं वर्णयन्ति। तत्रैव च रागिगीतं श्लोकमुदाहरन्ति। अपि वृन्दावने शून्ये सृगालत्वं स इच्छति। न तु निर्विषयं मोक्षं कदाचिदपि गौतमेति। तथैव परमात्मव्यतिरेकेण द्वितीयमपश्यन्तो ज्ञानकर्मभ्याममृतत्वं वर्णयन्ति। अपरे पुनरद्वितीयात्मदर्शिन आत्मव्यतिरेकेण द्वितीयमपश्यन्तो मृत्युर्नास्तीति वर्णयन्ति। हे राजन्यथैतत्पक्षयोरविरोधः संभवति तथा ब्रुवतो मे मम वाक्यं शृणु मा विशंकिथाः। मयोक्तेर्थे शंकां मा कृथाः ॥ ३ ॥

**उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः संमतो यः कवीनाम्।**
**प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादममृतत्वं ब्रवीमि ॥४॥**

कथमित्याह। उभे इति। ये पूर्वोक्ते मृत्योरस्तित्वनास्तित्वे उभे। हे क्षत्रियाऽऽद्यप्रवृत्ते। य आदिसर्गस्तमारभ्यप्रवृत्ते। अथवा क्षात्रियाद्य क्षत्रियप्रधान। प्रवृत्ते वर्तमाने। कथं पुनरुभयोः परस्परविरुद्धयोरास्तित्वनास्तित्वयोः सत्यत्वमिति तत्राह। मोहो मृत्युः संमतो यः कवीनामिति। भवेदयं विरोधोऽस्तित्वनास्तित्वयोर्यदि परमार्थरूपो मृत्युः स्यात्कः

तर्हि मृत्युः । यो मोहो मिथ्याज्ञानम् । अनात्मन्यात्माभिमानः स मृत्युः केषांचित्कवीनां मतः । अहं तु न तथा मृत्युं ब्रवीमि । कथं तर्हि । प्रमादं मृत्युमहं ब्रवीमि । प्रमादः प्रच्युतिः स्वाभाविकब्रह्मभावात् । तं प्रमादं मिथ्याज्ञानस्यापि कारणमात्मानवधारणमात्माज्ञानं मृत्युं जननमरणादिलक्षणं सर्वानर्थबीजमहं ब्रवीमि । तथा च सदाऽप्रमादं स्वाभाविकस्वरूपेणावस्थानममृतत्वं ब्रवीमि । तथा च श्रुतिः । स्वरूपावस्थानमेव मोक्षपदं दर्शयति । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति । तथाऽनुगीतासु स्पष्टमाह– एको यज्ञो नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमीति । यतः स्वरूपावस्थानलक्षणो मोक्षः । अत एव चतुर्विधक्रियाफलविलक्षणत्वादेव न कर्मसाध्यममृतत्वं नापि समुच्चिताभ्यां ज्ञानकर्मभ्यामिति । अमृत्युः कर्मणा केचिदित्येतदनुपपन्नमेवेत्युक्तं भवति । वक्ष्यति चास्य पक्षस्य स्वयमेव निराकरणम्– "कर्मोदये कर्मफलानुरागास्तत्रानु ते यान्ति न तरन्ति मृत्युम् । ज्ञानेन विद्वांस्तेज अभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पंथा" इति ॥ ४ ॥

**प्रमादाद्वै असुराः पराभवन्न प्रमादाद्ब्रह्मभूता भवंति ।**
**नैव मृत्युर्व्याघ्र इवात्ति जंतून्न ह्यस्य रूपमुपलभ्यते हि ॥५॥**

कथमेतदवगम्यते प्रमादो मृत्युरप्रमादोऽमृतत्वमिति तत्राह । प्रमादादिति । प्रमादात्स्वाभाविकब्रह्मभावप्रच्यवनादनात्मनि देहादावात्मभावादसुरा विरोचनप्रभृतयः पराभवन्पराभूताः । तथा च श्रुतिः । अनुपलभ्यात्मानमित्यारभ्य देवा वा असुरा वा ते पराभविष्यन्तीत्यंतेन । तथाऽप्रमादात्स्वाभाविकाचित्सदानंदाद्वितीयब्रह्मात्मज्ञानावस्थानाद्ब्रह्मभूताः सुराश्चेंद्रादयः । तथा च श्रुतिः । तं देवा आत्मानमुपासते तस्मात्तेषां च सर्वे लोका आप्ताः सर्वे च कामा इत्यादिना । अथवाऽसुषु प्राणेष्विन्द्रियेष्वेव रमन्त इत्यसुराः । अनात्मविदो वैषयिकाः प्राणिनोऽसुराः । ते स्वाभाविकब्रह्मभावमातिक्रम्यानात्मनि देहादावात्मभावमापन्नाः पराभवन्ति तिर्य-

गादियोनिमापन्नाः । तथा च बह्वृचब्राह्मणोपनिषत् । तस्मान्न प्रमाद्येत्तन्नातीयादिति । तथा स्वस्मिन्नात्मन्येवोपरमन्त्यात्मविदः सुराः । तथा चोक्तम् । "आत्मन्येव रतिर्येषां स्वस्मिन्ब्रह्मणि चाचले । ते सुरा इति विख्याताः सूरयश्च सुरा मता" इति । अप्रमादात्ते स्वाभाविकब्रह्मात्मनावस्थानाद्ब्रह्मभूता निवृत्तमिथ्याज्ञानतत्कार्या ब्रह्मैव संबभूवुरित्यर्थः । नन्वन्य एव सर्वजंतूनामुपसंहारको मृत्युः प्रसिद्धः कथमुच्यते प्रमादं वै मृत्युमहं ब्रवीमीति तत्राह । नैव मृत्युरत्ति भक्षयति प्राणिनः । यदि भक्षयेत्तर्हि व्याघ्र इवास्य रूममुपलभ्येत न चोपलभ्यते तस्मान्नास्त्येव मृत्युः ॥ ५ ॥

**यमं त्वेके मृत्युमतोन्यमाहुरात्मावासममृतं ब्रह्मचर्यम् ।**
**पितृलोके राज्यमनु शास्ति देवः शिवः शिवानामशिवोऽशिवानाम् ॥**

ननूपलभ्यते सावित्र्युपाख्याने अथ सत्यवतः कायादिति । कथमुच्यते नास्य रूपमुपलभ्यत इति तत्राह । यममिति । सत्यं उपलभ्यते तथापि न साक्षान्मृत्युः । कस्तर्हि । यः प्रमादाख्योऽज्ञानमृत्युः स एव साक्षाद्विनाशहेतुत्वात् । तथाऽज्ञानस्य विनाशहेतुत्वं श्रूयते । इह चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिरिति । बृहदारण्यके प्रमादाख्यस्याज्ञानस्य साक्षान्मृत्युत्वं दर्शितम् । मृत्युर्वै तमो ज्योतिरमृतमिति । यस्मात्प्रमाद एव साक्षात्सर्वानर्थबीजं तस्मान्न प्रमाद्येत । चित्सदानन्दाद्वितीयब्रह्मभावेनैवावतिष्ठेतेत्यर्थः । तथा चाज्ञानस्य बन्धहेतुत्वं विज्ञानस्य मोक्षहेतुत्वमुक्तं भगवता । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति । यस्मात्प्रमाद एव मृत्युः प्रमादोऽमृतत्वमत एव न कर्मसाध्यममृतत्वम् । नापि कर्मप्राप्यं नित्यसिद्धत्वात् । नित्यप्राप्तत्वाच्च । तथा च श्रुतिः । एष नित्यो महिमा ब्राह्मणस्येति । तथा तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति ज्ञानस्यैव मोक्षसाधनत्वं दर्शितम् । तथा च ज्ञानं चक्षुषा गृह्यत

इति। वक्ष्यति च भगवाञ्ज्ञानस्यैव मोक्षसाधनत्वम्। अंतवन्तः क्षत्रियेति। एवं मृत्युं जायमानं विदित्वेति च। तथा च मोक्षधर्मे "कर्मणा बध्यते जंतुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन इति"॥ ज्ञानं विशिष्टं न हि यज्ञा इति च। तथा च ज्ञानस्यैव मोक्षसाधनत्वं मन्यमानः सर्वकर्मपरित्यागमाह भगवान्वेदाचार्यो मनुः। यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः। आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवानिति। तथाह भगवान्परमेश्वरः। "ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम्। तस्माद्धर्वाद्धर्विमलं ज्ञानं कैवल्यसाधनम्॥ विज्ञातव्यं प्रयत्नेन श्रोतव्यं दृश्यमेव च। एकः सर्वत्रगो ह्यात्मा केवलश्चितिमात्रकः॥ आनंदो निर्मलो नित्यः स्यादेतत्सांख्यदर्शनम्। एतदेव परं ज्ञानमेतन्मोक्षोऽनुगीयते। एतत्कैवल्यममलं ब्रह्मभावश्च वर्णितः। आश्रित्यैतत्परं तत्त्वं तन्निष्ठास्तत्परायणाः॥ गच्छन्ति मां महात्मानं यतन्तो विश्वमीश्वरमिति"। नन्वेवं चेत्तर्हि कर्माणि नानुष्ठेयानि। न नानुष्ठेयानि किं तु ज्ञानिना नानुष्ठेयानि। तथा चाह भगवान्। यस्त्वात्मरतिरेव स्यादिति। तथा च ब्रह्मपुराणे कावषेयः किमद्य नश्चाध्ययनेन कार्यमिति। तथा च बह्वृचब्राह्मणोपनिषत्। किमर्थं वयमध्येष्यामहे। तथा च बृहदारण्यके विदुषः कर्मसंन्यासं दर्शयति। एतद्ब्रह्म वैतादिति। तथा लैंगे। ज्ञानामृतेन तृप्तस्य कर्मणा प्रजया च किमिति। तथा चाथर्वणी श्रुतिः। नैतद्विद्वानिति। केन तर्ह्यनुष्ठेयानि। अज्ञानिनाऽऽरुरुक्षुणा सर्वकर्माणि सदाऽनुष्ठेयानि। न ज्ञानिना। तथा चाह भगवान्। लोकेऽस्मिन्द्विविधा निष्ठेति। आरुरुक्षोर्मुनेर्योगमिति। तथा चाह भगवान्सत्यवतीसुतः—"द्वाविमावथ पंथानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्मो निवृत्त्यैव व्यवस्थितः"॥ नन्वेवमारुरुक्षुणापि कर्माणि नानुष्ठेयानि कर्मणां बंधहेतुत्वात्तथा चोक्तं भगवता "कर्मणा बध्यते जंतुर्विद्यया च विमुच्यत" इति। सत्यं तथापीश्वरार्थतया फलनिरपेक्षमनुष्ठीयमानानि न बंधहेतूनि।

तथा चोक्तं भगवता । यज्ञार्थात्कर्मण इति । किमर्थं तर्हि तेषामनुष्ठानं सत्त्वशुद्ध्यर्थमिति ब्रूमः । तथा चोक्तं भगवता । कायेन मनसा बुद्ध्येति । यज्ञो दानं तपश्चैव पावनानि मनीषिणामिति । गतसंगस्येति च । तथा च । "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति । ननु कर्मणामपि विद्यासहितानां मोक्षहेतुत्वं श्रूयते । विद्यां चाविद्यां च यस्तद्वेदोभयमिति । तथा च मनुः "तपो विद्या च विप्रस्य निःश्रेयसकरे उभे" इति । नैतत् । पूर्वापराननुसंधाननिबंधनोऽयं भ्रमः । तथा हि विद्यां चाविद्यां च यस्तद्वेदोभयं । सहेत्युक्त्वाऽविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति विद्याविद्ययोर्भिन्नविषयत्वेन समुच्चयाभावः श्रुत्यैव दर्शितः । इदमेव स्पष्टमाह भगवान्मनुः । "तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ" इत्युक्ते समुच्चयाशंका मा भूदिति । "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुत" इति तपसो नित्यनैमित्तिकलक्षणस्य कर्मणः श्रुतावेव विनियोगं दर्शितवान् । तथा ईशावास्यमिदं सर्वमिति सर्वस्य तावन्मात्रत्वमुक्त्वा तदात्मभूतस्य सर्वस्य तावन्मात्रत्वं पश्यतस्तद्दर्शनेनैव कृतार्थस्य साध्यान्तरमपश्यतस्त्यागेनैव भुंजीथेति त्यागेनैवात्मपरिपालनमुक्त्वाऽतदात्मवेदिनः केन तर्ह्यात्मपरिपालनमित्याशंक्याह "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" । एवं सर्वभूते त्वयि नरमात्राभिमानिन्यज्ञेऽविद्यानिमित्तोत्तरपूर्वाघयोरश्लेषविनाशाभावात्कुर्वन्नेव सदा यावज्जीवं कर्म जिजीविषेदित्यज्ञस्य नरमात्राभिमानिनः शुद्ध्यर्थं यावज्जीवं कर्माणि दर्शयति । अत एभिरपि वाक्यैः कर्मणां शुद्धिसाधनत्वमेवावगम्यते । न मोक्षसाधनत्वम् । यद्यप्युक्तं "तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च" इति चशब्दात्समुच्चयोऽवगम्यते तदपि प्रसिद्धश्रुतिविनियोगानुसारेण वेदितव्यम । तथा चानुगीतासु स्पष्टमाह भगवान्कर्मणां शुद्धिद्वारेणैव मोक्षसाधनत्वं नित्यनैमित्तिकैरिति ॥ वक्ष्यति भगवान्सनत्सुजातः शुद्धिद्वारेणैव मोक्षसा-

धनत्वं तदर्थमुक्तं तप एतदिति । ननु कथं सत्त्वशुद्धिद्वारेणैव मोक्षसाधनत्वं विनापि सत्त्वशुद्धिं ज्ञानेनैव मोक्षः सिध्यत्येव । सत्यम् । ज्ञानेनैव मोक्षः सिध्यति किं तु तदेव ज्ञानं सत्त्वशुद्धिं विना नोत्पद्यत इति वयं ब्रूमः । तथा चोक्तम् । "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इति । तथा चाह याज्ञवल्क्यः-- "तथाप्यपक्वकरण आत्मज्ञानस्य न क्षमः" इति । विशुद्धसत्त्वस्यैव नित्यानित्यवस्तुविवेकादिद्वारेण मोक्षसाधनज्ञाननिष्पत्तिरस्ति । तस्मात्सत्त्वशुद्ध्यर्थं सर्वेश्वरमुद्दिश्य सर्वाणि वाङ्मनःकायलक्षणानि श्रौतस्मार्तानि कर्माणि समाचरेत् । यावद्विशुद्धसत्त्व इहामुत्रफलभोगविरागो योगारूढो भवति तावत्कर्माणि कुर्वीत । तथा चाह भगवान्-- "आरुरुक्षोर्मुनेर्योगं" इति । "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" इति ॥ तस्य लक्षणमुक्तं यदा हि नेन्द्रियार्थेष्विति ॥ यस्तु पुनरेवं यज्ञदानादिना विशुद्धसत्त्व इहामुत्रफलभोगविरागो योगारूढो भवति तस्य शम एव कारणं न कर्मेति । तथा चोक्तं-- "योगारूढस्य तस्यैव शमः कारणमुच्यते" । तस्माच्छमदमादिसाधनसंपन्नः श्रवणादिसमन्वितो योगी युंजीत सततमात्मानं रहसि स्थित इति । कथं तर्हि योगानुष्ठानं कार्यम् । शृणु ! समे देशे शर्करावह्निवालुकाशब्दजलाशयादिवर्जिते मनोनुकूले शुचौ नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं स्थिरमासनं प्रतिष्ठाप्य तत्रोपविश्यासनं स्वस्तिकादि बद्ध्वा समं कायशिरोग्रीवं धारयन्नचलं विश्वादीन्विश्वतैजसप्राज्ञाञ्जाग्रत्स्वप्नसुषुप्तिक्रमेण कार्यकारणविनिर्मुक्ते पूर्णात्मन्युपसंहृत्य पूर्णात्मना स्थित्वा । "ध्यायेत्पुरीशयं देवं पूर्णानंदं निरंजनम् । अपूर्वानपरं ब्रह्म नेति नेत्यादिलक्षणम् । अशनायाद्यसंस्पृष्टमनुदितानस्तमितज्ञानात्मनावस्थितं परं परमात्मानं नमो नम इति । तथा चोक्तं ब्रह्मविद्भिः । विविक्तदेशमाश्रित्य ब्राह्मणः शुद्धचेतसा । भावयेत्पूर्णमेकाख्यं हृद्याकाशमयं विभुम् । तथा चोक्तं ब्राह्मे । "तस्माद्विमोक्षाय कुरु प्रयत्नमिति" । एवं युंजन्सदात्मानं परमात्मत्वेन

यदा साक्षाद्विजानाति तदा निरस्ताज्ञानतत्कार्यो वीतशोकः कृतकृत्यो भवति । तथा च बृहदारण्यके । आत्मानं चेद्विजानीयादिति । तथा ईशावास्ये । यस्मिन्सर्वाणि भूतानीति । तथा च कठवल्लीषु तं दुर्दर्शमिति । तथा च कावषेयगीतासु । आत्मज्ञः शोकसंतीर्णो न बिभेति कुतश्चनेति । तथा च मनुः । सर्वेषामपि चैतेषामात्मज्ञानं परं मतमिति । तथा चाह भगवान् । एतद्बुद्ध्वा बुद्धिमान्स्यात् । यस्मात्तद्विज्ञानादेव परमपुरुषार्थप्राप्तिरतस्मात्तमेव परमानंदात्मानमात्मत्वेन जानीयादयमहमस्मीति । न किंचिदन्यच्चिंतयेत् । तथा च श्रुतिः । तमेव धीरो विज्ञायेति । तथा चाह भगवान् । संकल्पप्रभवान्कामानिति । एवं प्रसंगात्सर्वशास्त्रार्थः संक्षेपतो दर्शितः ॥

अथेदानीं प्रकृतमनुसरामः । यस्मात्प्रमाद एव सर्वानर्थबीजं तस्मात्प्रमादमेवाहं मृत्युं ब्रवीमि न यमम् । यमं तु पुनरेके विषयविषांधा अविद्याधिरूढाः स्वात्मव्यतिरेकेण द्वितीयं पश्यन्ति मृत्युम् । अतो मयोक्तान्मृत्योः प्रमादाख्यादन्यं परं वैवस्वतमाहुः । आत्मावासमात्मनि बुद्धौ वसतीत्यात्मावासरतम् । तथा च मनुः "यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गंगां मा कुरून्व्रज" । अमृतममरणधर्माणं ब्रह्मचर्यं ब्रह्मणि स्वात्मभूते चरमाणं ब्रह्मनिष्ठमित्यर्थः । श्रूयते कठवल्लीषु- कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हतीति । पितृलोके राज्यमनुशास्तीति । शिवः सुखप्रदः शिवानां पुण्यकर्मणामशिवोऽसुखप्रदः । अशिवानां पापकर्मणाम् ॥ ६ ॥

**आस्यादेष निःसरते नराणां क्रोधः प्रमादो लोभरूपश्च मृत्युः ।**
**अहंगतेनैव चरन्विमार्गान्न चात्मनो योगमुपैति कश्चित् ॥ ७ ॥**

एवं तावत्प्रमाद एव मृत्युरिति मृत्युरूपं निर्धारितम् । इदानीं तस्यैव कार्यात्मनावस्थानं दर्शयति । आस्यादिति । यः प्रमादाख्यो मृत्युः स प्रथममास्यात्मना परिणमते । आस्योऽभिमानात्मकोऽहंकारः । तथा

चोक्तं-"सर्वार्थाक्षेपसंयोगादसुधातुसमन्वयात् । आस्य इत्युच्यते घोरो ह्यहंकारो गुणो महान् "। एवमहंकारात्मना स्थित्वा ततोऽहंकारान्निः-सरति निर्गच्छति कामात्मना ततः कामः स्वविषये वर्तमानः प्रतिहत-क्रोधः प्रमादो मोहरूपश्च भवति। ततोऽहंगतेनाहंस्वरूपमापन्नेनाहंका-राद्यात्मना स्थितेनाज्ञानेन तदात्मभावमापन्नो ब्राह्मणोऽहं क्षत्रियोऽहं वैश्यो-ऽहं शूद्रोऽहं स्थूलोऽहं कृशोऽहममुष्य पुत्रोऽस्य नप्तेत्येवमात्मको रागद्वेषादि-समन्वितः चरन्विमार्गाञ्श्रौतस्मार्तविपरीतान्मार्गान्न चात्मनः परमात्मनो योगं समाधिलक्षणमुपैति कश्चिदपि । अथवाऽविद्याकामकर्माणि संसारस्य प्रयोजकभूतानि । पूर्वत्र मोहो मृत्युः संमत इत्यनेनान्यथाग्रहणात्मिकाऽ-विद्या दर्शिता । उत्तरत्र कर्मोदय इति कर्म वक्ष्यति । अथेदानीं कामो-ऽभिधीयते । अस्यन्ते क्षिप्यन्तेऽनेन संसारे प्राणिन इत्यास्यः कामः । अथवा आस्यवदास्यं सर्वजग्धृत्वात् । तथा चोक्तं भगवता "काम एष क्रोध एष" इति । एष मृत्युरास्यात्मना स्थित्वा ततः क्रोधात्मना विपरिणमते । उक्तं च "कामात्क्रोधोऽभिजायत" इति । ततोऽहंगते-नाहंकारापन्नेनाज्ञानेनाहंकारफलकारूढेन चिदाभासेन चरन्विमार्गान्न चात्मनो योगमुपैति कश्चित् ॥७॥

**ते मोहितास्तद्वशे वर्तमाना इतः प्रेतास्तत्र पुनः पतन्ति ।**
**ततस्तान्देवा अनु परिप्लवन्ते अतो मृत्युर्मरणादभ्युपैति ॥८॥**

किं च । त इति । ते अहंकारादिरूपेण स्थितेनाज्ञानेन मोहिता देहा-द्यात्मभावमापादिताः । तद्वशे अहंकाराद्यात्मना परिणतप्रमादाख्यमृत्युवशे वर्तमानाः । अतोऽस्मात्प्रेता धूमादिमार्गेण गत्वा तत्र परलोके यावत्सं-पातमुषित्वा पुनराकाशादिक्रमेण देहग्रहणाय निष्पतन्ति । श्रूयते च । तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते । ततोऽनंतरं पुन-र्देहग्रहणावस्थायां तं देवा इंद्रियाण्यनुसृत्य कर्माणि परि समंतात्प्लवन्ते समंततः परिवर्तन्त इत्यर्थः । अतोऽस्मात्कारणादिंद्रियगुणानुस्मरणान्मरणं

यान्ति । ततो मरणाज्जन्माभ्युपैति ततो मृत्युम् । एवं जन्ममरणप्रवं-धारूढो न कदाचिन्मुच्यत इत्यर्थः । आत्माज्ञाननिमित्तत्वात्संसारस्य यावत्परमात्मानमात्मत्वेन साक्षान्न जानाति तावदयं तापत्रयाभिभूतो मकरादिभिरिव रागद्वेषादिभिरितस्ततः समाकृष्यमाणो मोमुह्यमानोऽवतिष्ठत इत्यर्थः । प्रत्यगज्ञानजननेषु सर्वद्वैताकाराज्ञानपरिणामेषु स्वस्याभासस्तस्मिन्फलके समारूढः साक्षित्वेश्वरत्वकारणत्वान्तर्यामित्वरूपतामात्मा गच्छति । स च प्रपंचस्थोऽपि वस्तुतो न तेन संबध्यते । असंगागमविरोधात् । तस्मादीश्वरत्वादिकं कल्पितम् । उक्तं हि "अविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवतीति" । तथा च तद्बाधादेव तद्धतिरित्यविरुद्धमित्यर्थः । उक्तं च सुरेश्वराचार्यैः "स्वाभासफलकारूढस्तदज्ञानजभूमिषु । तत्स्थोऽपि तदसंबद्ध ईश्वराद्यात्मतां गतः" ॥ ८ ॥

**कर्मोदये कर्मफलानुरागास्तत्रानु ते यान्ति न तरन्ति मृत्युम् ।**
**सदर्थयोगानवगमात्समन्तात्प्रवर्तते भोगयोगेन देही ॥ ९ ॥**

एवं तावदविद्याकामयोर्बन्धहेतुत्वमभिहितम् । अथेदानीं कर्मणां बंधहेतुत्वमाह । कर्मेति । अमृत्युः कर्मणा केचिदिति । कर्मणाऽमृतत्वं भवतीति यन्मतान्तरन्यस्तं तन्निराकरोति । न केवलं कर्मणाऽमृतत्वं भवति। अपि तु कर्मोदये कर्मणामुत्पत्तौ कर्मफलानुरागाः सन्तस्तत्र तस्मिन्कर्मफलेऽनुयान्ति । यस्मात्तत्रैवानुयान्त्यतो न तरन्ति मृत्युम् । पुनः पुनर्जन्ममरणात्मके संसारे परिवर्तन्त इत्यर्थः । कस्मात्पुनः कर्मोदये कर्मफलानुरागास्तत्रैव परिवर्तन्ते । सदर्थयोगानवगमात् । सदर्थेन योगः सदर्थयोगः सदर्थेन परमात्मना योगस्तस्य सदर्थयोगस्य एकत्वस्यानवगमात् । स्वात्मनाश्चित्सदानंदाद्वितीयब्रह्मतत्त्वभावानवगमादित्यर्थः । समंतात्समंततः प्रवर्तते भोगयोगेन विषयरसबुद्ध्या देही । यथाऽन्धो निम्नोन्नतकण्टकस्थलादिषु परिभ्रमत्येवमसावपि विवेकहीनः सर्वत्र विषयाकांक्षया परिभ्रमति ॥ ९ ॥

**तद्वै महामोहनमिंद्रियाणां मिथ्यार्थयोगोऽस्य गतिर्हि नित्या ।**
**मिथ्यार्थयोगाभिहतांतरात्मा स्मरन्नुपास्ते विषयान्समंतात् ॥१०॥**

किं च तदिति । यद्रागाभिभूतस्यैंद्रियाणां विषयेषु प्रवर्तनं तन्महामोहनम् । एतदुक्तं भवति । यस्य विषयेषु न वास्तवबुद्धिस्तस्यैंद्रियाणि विषयेषु न प्रवर्तन्ते । तस्य विषयेषु प्रवृत्त्यभावादात्मन्येव प्रवृत्तिः । ततश्च मोहानिवृत्तिः । यस्य विषयेषु वास्तवबुद्धिस्तस्यैंद्रियाणां पराग्भूतेषु विषयेषु प्रवृत्तत्वान्न स इमं सदाद्वितीयं प्रत्यग्भूतं परमात्मानमात्मत्वेन साक्षाज्जानाति । तथा चोक्तं— स्त्रीपिंडसंपर्ककलुषितचेतसो विषयविषांधा ब्रह्म न जानन्तीति । ततश्च महामोहेन पुनःपुनर्विषयेषु प्रवृत्तिः । तथा चाह मनुः— "न जातु कामः कामानामुपभोगेन शाम्यतीति" । ततश्च मिथ्यार्थैरविद्याकल्पितैः शब्दादिविषयैर्भोगो भवति तस्मिन्मिथ्यार्थयोगेऽस्य देहिनो गतिः संसारगतिर्नित्या नियता । प्रसिद्धं ह्येतत् । स्वात्मभूतं परमात्मानमनवगम्य विषयेषु प्रवर्तमानाः पराग्भूतास्तिर्यगादियोनीं प्राप्नुवन्तीति । तथा च बह्वृचब्राह्मणोपनिषदि । या वै ता इमाः प्रजाः प्रजायन्त इति । वक्ष्यति च कामानुसारी पुरुषः कामाननु विनश्यतीति । कस्मात्पुनर्मिथ्यार्थयुक्तस्य गतिर्हि नित्येति तत्राह—मिथ्यार्थयोगाभिहतान्तरात्मा मिथ्याभूतविषयसंयोगेनाभिहतान्तरात्मा यस्य सोऽभिहतस्वाभाविकब्रह्मभावः स्मरञ्शब्दादिविषयान्तानेवोपास्ते न परमात्मानं समंतात्संततः ॥ १० ॥

**अभिध्या वै प्रथमं हन्ति चैनं कामक्रोधौ गृह्य चैनं च पश्चात् ।**
**एतान्बालान्मृत्यवे प्रापयन्ति धीरास्तु धैर्येण तरन्ति मृत्युम् ॥ ११ ॥**

तत्किमिति चेत्तत्र यद्भवति तच्छृणु । अभिध्येति । अभिध्या विषयध्यानं प्रथमं हन्तिः विनाशयतिः स्वरूपात्प्रच्युतं करोति । ततो विषयध्यानाभिहतमेनं विषयरससंनिधौ शीघ्रं प्रतिगृह्य कामश्च हन्ति । ततः कामाभिहतमेनं प्रतिगृह्य क्रोधश्च हन्ति । तदेतेऽभिध्यादय एतानभिध्या-

कामक्रोधवशंगतान्बालानविवेकिनो मूढान्मृत्यवे प्रापयन्ति क्षिपन्ति। श्रूयते कठवल्लीषु 'परांचि खानीति'। धीरास्तु पुनर्धैर्येण विषयाञ्जित्वा परमात्मानमात्मत्वेनावगम्य तरन्ति मृत्युम्। श्रूयते च "निचाय्य तं मृत्युमुखादिति" ॥ ११ ॥

**योऽभिध्यायन्नुत्पतिष्णून्निहन्यादनाचारेणाप्रतिबुध्यमानः।**
**स वै मृत्युं मृत्युरिवात्ति भूत्वा ह्येवं विद्वान्योऽभिनिहन्तीति कामान् ॥१२॥**

कथं पुनर्धीरास्तु धैर्येण विषयाञ्जित्वा मृत्युं तरन्तीत्यत आह य इति। योऽभिध्यायन्ननित्याशुचिदुःखानुविद्धतया उत्पातिष्णूनुत्पत्योत्पत्य पतन्तीत्युत्पतिष्णवो विषयास्तान्निहन्यात्परित्यजेत्। अनाचारेणानादरेण। अमेध्यदर्शन इवाप्रतिबुध्यमानः पुनःपुनरचिंतयन्स वै पुरुषो मृत्योरेव मृत्युर्भूत्वा मृत्युरिवात्ति मृत्युम्। उक्तं च "विषयप्रतिसंहारं यः करोति विवेकतः। मृत्योर्मृत्युरिति ख्यातः स विद्वानात्मवित्कविः" इति ॥१२॥

**कामानुसारी पुरुषः कामाननु विनश्यति।**
**कामान्व्युदस्य धुनुते यत्किंचित्पुरुषो रजः ॥ १३ ॥**

एवमनित्यादिरूपेण विद्वान्सन्ननादरादिनाऽभिहन्ति कामान्। यः पुनरनादरादिना नाभिहन्ति स किं करोतीत्याह। कामेति। यस्तु पुनर्विषयाभिध्यानेन कामानुसारी भवति स कामाननु विनश्यतीति। कामविषये नष्टे कामाननु कामैः सह विनश्यति। अनित्याः कामगणाः। प्रतिक्षणं विनाशान्विताः। तद्वत्कामी विशीर्णो भवति। यस्तु पुनर्विषयदोषदर्शनेन कामान्परित्यजति स कामान्व्युदस्य परित्यज्य विवेकबुद्ध्या धनुते ध्वंसयति। यत्किंचिदिह जन्मनि जन्मांतरे चोपार्जितं रजः पुण्यपापादिलक्षणं कर्म तत् ध्वंसयति ॥ १३ ॥

**देहोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते।**
**गृह्यन्त इव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः ॥ १४ ॥**

कथं पुनरस्य देहस्य काम्यमानस्य हेयत्वमित्यहि । देह इति । योऽयं भूतानां देहो दृश्यते सोऽप्रकाशोऽविद्याकल्प्यमानः केवलं नरकः श्लेष्मासृक्पूयविण्मूत्रक्रमिपूर्णत्वात् । तथा चाह मनुः "अस्थिस्थूणं स्नायुबद्धं मांसक्षतजलेपनम् । चर्मावनद्धं दुर्गंधि पूर्णं मूत्रपुरीषयोः । जराशोकसमाविष्टं रोगायतनमातुरम् । रजस्वलमनित्यं च भूतावासमिमं त्यजेत्" इति । एवमत्यंतबीभत्सितं स्त्र्यादिदेहं कमनीयबुद्ध्या गृह्यन्तोऽभिकांक्षन्त एव धावन्त्यनुधावन्ति । गच्छन्तः श्वभ्रमुन्मुखाः । यथान्धाः कूपादिकं विवेक्तुमशक्ताः कूपादिषून्मुखाः पतन्त्येवं स्त्र्याद्यभिकांक्षन्तो विषयविषान्धा उन्मुखाः पतन्ति नरकेष्वित्यर्थः ॥ १४ ॥

**अमन्यमानः क्षत्रिय किंचिदन्यन्नाधीयते तार्ण इवास्य व्याघ्रः ।**
**क्रोधाल्लोभान्मोहभयान्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः ॥ १५ ॥**

य एवं गृह्यन्ति त एव धावन्ति तेषां देहो निरर्थक इत्याह । अमन्यमान इति । यः स्त्र्यादिकमभिकांक्षन्ननुधावति स विषयविषांधस्तद्व्यतिरिक्तं स्वात्मभूतं परमात्मानममन्यमानोऽप्रतिबुध्यमानो नाधीयते । तद्विषयमध्यात्मशास्त्रं नाधिगच्छति । तस्यास्य विषयविषांधस्य षडंगवेदविदुषोऽपि देहस्तृणनिर्मितव्याघ्र इव निरर्थको भवति । तथा चाह भगवान्वसिष्ठः—"चतुर्वेदोऽपि यो विप्रः सूक्ष्मं ब्रह्म न विंदति । वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः" । न केवलं देहो निरर्थकः । य एवंभूतः स एव मृत्युरित्याह—क्रोधाल्लोभान्मोहभयान्तरात्मा । क्रोधलोभाभ्यां मोहहेतुभ्यां मोहभयसमन्वितेऽन्तरात्मा त्वच्छरीरे य एष दृश्यते तवात्मा स एष तव मृत्युः । य पुनरजितेंद्रियः क्रोधलोभादिसमन्वितो विषयेषु प्रवर्तते स एष मृत्युः । विनाशहेतुत्वात् । उक्तं च "आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः" इति ॥ १५ ॥

**एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः ।**
**विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥१६॥**

तर्हि केनोपायेन मृत्योर्विनाश इत्याह । एवमिति । एवं क्रोधादिरूपेण जायमानं प्रमादाख्यं मृत्युं जननमरणादितर्वानर्थबीजं विदित्वा क्रोधादीन्भूतदाहीयान्दोषान्परित्यज्याक्रोधादीन्संपाद्य ज्ञानेन चित्सदानंदाद्वितीयब्रह्मवर्त्मनाऽवतिष्ठन्न बिभेति मृत्योः । तथा च श्रुतिः । आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति । कस्मात्पुनर्ज्ञानेन तिष्ठन्न बिभेति मृत्योरित्याह । विनश्यते तस्य ज्ञानिनो विषये गोचरे परमात्मनि साक्षात्क्रियमाणे प्रमादाख्योऽज्ञानमृत्युः । यथा मृत्योर्विषयं संसारमागतो मृत्युनाभिभूतो नष्टो भवति मर्त्य एवमात्मवेदिनोऽपि विषयमागतोऽज्ञानमृत्युर्नष्टो भवति । उक्तं च ज्ञानमहोदधौ—"ज्ञानसंस्थानसद्भावो ज्ञानाग्निर्ज्ञानवज्रभृत् । मृत्युं हन्तीति विख्यातः स वीरो वीतमत्सरः" इति ॥१६॥

धृतराष्ट्र उवाच--

**यानेवाहुरिज्यया साधुलोकान्द्विजातीनां पुण्यतमान्सनातनान् ।**
**तेषां परार्थं कथयन्तीह वेदा एतद्विद्वान्नैति कथं नु कर्म ॥ १७ ॥**

एवं तावत्कर्मोदय इत्यादिना कर्मणां बंधहेतृत्वमुक्त्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योरिति ज्ञानस्यैव मोक्षसाधनत्वमभिहितम् । तत्र चोदयति धृतराष्ट्रः । यानिति । ननु कथं कर्मणां बंधहेतुत्वं यावता यानेवाहुरिज्यया ज्योतिष्टोमादिना साधुलोकान्साधुभिर्धार्मिकैरारूढान्पुण्यतमान्पवित्रान् । सनातनान्नित्यान् । तेषां ब्रह्मलोकपर्यंतानां परार्थं परमपुरुषार्थत्वं कथयन्ति । इहास्मिन्संसारमंडले वेदाः । एतल्लोकानां परमपुरुषार्थत्वं विद्वान्कथं नु कर्मसाधनं नैति न गच्छति नानुतिष्ठतीत्यर्थः ॥ १७ ॥

सनत्सुजात उवाच—

**एवं ह्यविद्वानुपयाति तत्र तत्रार्थजातं च वदन्ति वेदाः ।**
**स नेह आयाति परं परात्मा प्रयाति मार्गेण निहन्त्यमार्गान् ॥१८॥**

अथ चैतद्ब्रह्मलोकपर्यंतानां साधनभूतं कर्म विद्वान्ब्रह्मवित्कथं नैति

नानुतिष्ठतीत्येवं पृष्टः प्राह भगवान्सनत्सुजातः एवमिति । सत्यमेव ब्रह्मलोकादिसाध्यं सुखं परमार्थं मन्यमानो विषयविषांधो ह्यविद्वानुपयाति। तस्मिन्ब्रह्मलोकादिसाधनभूते कर्माणि न विद्वानविद्यादिदोषदर्शी । तथा च बृहदारण्यके । अनंदा नाम ते लोका अंधेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः ॥ तथार्थजातं च प्रयोजनजातं च तस्यैवाविदुषो वदन्ति वेदाः । यस्मादविदुष एव वदन्ति न विदुषः तस्मान्नेह स विद्वान्ब्रह्मलोकाद्यनित्यसुखे तत्साधने वा कर्मण्यायाति प्रवर्तते । किं तर्हि कुरुते तत्राह । परमात्मानमात्मत्वेनावगम्य परमात्मा सन्ब्रह्मैव सन्परं प्रयाति । मार्गेण ज्ञानेन निहन्ति । अमार्गानसंसार-हेतुभूतात्मनो विरुद्धमार्गान्धर्माधर्मोपासनारूपान् । अथवा एवं हि विद्वानुपयाति । तत्रेति पाठे । सगुणब्रह्मविद्वांस्तत्र ब्रह्मलोकादावुपासनामुपयाति प्राप्नोति । तथार्थजातं चास्य वदन्ति वेदाः । कीदृशं वदन्ति स नेहायाति स विद्वानिहास्मिँल्लोकं कर्मीव नायाति न जायते । किं तु मार्गेण ब्रह्मोपासनयाऽमार्गान्विरुद्धमार्गान्निहन्ति । एवं तत्र हत्वा स हेतून्संसारमार्गान्परमात्मा ब्रह्मात्मा सन्कालेन परं ब्रह्म यातीत्यर्थः ॥ १८ ॥

**धृतराष्ट्र उवाच—**

**कोऽसौ नियुंक्ते तमजं पुराणं स चेदिदं सर्वमनुक्रमेण ।**
**किं वाऽस्य कार्यमथवा सुखं च तन्मे विद्वन्ब्रूहि सर्वं यथावत्॥१९॥**

एवं तावत्प्रमादस्याज्ञानस्य मृत्युत्वमप्रमादस्य स्वरूपावस्थानलक्षणस्यामृतत्वम् । प्रमादं वै मृत्युमहं ब्रवीमीत्यादिना दर्शयित्वाऽऽस्यादेष निःसरते नराणामित्यादिना स वै मृत्युस्त्वच्छरीरे य एष इत्यंतेन तस्यैव कार्यात्मना परिणतस्य सर्वानर्थहेतुत्वं प्रदर्शयित्वा कथमस्य मृत्योर्विनाश इत्याशंक्यैवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योरित्यात्मज्ञानेन मृत्युविनाशं दर्शयित्वा यानेवाहुरिज्ययेत्यादिना ब्रह्मलोकादेः पुरुषार्थत्वमाशंक्यैवं ह्यविद्वानित्यादिना तेषामविद्याविषयत्वेनापुरुषार्थ-

त्वमुक्त्वा परं परात्मा प्रयाति मार्गेणेति ज्ञानमार्गेण मोक्ष उपदिष्टः । तत्र परं परात्मा प्रयातीति जीवपरयोरेकत्वमुक्तम् । तदसहमानश्चोदयति धृतराष्ट्रः कोऽसाविति । ननु यदि स एवं सत्यादिलक्षणः परमात्मा क्रमेणाकाशादि धरित्र्यंतं सृष्ट्वा तदनुप्रविश्यान्नमयाद्यात्मना स्थितः संसरतीति चेत्कोऽसौ तं सत्यादिलक्षणमजं संसारे नियुंक्ते प्रेरयति । किमन्येन स्वयमेव चेत्किंवास्य नानायोनिषु प्रवर्तमानस्य कार्यं प्रयोजनम् । अथवा नानायोनिषु प्रवर्तमानस्य तूष्णींभूतस्य स्वे महिम्नि स्थितस्य संसारानुप्रवेशेऽसुखमनर्थजातं किं वा भवति हे विद्वन्ब्रूहि सर्वं यथावत् । तथा च ब्रह्मविदामेकः पुंडरीको भगवान्याज्ञवल्क्यः । तत एव सर्वस्य सृष्टिमुक्त्वा तस्यैव जीवात्मत्वमभ्युपगम्य यद्येवं स कथं ब्रह्मन्पापयोनिषु जायते, ईश्वरश्च कथं भावैरनिष्टैः संप्रयुज्यत इति कोऽसौ नियुंक्त इत्यनेन भगवतोक्तमेव ब्रह्मजीववादपक्षं वावदूकचोद्यं स्वयमेव स्पष्टमुक्तवान् ॥ १९ ॥

सनत्सुजात उवाच--

**दोषो महानत्र विभेदयोगे ह्यनादियोगेन भवन्ति नित्याः ।**
**तथाऽस्य नाधिक्यमुपैति किंचिदनादियोगेन भवन्ति पुंसः ॥ २० ॥**

एवं पृष्टः प्राह भगवान् । दोष इति । यद्येवं चोदयत एषोऽभिप्रायः । नियोज्यनियोक्तृत्वादिभेददर्शनादेकस्य कूटस्थस्य तदसंभवाद्भेदेन भवितव्यमिति । तत्र यदि ब्रह्मण एव नानात्वमभ्युपगम्यते चेत्तदा तस्मिन्भेदयोगे ब्रह्मणो नानात्वयोगे दोषो महान् । को दोषः । द्वैतिनो ह्यतथावादिनोऽवैदिका भवेयुः । वेदहृदयं परमार्थमद्वैतं च बाध्यं स्यात् । किं च । नानारूपेण परिणतत्वादनित्यादिदोषोऽस्थूलादिवाक्यविरोधश्च प्रसज्येत । अथोच्यते नास्माभिर्ब्रह्मणो नानात्वमभ्युपगम्यते अपि तु जीवपरयोर्भेदोऽभ्युपगम्यत इति । अत्र हि महान्दोषो यतो विनाशं प्राप्नोति । श्रूयते च " मृत्योः स मृत्युं " इत्यादि । "यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते

अथ तस्य भयं भवति" इति। अथ जीवपरयोर्भेदेऽभ्युपगम्यमाने तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म इत्येवमादिश्रुतिस्मृतीतिहासपुराणभाषितत्वादवैदिकत्वं नाम महान्दोषो भवति। कथं तर्हि त्वत्पक्षे जीवेश्वरादिव्यवहारभेदः कथं वा तेषां नित्यत्वमिति तत्राह—अनादियोगेन भवन्ति नित्याः। अनादिरविद्या माया। तथा चोक्तम्। "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि"। "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते"। "अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा"। "अनादिभावं यद्विज्ञानेनैव निवर्तते तज्ज्ञानमिति प्राज्ञा ईक्षणं संप्रचक्षते"। श्रुतयः "अनीशया शोचति मुह्यमानः" "देवात्मशक्तिं स्वगुणैर्निगूढाम्"। न तं विदाथ य इदं जजानानान्यद्युष्माकमंतरं भवति। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरान्ति। नीहारं तमोऽज्ञानमित्यनर्थान्तरम्। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति। "इंद्रो मायाभिः पुरुरूप ईयते"। अजामेकां लोहित। अनृतेन हि प्रत्यूढा। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जंतवः इत्याद्याः स्मृतयोऽपि। यत्साक्षादपरोक्षाद्ब्रह्म। अयमात्मा सर्वान्तर इति वा। तद्योगेन मायायोगेन भवन्ति जीवादयो नित्याः। अद्वितीयस्यापि परमात्मनो मायया बहुरूपत्वमुपपद्यते इवेत्यर्थः। श्रूयते चैकस्यैव बहुरूपत्वम्। इंद्रो मायाभिः पुरुरूप ईयते। एको देवः सर्वभूतेषु गूढः। एकं सद्विप्राः। एकं सन्तं बहुधा।। एक सन्बहुधा विचारः। त्वमेकोऽसि। अजायमानो बहुधा विजायते। तथा च मोक्षधर्मे। एक एव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचंद्रवदिति॥ तथा च याज्ञवल्क्यः। आकाशमेकमिती च। तथा कावषेयगीतासु। न जायते म्रियते वेति। एकश्च सूर्य इति। तथा परमेश्वर आह। एकः सर्वगतो ह्यात्मेति। एकस्यैव मायाबहुरूपं तस्मात्स एव कारणात्मा परमेश्वरः कार्यात्मानं जीवात्मानं नियुंक्ते कृतप्रयत्नापेक्षो मायया न परमार्थतः। संसरति न संसारयति। तथा

चाह भगवान्। अहं प्रशास्ता सर्वस्येति। न चाप्ययं संसरति न च संसारयत्प्रभुरिति। किं च मायानिमित्ते भेदेऽभ्युपगम्यमानेऽस्य परमात्मनः कार्यकारणात्मनाऽवस्थितस्याधिक्यमाधिपत्यं नापैति किंचिदपि। मायात्मकत्वात्संसारस्य कूटस्थ एव भवतीत्यर्थः। यस्मादेवं तस्मादनादियोगेनानाद्यविद्यायोगेन भवन्ति। पुंसः पुमांसो जीवा बहवो भवन्ति। अथवा पुंसः पुरुषस्य पूर्णस्य परमात्मनो मायाऽनादिसिद्धा तद्योगेन बहवो भवन्ति। तथा च सर्वमनुगीतासु स्पष्टमाह भगवान्। इदं जगदनेकमिति वेदानुशासनम्। तथा चाह भगवान्पराशरः। आत्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वम्। "ज्ञानस्वरूपमत्यंतं निर्मलं परमार्थतः" इति। तथा चैतत्स्पष्टमाह भगवान्सनत्सुजातः। ब्राह्मे पुराणे कावषेयगीतासु। असंगेन वेदान्पठध्वमिति ॥ २० ॥

**य एतद्वा भगवान्स नित्यो विकारयोगेन करोति विश्वम्।**
**तथा च तच्छक्तिरिति स्म मन्यते तथार्थयोगे च भवन्ति वेदाः ॥ २१ ॥**

एवं तावदेकस्यैव परमात्मनोऽनादिमायायोगेन बहुरूपत्वमुक्तम्। इदानीं यदीश्वरस्य कारणत्वं तदपि मायोपाधिकमित्याह। य एतदिति। य एतद्वा परमार्थभूतो भगवानैश्वर्यादिसमन्वितः परमेश्वरो नित्यः स विकारयोगेनेक्षणादिपूर्वकं विश्वं करोतीति। तथा तत्सर्वं तच्छक्तिर्दैवात्मशक्तिर्माययैव करोति। न परमात्माऽपूर्वादिलक्षण इति स्म मन्यते। न स्वतश्चित्सदानंदाद्वितीयस्य कारणत्वम्। किं तु मायावेशवशादित्यर्थः। किं तर्ह्यस्य तथाभूतशक्तियोगे प्रमाणमिति चेत्तत्राह तथार्थयोगे तस्य परमात्मनो जगदुपादानभूतमायार्थयोगे च भवन्ति वेदाः। तस्य मायासद्भावे वेदाः प्रमाणं भवन्तीत्यर्थः। तथा च श्रुतिः। इंद्रो मायाभिरिति। तथा चाह भगवान्। दैवी ह्येषा गुणमयी मम माया दुरत्ययेति ॥ २१ ॥

**धृतराष्ट्र उवाच-**

**यस्माद्धर्मान्नाचरन्तीह केचित्तथा धर्मान्केचिदिहाचरन्ति ।**
**धर्मः पापेन प्रतिहन्यते वा उताहो धर्मः प्रतिहन्ति पापम् ॥ २२ ॥**

एवं तावत्प्रमादं वै मृत्युमहं ब्रवीमीत्यादिना मृत्योः स्वरूपं तस्य कार्यात्मनाऽवस्थानं तन्निमित्तं चानेकार्थं दर्शयित्वा केन तर्ह्यस्य विनाश इत्याशंक्यैवं मृत्युं जायमानमित्यादिना ज्ञानादेवाभयप्राप्तिं दर्शितां श्रुत्वा प्रासंगिके चोद्यद्वये परिहृते कर्मस्वभावपरिज्ञानाय प्राह धृतराष्ट्रः यस्मादिति। यस्माद्धर्मानग्निष्टोमादीनाचरन्तीह लोके । केचित्तथा धर्मानिहाचरन्ति । किं तेषां धर्मः पापेन प्रतिहन्यत उताहोस्विद्धर्मः प्रतिहन्ति पापम् । अथवा तुल्यबलेनान्यतरेणान्यन्य विनाश इति । अविदुष उभयोरनुभव एव । नान्यतरेणान्यतरस्य विनाशः । विदुषः पुनरनयोरपि ज्ञानाग्निना विनाश इत्याह ॥ २२ ॥

**सनत्सुजात उवाच–**

**तस्मिन्स्थितो वाऽप्युभयं हि नित्यं ज्ञानेन विद्वान्प्रतिहन्ति सिद्धम्**
**यथाऽन्यथा पुण्यमुपैति देही तथागतं पापमुपैति सिद्धम् ॥ २३ ॥**

एवं पृष्टः प्राह भगवान्सनत्सुजातः । तस्मिन्निति । तस्मिन्पुण्यापुण्यात्मके कर्मणि स्थितोऽपि कुर्वन्नप्युभयं पुण्यापुण्यलक्षणं कर्म नित्यं नियमेन विद्वाञ्ज्ञानेन प्रतिहन्ति विनाशयति । कथमेतदवगम्यते ज्ञानेन विद्वान्प्रतिहन्ति तत्राह । सिद्धं प्रसिद्धं ह्येतच्छ्रुतिस्मृतीतिहासपुराणेषु । तथा च श्रुतिः "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इति ॥ यथा पुष्करपलाश इति । यथैषीकातूलमग्नाविति च । यथैधांसि समिद्धोऽग्निरिति च । क्षणमात्मानुसंधानात्पापं दहति कोटिशः । अन्यथा पापविध्वंसो न भवेत्कोटिपुण्यतः ॥ अन्यथा ज्ञानहीनश्चेत्पुण्यमुपैति तथागतं पापमुपैति तत्फलं चोपभुंक्ते । कथमवगम्यत इति चेत् । एतदपि श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धम् । तथा च श्रुतिः "इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो ह्यभि–

न्दति मूढाः । नाकस्य पृष्ठे सुकृतेन भूत्वेमं लोकं हीनतरं वा विशन्तीति" । "अनंदा नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति य के चात्महनो जनाः" । "त्रैविद्या मामिति" च ॥२३॥

**गत्वोभयं कर्मणा भुज्यतेऽस्थिरं शुभस्य पापस्य स चापि कर्मणा॥**
**धर्मेण पापं प्रणुदतीह विद्वान्धर्मो बलीयानिति तस्य विद्धि॥२४॥**

किमविदुषोऽनुभव एवोभयोरुतान्यतरेणान्यतरस्य विनाश इति तत्राह । गत्वेति । गत्वा परलोकं प्राप्योभयं पुण्यापुण्यसाध्यं फलं कर्मणा पुण्यापुण्यलक्षणेन भुज्यतेऽस्थिरम् । तथा च श्रुतिः "तद्यथेह कर्मचितो लोकः क्षीयत" इति । श्रूयते च बृहदारण्यके यो वा एतदक्षरमिति । अथ येऽन्यथातो विदुरिति च च्छांदोग्ये । स चापि सोऽपि विद्वान्धर्मेण कर्मणा पापं प्रणुदति विनाशयति । तथा च श्रुतिः । धर्मेण पापमपनुदतीति । इह लोके विद्वान्वक्ष्यमाणलक्षण ईश्वरार्पणबुद्ध्या कर्मानुष्ठाता तस्य धर्मो बलीयानिति विद्धि जानीहि । ईश्वरेऽर्पितत्वात् । तथा च वक्ष्यति । तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् । पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा । ज्ञानेन चात्मानमुपैति विद्वानथान्यथा वर्गफलानुकांक्षी । अस्मिन्कृतं तत्परिगृह्य सर्वममुत्र भुंक्ते पुनरेति मार्गमिति ॥ २४ ॥

**येषां धर्मेषु विस्पर्धा बले बलवतामिव ।**
**ते ब्राह्मणा इतः प्रेत्य स्वर्गे यान्ति प्रकाशताम् ॥२५॥**

येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनमित्याह श्लोकद्वयेन । येषामिति । येषां विषयपराणां स्वर्गादावुर्वश्यादिभोगश्रवणात्तत्साधनभूतज्योतिष्टोमादिधर्मेषु विस्पर्धा संघर्षो वर्ततेऽस्मादहमुत्कृष्टतरं धर्मं कृत्वाऽस्मादपि सुखी भूयासमिति । बले बलवतामिव । यथा बलवतो राज्ञो बलवन्तं राजानं दृष्ट्वाऽहमस्मादपि बलवत्तां संपाद्यैनं जित्वाऽस्मादपि सुखी भूयासमिति संघर्षो वर्तते तद्वदतिफलसंगसहितास्ते ब्राह्मणा यज्ञा-

दिकारिण इतः प्रेत्य धूमादिमार्गेण गत्वा स्वर्गे नक्षत्रादिरूपेण यान्ति प्राप्नुवन्ति प्रकाशतां प्रकाशम् । श्रूयते च—अथ य इमे ग्राम इष्टापूर्ते दत्तमिति ॥ २५ ॥

**येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनम् ।**
**ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥२६ ॥**

येषां विषयानाकृष्टचेतसामनित्यफलसाधनज्योतिष्टोमादौ धर्मे न च स्पर्धा न च संघर्षो विद्यते न वर्तते तेषां फलनिरपेक्षमीश्वरार्थं कर्मानुष्ठानवतां तद्यज्ञादिकं कर्म चित्तशुद्धिद्वारेण ज्ञानसाधनम् । तथा च श्रुतिः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति । वक्ष्यति च भगवान्स्वयमेव शुद्धिद्वारेणैव ज्ञानसाधनत्वं पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मेति । ये यज्ञादिभिर्विशुद्धसत्त्वाः परमात्मानमात्मत्वेनावगच्छन्ति ते ब्राह्मणा इतोऽस्मात्कार्यकारणलक्षणाल्लोकात्प्रेत्य मुक्ताः स्वर्गं सुखं पूर्णानंदं ब्रह्म यान्ति । इतरतः स्वर्गादस्य वैलक्षण्यमाह । त्रिविष्टपमिति । त्रिभिराध्यात्मिकादिभिस्तापैः सत्त्वादिभिर्जाग्रदादीभिर्वा मुक्तं त्रिविष्टपम् । अथवा तैर्विष्टं प्रविष्टमधिकारिणं पातीति त्रिविष्टपमिति ॥ २६ ॥

**तस्य सम्यक्समाचारमाहुर्वेदविदो जनाः ।**
**नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ २७ ॥**

इदानीं विदुषः समाचारमाह । तस्येति । तस्य विदुषः सम्यक्समाचारं वेदविदो जना विद्वांस आहुः । नैनं योगिनं मन्येत चिंतयेत् । भूयिष्ठं बहु । बाह्यमाभ्यंतरं जनम् । पुत्रकलत्राद्याभ्यंतरं जनम् । इतरद्बाह्यम् । तथा पुत्रमित्रादयो न गृह्णन्ति तेषामगोचर एव वर्ततेत्यर्थः ॥२७॥

**यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम् ।**
**अन्नपानं च विप्रेन्द्रस्तज्जीवेन्नानुसंज्वरेत् ॥ २८ ॥**

कीदृशे देशे वास इत्याह । यत्रेति । यत्र यस्मिन्देशे मृग इह मृगो

यथैकान्ते जनरहिते स्थान आजीव्ये वने स्वस्थस्तिष्ठति तद्वत्सोऽपि चोरादिपीडारहितेऽन्नपानादि भूयिष्ठं बहुलं वर्तत इति मन्येत प्रावृषीव तृणोदकं बहुलं भवति तद्वत् । तृणोलपमिति केचित् । तृणोलपमिति ख्यातं मुनिभोज्यान्नादिष्विति । दूर्वाविशेष इति केचित् । तत्र स्थित्वा तदन्नपानादिनोपजीवेत् । नानुसंज्वरेत्संतप्तो न भवेत् । अन्यथान्नपानादिरहिते देशे कथं नाम देहयात्रा सिध्येदिति संतप्तो भवति । ततश्च न योगसिद्धिः ॥ २८ ॥

**यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।**
**अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ॥ २९ ॥**

तत्राप्येवंविधजनसमीपे वास इत्याह । यत्रेति । यत्र यस्मिन्देशेऽकथयमानस्य तूष्णींभूतस्य स्वमाहात्म्यं प्रच्छादयतो येनकेनचिदाच्छन्नस्य येनकेनचिदाशिस्य यत्रक्वचन शायिन आत्मानमिव लोकं पश्यतो जडवल्लोकमाचरतः प्रयच्छत्यशिवं जड भव इति मत्वाऽशिवमकल्याणमवमानादिकं प्रयच्छति । तथारिक्तमिवाकुर्वन्यथा कश्चित्स्थितप्रज्ञलक्षणज्ञो ब्रह्मविदिति ज्ञात्वा प्रणिपातादिपूर्वकमीश्वरबुद्ध्या संपूजयति तद्वत् । अज्ञाततयातिरिक्तं ब्राह्मणजातिमात्रप्रयुक्तपूजातिरिक्तं पूजान्तरं ब्रह्मविदनुरूपमकुर्वन्नवमानादिकमेव कुर्वन्यो जनः सोऽस्य विदुषः श्रेयान् । नेतरो यः प्रणिपातादिपूर्वकमीश्वरबुद्ध्या पूजयति । तथाह मनुः । संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव । तथा चाह पराशरः । संमाननात्परा हानिर्नान्या विद्वज्जने मतेति । जनेनावमतो योगी योगसिद्धिं च विंदतीति ॥ २९ ॥

**यो वाऽकथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।**
**ब्रह्मस्वं नोपहन्याद्वा तदन्नं संमतं सताम् ॥ ३० ॥**

कीदृशस्य तर्ह्यन्नं भोज्यमित्याह । यो वा इति । अकथयमानस्य तूष्णींभूतस्य सर्वोपसंहारं कृत्वा पूर्णात्मनाऽवस्थितस्यात्मानं नानुसंज्वरेन्न

तापयेत् । ब्रह्मस्वं नोपहन्याद्वा । ब्रह्मनिष्ठासाधनभूतं चैलाजिनपुस्तकादिकं नोपहन्याद्वा । तथा चोक्तम् । रत्नहेमादिकं नास्य योगिनः स्वं प्रचक्षते । कुशवल्कलचैलादि ब्रह्मस्वं योगिनो विदुः । अन्यदपि । ब्रह्मस्वं ब्राह्मणस्वं नोपहन्याद्वा । वा समुच्चये । तदन्नं तस्यान्नं संमतं सतां भोज्यत्वेन ॥ ३० ॥

**नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।**
**ज्ञातीनां तु वसन्मध्ये नैव विद्येत किंचन ॥ ३१ ॥**

पुनरपि तस्यैव समाचारमाह । नित्यमिति । नित्यं नियमेनाज्ञातचर्या गूढचर्या मे मम कर्तव्येति मन्येत । ब्राह्मणो ब्रह्मवित् । ज्ञातीनां ज्ञातिपुत्रादिप्रभृतीनां मध्ये संनिधौ वसन्नैव विद्येत प्रतिपद्येत किंचन किंचिदपि । कश्चिदिति केचित् । योगी नैव विद्येत । पुत्रकलत्रादिकं परित्यज्य केवलं स्वात्मनिष्ठो गूढचार्येव भवेदित्यर्थः । तथा च श्रुतिः । कुटुंबं पुत्रदारांश्च वेदांगानि च सर्वशः । यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः । तथा चाह वसिष्ठः । यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । जानन्नपि हि मेधावी जडवल्लोकमाचरेदिति । अथवा नित्यमज्ञातचर्या । अज्ञाति चक्षुराद्यविषयभूत वाचामगोचरेऽनुदितानस्तमितज्ञानात्मनावास्थितेऽशनायाद्यसंस्पृष्टे पूर्णानंदस्वरूपे सर्वान्तरे प्रत्यग्भूते ब्रह्मणि चर्या निष्ठा समाधिलक्षणा मे मम कर्तव्या । न पराग्भूतदेहेंद्रियपुत्रामित्रकलत्रादौ स्थूलोऽहं कृशोऽहं ब्राह्मणोऽहं क्षत्रियोऽहमित्येवमात्मिका कर्तव्येति मन्येत । स ब्राह्मणो ब्रह्मवित् । तथा च श्रुतिः । यश्चक्षुषा न पश्यतीति । यस्मादेवं तस्मादज्ञात एव ब्रह्मणि निष्ठा कर्तव्या । तस्मात्क्रोधमानादयोऽनित्या विषयाश्चेंद्रियाणि च । ज्ञातयश्च समाख्याता देहिनस्तत्त्वदर्शिन इतींद्रियादीनां ज्ञातिशब्देनोक्तत्वात् । ज्ञातीनामिंद्रियादीनां मध्ये वसन्पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्निति मन्यमानो विजानन्नपि नैवमात्मादिरूपेण विद्येत प्रतिपद्येत । तत्साक्षित्वादात्मनः । तथा च श्रुतिः । अथ यो वेदेदं

जिघ्राणीति स आत्मेति । देहद्वयतद्धर्मानात्मत्वेन न गृह्णीयादित्यर्थः॥ ३१॥

**को ह्येनमन्तरात्मानं ब्राह्मणो मन्तुमर्हति ।**
**निर्लिंगमचलं शुद्धं सर्वद्वंद्वविवर्जितम् ॥ ३२ ॥**

कस्मात्पुनरेवं गृह्यतेऽत आह । को ह्येनमिति । को हि ब्राह्मणो ब्रह्मविद्विषयासक्त्या ज्ञातीनां संनिधौ वसन्निर्लिंगं सूक्ष्ममचलं क्रियाकर्त्रादिशून्यं शुद्धमविद्यादिदोषरहितं सर्वद्वंद्वविवर्जितमशनायापिपासादिधर्मविवर्जितमंतरात्मानं प्रमात्रादिसाक्षिणं मानांतराविषयीभूतं मंतुमर्हति ज्ञातुं योग्यो भवति, न कोऽपीत्यर्थः । किं च विपरीततया जानात्यनात्मविषयीभूतम् । एवमुक्तेन प्रकारेण देहद्वयतद्धर्मतया स्थूलोऽहं कृशोऽहं न गच्छामि न पश्यामि मूको बधिरः काणः सुख्यहं दुःख्यहमिति ब्राह्मणः सन्मंतुमर्हति । तथा च सति ब्राह्मण्यमेव हीयत इत्यर्थः । वक्ष्यति च । य एवं सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वयेति ॥ ३२ ॥

**योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।**
**किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ ३३ ॥**

यस्त्वेवं मनुते स पापीयानित्याह । योऽन्यथेति । योऽन्यथाऽज्ञानान्निर्लिंगमचलं शुद्धं सर्वद्वंद्वविवर्जितं चित्सदानंदं ब्रह्मात्मना सन्तं स्वात्मानमन्यथा देहद्वयतद्धर्मात्मतया कर्ता भोक्ता सुखी दुःखी कृशः स्थूलोऽमुष्य पुत्रोऽस्य नप्ता ब्राह्मणोऽहमित्येवमात्मानं प्रतिपद्यते किं तेन मूर्खेणानात्मविदाऽऽत्मचौरेणात्मापहारिणा न कृतं पापम् । महापातकादि सर्वं कृतं तेनेत्यर्थः । तथा च श्रुतिः । असुर्या इति । ब्राह्मण्यं प्राप्य लोकेऽस्मिन्न मूकबधिरो भवेदिति स्मृतिः । तस्माद्विषयभूतदेहेंद्रियादिष्वात्मभावं परित्यज्याज्ञात एव वागाद्यगोचरे परमात्मनि निष्ठा कर्तव्येत्यर्थः ॥ ३३ ॥

**अश्रान्तः स्यादनादानात्संमतो निरुपद्रवः ।**
**शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥ ३४ ॥**

अन्यथा देहद्वयमिंद्रियादितद्धर्माननुपपादयतः किं भवतीत्यत आह अश्रान्त इति । योऽनात्मभूतदेहेन्द्रियतद्धर्मानात्मत्वेन नोपादत्ते स पुरुषोऽश्रान्तः स्यात्संसारश्रमयुक्तो न भवेत् । अशनायापिपासादेर्देहादिधर्मत्वात् । तथा च श्रुतिः । अशनायापिपासे प्राणस्येति । देहद्वयाध्यासेन तद्धर्माध्यासो भवति । तस्याप्यविद्यैव मूलम् । इदानीं ज्ञानादज्ञाननिवृत्तौ तन्मूलः सोऽपि निवर्तत इत्यर्थः । य एवमश्रान्ततया निरुपद्रवो भवति क्रोधलोभभयहर्षादयो भूतदाहीया योगान्तराया उपद्रवास्तद्धीनो निरुपद्रवः संमतो विद्वद्भिः शिष्टत्वेन संमतः । शिष्टवन्न स्यान्नाचरेत् । जडवच्चरेद्ब्राह्मणो ब्रह्मवित्कविः ॥ ३४ ॥

**ये यथा वान्तमश्नन्ति श्वाला नित्यमभूतये ।**
**एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात् ॥ ३५ ॥**

इदानीमगूढचारिणं कुत्सयन्नाह । ये यथेति । मूढाः श्वाला इति प्रोक्ताः । श्वालाः श्वाना इति दर्शनात् । यथा श्वालाः श्वानो मूढा वा वान्तमुद्गीर्णमश्नन्त्येवं ये शिष्टा ब्रह्मविदः स्वमाहात्म्यं ख्यापयन्तोऽगूढचारिणो वर्तन्ते ते वान्तमुद्गीर्णमश्नन्ति स्ववीर्यस्योपभोजनाद्यदिदं वान्ताशनं तदभूतयेऽनर्थायैवेत्यर्थः । तस्माद्गूढः सन्नशिष्टवदेव समाचरेदिति ॥ ३५ ॥

**अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः ।**
**ते दुर्धर्षा दुष्प्रकंप्या विद्यात्तान्ब्रह्मणस्तनुम् ॥ ३६ ॥**

इदानीं योगिनं प्रशंसयन्नाह । अनाढ्या इति । अनाढ्या अबहुमता असक्तात्मानो मानुषे वित्ते जायापुत्रवित्तादिषु । आढ्या वेदेषु वेदप्रातिपाद्याहिंसासत्यास्तेयब्रह्मचर्यशमादिसाधनेषु ये द्विजास्ते दुर्धर्षा दुष्प्रकंप्याश्च विद्यात्तान्ब्रह्मणस्तनुं ब्रह्मस्वरूपभूतानित्यर्थः ॥ ३६ ॥

**सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन ।**
**न समानो ब्राह्मणस्य यस्मिन्प्रयतते स्वयम् ॥ ३७॥**

किं च ब्रह्मविन्महिमैषः । सर्वानिति । सर्वानग्न्यादीन्स्विष्टकृतः सुष्टु इष्टं कुर्वन्तीति । तथा च श्रुतिः । स्विष्टं कुर्वन्स्विष्टकृदिदि । देवान्प्रत्येकमुद्दिश्य त्यागार्थं विद्यात् । य इह कश्चन सर्वदेवतायाज्यपि ब्राह्मणस्य न समानो ब्राह्मणेन ब्रह्मविदा न समान इत्यर्थः । नैतदाश्चर्यम् । यस्मिन्देवताविशेषे हविष उद्देशत्यागेन फलार्थं प्रयतते स्वयं यजमान इदमग्नय इदमिंद्रायेति सोऽपि हविष्प्रतियोगी देवताविशेषो न समानो ब्रह्मविदा किमुत वक्तव्यं देवपशुर्यजमानो न समान इति । तथा च मोक्षधर्मे । ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः । इज्यते येन मंत्रेण यजमानो द्विजोत्तम इति । तथा च मनुः । ब्रह्मविद्भ्यः परं भूतं न किंचिदिति ॥ ३७ ॥

**यमप्रयतमानं तु मानयन्ति स मानितः ।**
**न मान्यमानो मन्येत नावमानेन संज्वरेत् ॥३८॥**

पुनरपि तस्यैव समाचारमाह । यमिति । यं ब्रह्मविदमप्रयतमानं तूष्णींभूतं सर्वोपसंहारं कृत्वा स्वे महिम्नि व्यवस्थितं गूढचारिणं केचिद्विद्वांसः स्थितप्रज्ञलक्षणज्ञा ब्रह्मविदिति ज्ञात्वा मानयन्ति पूजयन्ति चेत्स तैर्मानितः पूजितोऽपि विद्वान्न मान्यमानोऽहमिति मन्येत । तथा स्थितप्रज्ञलक्षणानभिज्ञा अज्ञ इति मत्वाऽवमानं कुर्वन्ति चेत्तस्मिन्नवमाने निमित्ते नानुसंज्वरेन्नानुतप्येत् ॥ ३८ ॥

**लोकस्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा ।**
**विद्वांसो मानयन्तीह इति मन्येत मानितः ॥ ३९ ॥**

किं तर्हि मानितेनावमानितेन वा मंतव्यमित्याह श्लोकद्वयेन लोकेति । यदिदं विद्वांसो ब्रह्मविदं मानयन्तीति तत्तेषां निमेषोन्मेषवत्स्वभाववृत्तिः स्वाभाविकी वृत्तिरिति मन्येत ॥ ३९ ॥

**अधर्मविदुषो मूढा लोकाः शास्त्रविवर्जिताः ।**
**न मान्यं मानयिष्यन्ति एवं मन्येदमानितः ॥ ४० ॥**

तथावमानितो जनैरवज्ञातो विद्वानेवं मन्येत। अधर्मविदुषो मूढा विवेकहीना लोकाः शास्त्रविवर्जिताः । न मान्यं मानार्हं मानयिष्यन्त्यमान्यमपि मानयिष्यन्तीत्येतदविदुषां स्वभाव इति मन्येत । अमानितोऽपूजितो विद्वान् ॥ ४० ॥

**न वै मानं च मौनं च सहितौ वसतः सदा ।**
**अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ॥ ४१ ॥**

इदानीं मानमौनयोर्भिन्नविषयत्वमाह।न वा इति।न वै मानं च मौनं च सहितौ एकत्र वसतः सदा । अयं प्रत्यक्षादिगोचरो लोको लोक्यत इति प्रपंचो मानस्य विषयः । असौ परलोको मौनस्य । कोऽसौ तद्विदुः । तथा चाह भगवान् । ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति । तथा चानुगीतासु । ओं तत्सद्विष्णवे चेति सायुज्यानि पदानि वै । इति तच्छब्दवाच्यं ब्रह्म मौनस्य विषय इत्यर्थः ॥ एतदुक्तं भवति । मानात्संसारप्राप्तिर्मौनेन ब्रह्मप्राप्तिरिति । उक्तं च हिरण्यगर्भे । अन्नांगनादिभोगेषु भावो मान इति स्मृतः । ब्रह्मानंदसुखप्राप्तिहेतुर्मौन इति स्मृत इति ॥४१॥

**श्रीर्हि मानार्थसंवासात्सा चापि परिपंथिनी ।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ४२ ॥**

इदानीं मानार्थसंवासेऽपवर्गाभावं दर्शयति । श्रीरिति । हे क्षत्रिय श्रीर्हि मानार्थसंवासान्मानविषयसंवासान्मानगोचरे प्रपंचे वर्तमानस्य स्वर्गपश्वन्नादिसाधनभूतं कर्मानुतिष्ठतः श्रीर्हि भवति । सा चापि श्रीः परिपंथिनी श्रेयोमार्गविरोधिनी । तथा च मोक्षधर्मे निबंधिनी रज्जुरेषेति । य एवं श्रियाभिभूतो मूढः सन्विषयेषु प्रवर्तते तेन प्रज्ञाहीनेन ब्राह्मी ब्रह्मानंदलक्षणा श्रीः । तथा च हिरण्यगर्भे । या नित्या चिद्घनानंता गुणरूपविवर्जिता । आनंदाख्या परा शुद्धा ब्राह्मी श्रीरिति कथ्यते । सा दुर्लभा श्रवणायापि न शक्या । तथा च श्रुतिः । श्रवणायापि बहुभिरिति ॥ ४२ ॥

**द्वाराणि सम्यक्प्रवदन्ति सन्तो बहुप्रकाराणि दुराचराणि ।**
**सत्यार्जवे ह्रीर्दमशौचविद्याः षण्मानमोहप्रतिबंधकानि ॥ ४३ ॥**

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यामुद्योगपर्वणि सनत्सुजातपर्वणि द्विचत्वारिंशोऽध्यायः ॥

इदानीं ब्रह्मलक्ष्मीप्रवेशद्वाराणि दर्शयति । द्वाराणीति । द्वाराणि ब्रह्मलक्ष्मीप्रवेशद्वाराणि सन्तः सम्यक्प्रवदन्ति । बहुप्रकाराणि दुराचरणानि दुःखाचरणानि कानि तानि। सत्यं यथार्थभाषणं भूतहितं च। आर्जवमकौटिल्यम्। ह्रीरकार्यकरणे लज्जा । दमोऽन्तःकरणोपरतिः । बहिः करणोपरतिः इति केचित् । शौचं मलकल्मषप्रक्षालनम् । विद्या ब्रह्मविद्या । षडेतानि मानमोहप्रतिबंधकानि ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीशंकरभगवतः कृतौ सनत्सुजातभाष्ये द्वितीयोऽध्यायः ॥ १ ॥

---

## तृतीयोऽध्यायः ।

**धृतराष्ट्र उवाच—**

**कस्यैष मौनः कतरन्नु मौनं प्रब्रूहि विद्वन्निह मौनभावम् ।**
**मौनेन विद्वानुत याति मौनं कथं मुने मौनमिहाचरन्ति ॥ १ ॥**

अयं हि लोको मानस्येत्यादिना मौनमाहात्म्यं प्रदर्शितं श्रुत्वा प्राह धृतराष्ट्रः । कस्येति । कस्य कीदृशस्यैष पूर्वोक्तो वागाद्युपरमलक्षणो मौनो भवति कतरन्नु एतयोरसंभाषणात्मस्वरूपयोर्मौनं प्रब्रूहि । हे विद्वन्निह मौनभावं मौनस्वभावं मौनेन तूष्णींभावेन विद्वानुत याति मौनं ब्रह्म । आहोस्विदन्येन । कथं मौनमिहाचरन्ति ॥ १ ॥

**सनत्सुजात उवाच —**

**यतो न वेदा मनसा सहैनमनुप्रविशन्ति ततोऽथ मौनम् ।**
**यत्रोत्थितो वेदशब्दस्तथायं स तन्मयत्वेन विभाति राजन् ॥ २ ॥**

एवं पृष्टः प्राह भगवान् । यत इति । यतो यस्माद्वेदा मनसा सहैनं

परमात्मानं नानुप्रविशान्ति । तथा च श्रुतिः । यतो वाचो निवर्तन्त इति । ततस्तस्मादेव कारणात्स एव वाचामगोचरः परमात्मा मौनम् । यद्येवं किं लक्षणस्तर्हि परमात्मा तत्राह । यत्रोत्थितो वेदशब्दः । यस्मिन्नर्थे निमित्तभूते समुत्थितो वेदशब्दः शास्त्रादिकारणं ब्रह्मेत्यर्थः । अथवा यस्मिन्संवेदिताख्य उत्थितो वाचकत्वेन प्रयुक्तो वेदशब्द इत्यर्थः । तथा वेदशब्दप्रतिप्राद्यः संविद्रूपोऽयं परमात्मा यदि वाचामगोचरः परमात्मा कथमेतदवगम्यते संविद्रूपः परमात्मेति तत्राह । स परमात्मा तन्मयत्वेन ज्योतिर्मयत्वेनैवास्माकं विभाति राजन्नेवमेवास्मदनुभवो नात्राविश्वासः कर्तव्य इत्यर्थः । अथवा । श्रुतिस्मृतीतिहासपुराणादिषु ज्योतिर्मयत्वेन प्रतीयते । तथा च श्रुतिः तद्देवा ज्योतिषां ज्योतिरायुरिति ॥ २ ॥

**धृतराष्ट्र उवाच—**

**ऋचो यजूंष्यधीते यः सामवेदं च यो द्विजः ।**
**पापानि कुर्वन्पापेन लिप्यते किं न लिप्यते ॥ ३ ॥**

इदानीं वेदस्वभावपरिज्ञानाय प्राह धृतराष्ट्रः । ऋच इति । यः पापानि कुर्वन्नृग्वेदादीनधीते स तेन वेदाध्ययनेन पूयते न वैतद्वक्तुमर्हसीत्यभिप्रायः ॥ ३ ॥

**सनत्सुजात उवाच—**

**नैनं सामान्यृचो वाऽपि यजूंषि चाविचक्षणम् ।**
**त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥ ४ ॥**

एवं पृष्टः प्राह भगवान् । नैनमिति । यः पापानि कुर्वन्नृग्वेदादीनधीते नैनं प्रतिषिद्धचारिणमृग्वेदादयो वेदाः पापात्कर्मणस्त्रायन्ते न रक्षन्ति । न ते मिथ्या ब्रवीम्यहम् । एवमेतन्नात्राविश्वासः कर्तव्य इत्यर्थः ॥ ४ ॥

**न च्छंदांसि वृजिनं तारयन्ति मायाविनं मायया वर्तमानम् ।**
**छंदांस्येनं प्रजहत्यंतकाले नीडं शकुंता इव जातपक्षाः ॥ ५ ॥**

किं कुर्वन्ति चेत्तत्राह । न च्छंदांसीति । छंदांसि ऋगादयो वेदा एनं

वृजिनं धर्मनास्तिकं पापकारिणम् । अधीतवेदमधीतवेदार्थं मायाविनं धर्मध्वजं मायया वर्तमानं मिथ्याचारिणं तं न तारयन्ति न रक्षन्ति । किं करिष्यन्ति चेत् । यथा शकुंताः पक्षिणो जातपक्षाः सन्तो नीडं स्वाश्रयं त्यजन्ति एवं छंदांसि अंतकाल एनं स्वाश्रयभूतं प्रजहति परित्यजन्ति ॥

**धृतराष्ट्र उवाच—**

**न चेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण ।**
**अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ६ ॥**

एवमुक्ते प्राह धृतराष्ट्रः । न चेदिति । कर्मोदय इत्यादिना नित्यानां काम्यानां च पितृलोकादिप्राप्तिहेतुत्वेन संसारानर्थहेतुत्वस्य दर्शितत्वात् । प्रतिषिद्धस्य कर्मणो नरकहेतुत्वेन संसारानर्थहेतुत्वस्य च दर्शितत्वात् । न चेदा वेदविदं त्रातुं शक्ताश्चेदयं वेदाध्ययनादिरूपः प्रलापः कस्माद्धेतोः । अनर्थहेतुत्वेन वेदाध्ययनतदर्थविचारतदनुष्ठानानि न कर्तव्यानीत्यर्थः॥६॥

**सनत्सुजात उवाच—**

**तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानुभाव ।**
**निर्दिश्य सम्यक्प्रवदन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ति ॥ ७ ॥**

भवेदेवं यद्येष एव वेदार्थः स्यादन्य एव स्वर्गादेः परमपुरुषार्थो मोक्षाख्यो वेदार्थः । इतरस्य च कर्मराशेरुपासनायाश्च तत्प्राप्तिसाधनज्ञानसाधनांतःकरणशुद्धिसाधनत्वेन पारंपर्येण पुरुषार्थत्वादेव वेदप्रतिपाद्यत्वम् । तथा हि तमेव परमात्मानं परमपुरुषार्थं दर्शयति वेदः—"अनंदा नाम ते लोका अंधेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः" । स्वर्गादिलोकानामपुरुषार्थत्वमनानंदात्मकत्वमविद्यावद्विषयत्वेन दर्शयित्वा आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्"इत्यात्मविदः कृतार्थत्वं दर्शयित्वेह चेदेवदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिः, य एतद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमेवापियन्तीत्यात्मविदोऽमृतत्वप्राप्तिमनात्मविद आत्मविनाशमनर्थप्राप्तिं च

दर्शयित्वा 'यदेतदनुपश्यतीत्यात्मानं देवमंजसा। ईशानं भूतभव्यस्य च ततो विजुगुप्सत' इत्यादिभिर्वाक्यैस्तत्स्वरूपतदर्थदर्शनतत्फलानि भूयो भूयो दर्शयित्वा कथमेनं रागादिभिस्ततः समाकृष्यमाणं विषयाभिसक्तं मोक्षयित्वा परमे पदे परमात्मनि पूर्णानंदे स्वराज्ये मोक्षाख्ये स्थापयिष्यामीति मत्वा तत्प्राप्तिसाधनज्ञानसाधनविविदिषासाधनत्वेन यज्ञदानादीनि दर्शयति वेदः। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति। तस्मात्तदर्थत्वेनैव यज्ञादीनां पुरुषार्थत्वम्। इतरत्र तु स्वर्गादौ श्येनयागादीनामिवापुरुषार्थहेतुत्वात्। तथा च श्रुतिः। प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनंदन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति। यस्मादेवं मोक्षसाधनप्रतिपादकत्वेन संसारानर्थनिवृत्तिहेतुत्वं वेदानां तस्माद्वेदा वेदविदं त्रातुं शक्ता एवेत्येतत्सर्वमभिप्रेत्याह श्लोकत्रयेण। तत्र प्रथमेन परमपुरुषार्थत्वं परमात्मानं दर्शयति। तस्यैवेति। तस्यैव परमात्मनो मायाकल्पितैर्नामादिविशेषरूपैरिदं जगद्भाति। हे महानुभाव। कथमेतदवगम्यते तस्यैव नामादिविशेषरूपैरिदं जगद्भातीति। इंद्रो मायाभिः पुरुरूप ईयत इति मायानिमित्तं बहुरूपं निर्दिश्य तस्यैव सम्यग्रूपं तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमित्यादिना प्रवदन्ति वेदाः। द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेत्यादिना तस्यैव मूर्तात्मकमात्मवज्जगत्स्वरूपं निर्दिश्य तस्यैव सम्यग्रूपं नेति नेतीत्यादिना प्रवदन्ति वेदाः। तथाऽऽत्मन आकाशः संभूत इति वियदादिधरित्र्यंतं तस्यैव कार्यं निर्दिश्य कोशोपन्यासमुखेन तस्यैव सम्यग्रूपं "यतो वाचो निवर्तन्त" इत्यादिना प्रवदन्ति वेदाः। तथा हि अधीहि भगवन्नित्यादिना नामादिप्राणान्तं जगन्नादश्य यत्र नान्यत्पश्यतीत्यादिना तस्यैव सम्यग्रूपं भूमानं तमसः परं स्वे महिम्नि स्थितं प्रवदन्ति वेदाः। न केवलं वेदा एवापि तु मुनयोऽपि तद्ब्रह्म विश्ववैरूप्यं विश्वरूपविपरीतस्वरूपमुदाहरन्ति। तथा चाह भगवान्पराशरः—"प्रत्यस्तमितभेदं

यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितमिति " । "तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् । विश्वस्वरूपवैरूप्यलक्षणं परमात्मन" इति ॥ ७ ॥

**तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् ।**
**पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा ॥८॥**

इदानीमीश्वरार्थमनुष्ठीयमानानां कर्मणां तत्प्राप्तिसाधनापेक्षितशुद्धिद्वारेण पारंपर्येण पुरुषार्थत्वमन्येषां संसारानर्थहेतुत्वेनापुरुषार्थत्वं दर्शयति श्लोकद्वयेन तदर्थमिति । यद्विश्वरूपविपरीतरूपं ब्रह्म तदर्थमुक्तं वेदेन । किं तपः कृच्छ्रचांद्रायणादि । इज्या ज्योतिष्टोमादि । किं ततो भवतीति चेत् । ताभ्यामिज्यातपोभ्यामसौ पूर्वोक्तविनियोगत ईश्वरार्थं कर्मानुतिष्ठन्पुण्यमुपैति प्राप्नोति । कर्मजन्यापूर्वसंयुक्तो भवति । तेन पुण्येन पापं विनिहत्य क्षपयित्वा पश्चादुत्तरकालं स क्षपिताशेषकल्मषो जायते । ज्ञानविदीपितात्मा ज्ञानप्रकाशितचित्सदानंदाद्वितीयब्रह्मरूपो भवति ॥८॥

**ज्ञानेन चात्मानमुपैति विद्वानथान्यथा वर्गफलानुकांक्षी ।**
**अस्मिन्कृतं तत्परिगृह्य सर्वममुत्र भुंक्त पुनरेति मार्गम् ॥ ९ ॥**

अथ ज्ञानेन चात्मानं परमात्मानमुपैति विद्वानात्मवित् । अथ चेत् । अन्यथा पुनरीश्वरार्थं कर्मानुष्ठानेन क्षपिताशेषकल्मषो ज्ञानी न भवति तदा वर्गफलानुकांक्षींद्रियफलानुकांक्षी स्वर्गादिफलानुकांक्षी सन्नस्मिँल्लोके कृतं तद्यज्ञादिकं परिगृह्य सर्वममुत्र परलोके तत्फलमुपभुंक्ते । ततः कर्मशेषेण पुनरेति मार्गं संसारमार्गम् । तथा च श्रुतिः । तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्त इति ॥ ९ ॥

**अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते ।**
**ब्राह्मणानां तपस्त्वृद्धमन्येषां तावदेव तत् ॥ १० ॥**

इदानीं विद्वदविद्वदपेक्षया कर्मणां फलवैषम्यमाह । अस्मिन्निति । अस्मिँल्लोके यत्तपस्तप्तं तस्य फलममुत्रामुष्मिँल्लोके भुज्यते । इति सर्वेषां

समानम्। ब्राह्मणानां ब्रह्मविदां पुनरयं विशेषः। तपस्त्वृद्धमतीव समृद्धं फलवृद्धिर्भवतीत्यर्थः । तथा च श्रुतिः । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति । अन्येषामनात्मविदां वैषयिकाणां तावदेतन्न समृद्धं भवति । यस्य कर्मणो यत्फलं श्रुतं तावन्मात्रफलसाधनं न फलसमृद्धिहेतुर्भवतीत्यर्थः ॥ १० ॥

**धृतराष्ट्र उवाच—**

**कथं समृद्धमप्यृद्धं तपो भवति केवलम् ।**
**सनत्सुजात तद्ब्रूहि कथं विद्याम तद्वयम् ॥ ११ ॥**

श्रुत्वैवमाह धृतराष्ट्रः । कथमिति । श्लोकोऽयं स्पष्टोऽर्थः ॥ ११ ॥

**सनत्सुजात उवाच—**

**निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ।**
**एतत्समृद्धमप्यृद्धं तपो भवति नान्यथा ॥ १२ ॥**

एवं पृष्टः प्राह भगवान्सनत्सुजातः । निष्कल्मषमिति । यदेतन्निष्कल्मषं तपस्तत्केवलं परिचक्षते । केवलं बीजमित्युक्तेः सर्वस्यास्य प्रपंचस्य बीजं निमित्तं यत्तत्केवलमित्युक्तम् । आहोशना गुणसाम्ये स्थितं तत्त्वं केवलं त्विति कथ्यते । केवलादेतदुद्भूतं जगत्सदसदात्मकमिति । तदेव केवलं तपः समृद्धमप्यृद्धं भवति नान्यथा । यदा निष्कल्मषं न भवति सकल्मषं स्यात्तदा समृद्धमप्यसमृद्धं भवति ॥ १२ ॥

**तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।**
**तपसा वेदविद्वांसः परेत्यामृतमाप्नुयुः ॥ १३ ॥**

तदेव प्रशंसति ! तपोमूलमिति । स्पष्टोऽर्थः ॥ १३ ॥

**धृतराष्ट्र उवाच—**

**कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।**
**सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ १४ ॥**

श्रुत्वैवमाह राजा । कल्मषमिति । अस्यार्थः । निष्कल्मषं तपश्चैतत्केवलं परिचक्षत इति श्रुतस्य तपसः कल्मषं ब्रूहि । हे सनत्सुजात ।

येन निष्कल्मषेण तपसेदं गुह्यं सनातनं ब्रह्माहं विद्यामिति ॥ १४ ॥

सनत्सुजात उवाच—

**क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि च सप्त राजन् ।**
**ज्ञानादयो द्वादश चातताना: शास्त्रे गुणा ये विदिता द्विजानाम् ॥१५॥**

एव पृष्टः प्राह भगवान् । क्रोधादय इति । क्रोधादयो यस्य तपसो द्वादश दोषाः कल्मषाः । तथा नृशंसानि च सप्त हे राजन्यस्य तपसो दोषाः । तथा ज्ञानादयो द्वादश चातताना विस्तीर्यमाणाः शास्त्रे वेदशास्त्रे ये विदिता गुणा द्विजानां तान्गुणान्दोषांश्च वक्ष्यामीत्यभिप्रायः ॥१५॥

**क्रोधः कामो लोभमोहौ विवित्साऽकृपाऽसूया मानशोकौ स्पृहा च ।**
**ईर्ष्या जुगुप्सा च महागुणेन सदा वर्ज्या द्वादशैते नरेण ॥१६॥**

क्रोधादीन्दर्शयति क्रोध इति । क्रोधो नाम कामप्रतिघातादुत्पद्यमानस्ताडनाक्रोशनादिहेतुः कामहानिहेतुकश्चान्तःकरणविक्षेपो गात्रस्वेदकंपनादिलिंगः । काम स्त्र्याद्यभिलाषः । लोभः परद्रव्येच्छा न्यायार्जितस्य स्वकीयस्य च द्रव्यस्य तीर्थविनियोगासामर्थ्यं वा । मोहः कृत्याकृत्यविवेकशून्यता । विवित्सा विषयरसान्वेत्तुमिच्छा । अकृपा निष्ठुरता । असूया गुणेषु दोषाविष्करणं परगुणादिष्वक्षमा वा । मान आत्मबहुमानत्वम् । शोक इष्टार्थवियोगजोऽन्तःकरणविक्षेपो रोदनचिंतनादिलिंगोऽप्रतीकारविषयः । स्पृहा विषयभोगेच्छा । ईर्ष्या परश्रियामसहिष्णुता । जुगुप्सा परगुणानपह्नोतुमिच्छा बीभत्सा वा । एते क्रोधादयो द्वादश दोषाः तपसः कल्मषरूपाः सदा वर्ज्याः । महागुणेन ब्राह्मणेन । महागुणो ब्रह्मप्राप्तिगुणः । तेन ब्रह्मप्राप्तिलक्षणेन महागुणसमान्वितेन वर्जनीया इत्यर्थः । उक्तं च नाममहोदधौ । "महद्ब्रह्म इति प्रोक्तं महत्त्वान्महतामपि । तत्प्राप्तिगुणसंयुक्तो महागुण इति स्मृत " इति । अथवा ब्राह्मणानामुत्कृष्टगुणयोगः स्वभावसिद्धः । तथा चोक्तं भगवता " शमोदमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्म-

कर्मस्वभावजम् ” ॥ १६ ॥

**एकैकमेते राजेंद्र मनुष्यं पर्युपासते ।**
**लिप्समानोन्तरं तषां मृगाणामिव लुब्धकः ॥ १७ ॥**

एतेषां सदा वर्ज्यत्वे हेतुमाह । एकैकमिति । यथा मृगाणामंतरं छिद्रं लिप्समानो रंध्रान्वेषणपरो लुब्धको मृगयुरनुवर्तते यथा च छिद्रं लब्ध्वा तान्हान्ति तथा तेषां मनुष्याणां रंध्रान्वेषणपरा एते क्रोधादय एकैकं मनुष्यं पर्युपासते । अथवा मनुष्यान्पर्युपासत इत्यपि पाठः । तस्मिन्नेकैकं मनुष्यान्पृथक्पृथक्पर्युपासत इति योजना । तथा छिद्रं लब्ध्वा तान्हान्ति । तस्मादेतेष्वेकोऽपि दोषो विनाशकारणम् । यस्मादेवं तस्मात्सदा वर्ज्या इत्यर्थः । उक्तं च हिरण्यगर्भे । यथा पांथस्य कान्तारे सिंहव्याघ्रमृगादयः । उपद्रवकरास्तद्वत्क्रोधाद्या दुर्गमा नृणामिति ॥ १७ ॥

**संभोगसंविद्विषमेधमानो दत्तानुतापी कृपणो बलीयान् ।**
**वर्गप्रशंसी वनितां च द्वेष्टा एते परे सप्त नृशंसरूपाः ॥ १८ ॥**

इदानीं नृशंससप्तकमाह संभोगेति । संभोगे विषयसंभोगे संविद्यस्य बुद्धिर्वर्तते स संभोगसंवित् । विषमिव परेषामुपद्रवं कृत्वैधमानो वर्धमानः। अथवा द्विषमेधमान इति पाठान्तरे द्विषं द्वेष्यं कर्म कृत्वा प्राणिनां तद्द्वारेणैधमान इति । दानं दत्त्वानुतापं करोतीति दत्तानुतापी । यत्किंचिदर्थलवलाभमात्रलोभात्सर्वावमानं सहते यः स कृपणः । अबलीयाञ्ज्ञानबलवर्जितः । वर्गप्रशंसी । इंद्रियवर्गप्रशंसी । वनितां च द्वेष्टाऽनन्यशरणां भार्यां यो द्वेष्टि । एते परे पूर्वोक्तेभ्यः क्रोधादिभ्यः सप्त नृशंसरूपाः ॥ ॥ १८ ॥

**ज्ञानं च सत्यं च दमः श्रुतं च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।**
**यज्ञश्च दानं च धृतिः शमश्च महाव्रता द्वादश ब्राह्मणस्य ॥ १९॥**

इदानीं ज्ञानादयो द्वादशोच्यन्ते । ज्ञानं चेति । ज्ञानं तत्त्वार्थसंवेदनम्। सत्यं यथार्थभाषणं भूतहितं च । दमो मनसो दमः । श्रुतमध्यात्मशास्त्र-

श्रवणम् । मात्सर्यं सर्वभूतेष्वसहमानता तदभावोऽमात्सर्यम् । ह्रीरकार्यकरणे लज्जा । तितिक्षा द्वंद्वसहिष्णुता । अनसूया परदोषानाविष्करणम् । यज्ञोऽग्निष्टोमादिर्महायज्ञश्च । दानं ब्राह्मणादिभ्यो धनादिपरित्यागः । धृतिर्विषयसंनिधाविंद्रियनिग्रहः । शमोऽन्तःकरणोपरतिर्बहिःकरणोपरतिरिति केचित् । एते ज्ञानादयो महाव्रताः परमपुरुषार्थसाधनभूता ब्राह्मणस्य वर्णिताः । ये ज्ञानादयो द्वादश चातताना इति पूर्वं प्रस्तुतास्ते वर्णिताः॥ ॥ १९ ॥

**यस्त्वेतेभ्योऽप्रवसेद्द्वादशेभ्यः सर्वामिमां पृथिवीं स प्रशिष्यात् । त्रिभिर्द्वाभ्यामेकतो वाऽविमुक्ताः क्रमाद्विमुक्ता मौनभूता भवन्ति॥२०**

इदानीं गुणस्तुतिं करोति । यस्त्विति । यस्त्वेतेभ्यः पूर्वोक्तेभ्योऽप्रवसेत् । प्रवासं न करोति तैरेव समन्वितो भवेत् । स सर्वामिमां पृथिवीं प्रशिष्यात्प्रशास्ति । आत्मवशं करोति । य एतेषां मध्ये त्रिभिर्द्वाभ्यामेकत एकस्माद्वा विमुक्ता एतेषामन्यतमेनापि समन्विताः । त एते क्रमेण विमुक्त विशिष्टज्ञानिनो भूत्वा मौनभूता भवन्ति ब्रह्मविदो भवन्ति ॥ २० ॥

**दमोऽष्टादशदोषः स्यात्प्रातिकूल्यं कृते भवेत् ।**
**अनृतं पैशुनं तृष्णा प्रातिकूल्यं तमोऽरतिः ॥ २१ ॥**
**लोकद्वेषोऽभिमानश्च विवादः प्राणिपीडनम् ।**
**परिवादोऽतिवादः स्यात्परितापोऽक्षमाऽधृतिः ॥२२॥**
**असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः ।**
**एतैर्दोषैर्विमुक्तो यः स दमः सद्भिरुच्यते ॥ २३ ॥**

इदानीं दमदोषानाह श्लोकत्रयेण । दम इत्यादिना । दमोऽष्टादशदोषसमन्वितो भवति । किमिति तेषां दोषत्वमिति चेत्प्रातिकूल्यं कृते भवेत् । एतेषामन्यतमे कृते दमस्य प्रतिकूलं भवेत् । अनृतमयथार्थवचनम् । पैशुनं परदूषणवचनम् । तृष्णा विषयाशा । प्रातिकूल्यं सर्वेषां प्रतिकूलता । तमोऽज्ञानम् । अरतिर्यथालाभेनासंतुष्टिरथवा रतिः स्त्रीसंभोगे-

ष्वभिरतिः ॥ लोकद्वेषो लोकानामुद्वेगाचरणम् । अभिमानः सर्वत्राप्रणतिभावः । विवादो जनकलहाचरणम् । प्राणिपीडनं स्वदेहसंपूरणाय प्राणिहिंसा । परिवादः समक्षे परदूषणाभिधानम् । अतिवादो निरर्थकोऽतिप्रलापः । परितापो वृथा दुःखचिंतनम् । अक्षमा द्वंद्वासहिष्णुता । अधृतिरिंद्रियार्थेषु चपलता । असिद्धिर्धर्मज्ञानवैराग्याणाम् । पापकृत्यं प्रतिषिद्धाचरणम् । हिंसाऽविहितहिंसा । इति दमदोषाः प्रकीर्तिताः । एतैः अनृतादिभिर्दोषैर्विमुक्तो यो गुणः स दम इति सद्भिरुच्यते ॥२१–२३॥

**मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः ।**
**विपर्ययाः स्मृता एते मददोषा उदाहृताः ॥ २४॥**

इदानीं मददोषानाह । मद इति । एतेऽनृतादिहिंसान्ता ये दमदोषत्वेन स्थिताः स्मृताः । त एते विपर्ययाः स्मृताः सत्यादिरूपत्वेन स्मृता मददोषा मदनाशकरा उदाहृताः । त एते सत्यापैशुनातृष्णाप्रातिकूल्यातमोरतिलोकाद्वेषानभिमानाविवादाप्राणिहिंसापरिवादानतिवादापरितापक्षमाधृतिसिद्ध्यपापकृत्याहिंसा इत्येते मदनाशकरा उदाहृताः ॥ २४ ॥

**श्रेयांस्तु षड्विधस्त्यागस्तृतीयो दुष्करो भवेत् ।**
**तेन दुःखं तरन्त्येव भिन्नं तस्मिञ्जितं कृते ॥ २५ ॥**

त्यागो भवति षाड्विध इत्युक्तं तत्राह । श्रेयानिति । श्रेयांस्तु षड्विधेषु त्यागेषु तृतीयत्यागो दुष्करो दुःखसंपाद्यः । तृतीयेन त्यागेन दुःखमाध्यात्मिकादिभेदाभिन्नं तरन्त्येव । तस्मिंस्त्यागे कृते सर्वं जितं भवत्येव ॥ २५ ॥

**अर्हते याचमानाय पुत्रान्वित्तं ददाति यत् ।**
**इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः ॥ २६ ॥**
**कामत्यागश्च राजेंद्र स तृतीय इति स्मृतः ।**
**अप्रमादी भवेदेतैः स चाप्यष्टगुणो महान् ॥ २७ ॥**

त्यागषट्कं दर्शयति । अर्हत इति सार्धेन । अर्हते दानयोग्याय । याच-

मानाय पुत्रान्वित्तं ददाति यत्। तदेव त्यागद्वयं षण्णां मध्ये प्रथमम्। इष्टापूर्तं द्वितीयं स्यात्। इष्टं श्रौतैककर्माणि यद्दानम्। पूर्तं स्मार्तैककर्मणि। इष्टं देवेभ्यो दत्तं पूर्तं पितृभ्य इति केचित्। नित्यं वैराग्ययोगतो विशुद्धसत्त्वस्था नित्यत्वादिदोषदर्शिनो विरक्ततया साधनादिपरित्यागः कामस्त्यागश्चेति तृतीयः। षण्णां यत् द्विकत्रयं तेषु तृतीयं द्विकरूपत्याग इत्यभिप्रायः। किमेभिर्भवतीत्याह। अप्रमादीति। य एतैः षड्भिस्त्यागैः समन्वितः सोऽप्रमादी भवेत्। सोऽप्रमादोऽष्टगुणोऽष्टभिर्गुणैः समन्वितो भवति ॥२६॥२७॥

**सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च।**
**अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेव च ॥ २८ ॥**

के ते तान्दर्शयति। सत्यमिति। सत्यं यथार्थभाषणम्। ध्यानं चेतसः कस्मिंश्चिच्छुभाश्रये मंडलपुरुषादौ तैलधारावत्संतताविच्छेदिनी प्रवृत्तिः। समाधानं प्रणवेन विश्वाद्युपसंहारं कृत्वा स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मनावस्थानम्। चोद्यं कोहं कस्य कुतो वेति। वैराग्यं दृष्टानुश्रविकविषयवितृष्णता। अस्तेयमचौर्यमात्मनो द्रव्यं वा। आत्मचौर्यमुक्तम्। "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणेत्यादि"। ब्रह्मचर्यमष्टांगमैथुनत्यागः। तथा चोक्तम्। "दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणमिति"। असंग्रहोऽपरिग्रहः पुत्रदारक्षेत्रगृहादीनाम्। एतत्परिपालयेत् ॥२८॥

**एवं दोषा दमस्योक्तास्तान्दोषान्परिवर्जयेत्।**
**दोषत्यागोऽप्रमादः स्यात्स चाप्यष्टगुणो मतः ॥ २९ ॥**

दोषान्वर्जयेदित्याह। एवमिति। दमोऽष्टादशदोषः स्यादिति ये दोषा उक्तास्तान्वर्जयेदिति। कस्मादित्यत्राह। दोषत्यागेऽप्रमादः स्यात्तेषु दोषेषु

त्यक्तेषु प्रमादादि न स्यादित्यर्थः । सोऽप्यप्रमादोऽष्टगुणो मतः सत्यं ध्यानमित्यादीनां पूर्वमेवोपादिष्टमित्यर्थः ॥ २९ ॥

**सत्यात्मा भव राजेंद्र सत्ये लोकाः प्रतिष्ठिताः ।**
**तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥ ३० ॥**

इदानीं सत्यस्तुतिः क्रियते । सत्यात्मेति । सत्यात्मा सत्यरूपो भवेति। हे राजेंद्र सत्ये लोकाः प्रतिष्ठिताः । अमृतं मोक्षः ॥ ३० ॥

**निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ।**
**एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ३१ ॥**

निवृत्तेनेति । निवृत्तेनैव दोषेण क्रोधादय इत्यादिना पूर्वोक्तदोषरहितस्तपोव्रतमिहाचरेत् । एतद्धात्रा परमेश्वरेण कृतं वृत्तं सत्यमेव सतां परं व्रतम् ॥ ३१ ॥

**दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम् ।**
**एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ ३२ ॥**

इदानीं कथं समृद्धमित्यादिनोपक्रान्तं प्रकरणार्थमुपसंहरति । दोषैरिति । दोषैरेतैः क्रोधादय इत्यादिना पूर्वोक्तैर्विमुक्तं गुणैरेतैर्ज्ञानादिभिः समन्वितं यदेतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ ३२ ॥

**यन्मां पृच्छसि राजेंद्र संक्षेपात्प्रब्रवीमि ते ।**
**एतत्पापहरं शुद्धं जन्ममृत्युजरापहम् ॥ ३३ ॥**

किं बहुना । यन्मामिति । हे राजन्यन्मां पृच्छसि तत्संक्षेपात्समासतो ब्रवीमि ते । एतत्पापहरं शुद्धं फलाभिकांक्षारहितं तपोव्रतं जन्ममृत्युजरापहं वक्ष्यमाणम् ॥ ३३ ॥

**इंद्रियेभ्यश्च पंचभ्यो मनसश्चैव भारत ॥**
**अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत् ।३४ ॥**

एतत्पापहरं शुद्धमित्युक्तम् । किं तदिति चेत्तत्राह । इंद्रियेभ्य इति । हे भारत सविषयेभ्यः पंचभ्य इंद्रियेभ्यो वर्तमानेभ्यो मनसश्च तथातीते-

भ्योऽनागतेभ्यश्च मुक्तश्चेत्स सुखी भवेन्मुक्त एव भवतीत्यर्थः ॥ ३४ ॥

**धृतराष्ट्र उवाच—**

**आख्यानपंचमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।**
**तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथाऽपरे ॥ ३५ ॥**

एवमुक्ते प्राह धृतराष्ट्रः । आख्यानेति । आख्यानं पुराणं पंचमं येषां वेदानां ते आख्यानपंचमाः । श्रूयते च च्छांदोग्ये । इतिहासपुराणं च पंचमो वेद इति । तैराख्यानपंचमैर्वेदैर्भूयिष्ठमत्यर्थं कथ्यते श्लाघ्यते बहुमन्यते । सर्वस्मादधिकोऽहमिति कथ्यत इति केचित्पठन्ति । आ-ख्यानपंचमैर्वेदैः कश्चिज्जनः पंचवेदी कथ्यते । तथा चान्ये चतुर्वेदा-स्त्रिवेदाः ॥ ३५ ॥

**द्विवेदाश्चैकवेदाश्च अनृचश्च तथाऽपरे ।**
**एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणम् ॥ ३६ ॥**

अपरे द्विवेदा एकवेदाश्च । अनृचश्च तथापरे । एतेषु मनुष्येष्वधिकं श्रेष्ठं ब्रूहि यमहं ब्राह्मणं वेद विद्याम् ॥ ३६ ॥

**सनत्सुजात उवाच—**

**एकवेदस्य चाज्ञानाद्वेदास्ते बहवोऽभवन् ।**
**सत्यस्यैकस्य राजेंद्र सत्ये कश्चिदवस्थितः ॥ ३७ ॥**

एवं स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मनावस्थितः स एव ब्राह्मण इति दर्शयिष्यंस्तद्व्यतिरिक्तस्य सर्वस्य तदज्ञानमूलत्वं दर्शयति । एकवेद-स्येति । एकस्य वेदस्य वेद्यमिदं रूपमनिदं वेदरूपं वेदनं वेदो ज्ञानम् । एकस्याद्वितीयस्य संविद्रूपस्येत्यर्थः । तस्यैकवेदस्य ब्रह्मणोऽनवगमात् । ऋगादयो वेदा बहवोऽभवन् । अत्र ऋगादिवेदास्तत्प्रतिपत्त्यर्थं विचारं कुर्वन्तीति वेदाख्यामवाप्नुयुः । अथवा सद्भावं साधयन्तीति वेदाः । विदन्ति वेदनहेतुभूता इति वा वेदाः । अथ वा ब्रह्माधीनं परमात्मानं लभन्त इति वेदाः । अथ वा ब्रह्मादीनामात्मानं लभन्त इति वेदाः ।

ब्रह्मण आवृतस्य लाभहेतव इति वा वेदाः । ब्रह्मण आत्मतया लाभहेतव इति वा वेदाः । विद विचारणे । विद सत्तायाम् । विद ज्ञाने । विद लाभे । एतेषां धातूनां विषये वर्तन्ते यस्मात्ततो वेदा इत्युक्ताः । स एको वेदः । क इति चेत् । सत्यं ज्ञानमनंतं ब्रह्म । एकमेवाद्वितीयमित्यस्य श्रुतिप्रतिपाद्यस्यैकस्य ब्रह्मणः सिद्धत्वान्न चाशंकेत्यर्थः । तत्सत्यस्य वेदस्वरूपस्य ब्रह्मणोऽनवगमाद्वेदा बहवः ख्याताः सर्वे वेदास्तदर्थदर्शनहेतवः । हे राजेंद्र त्वं पुनः कश्चित्सत्ये स्थित इति ॥ ३७ ॥

**सत्यात्प्रच्यवमानानां संकल्पावितथाऽभवन् ।**
**ततः कर्म प्रतायेत सत्यस्यानवधारणात् ॥ ३८ ॥**

भूयो मे शृणु । सत्यादिति । सत्यादिलक्षणाद्ब्रह्मणः प्रच्यवमानानांसंकल्पा वितथा अभवन् । व्यर्था भवन्ति । स्वाभाविकसत्यसंकल्पादयो नसिध्यन्तीत्यर्थः । ततः कर्म यज्ञादि प्रतायेत विस्तृतं भवेदित्यर्थः । तदेतत्सर्वं सत्यस्य सत्यादिलक्षणस्य ब्रह्मणोऽनवधारणादनवगमात् । आत्मा ज्ञाननिमित्तत्वात्संसारस्य । यावत्परमात्मानमात्मत्वेन साक्षान्न जानाति तावदयं तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाण इतस्ततो मुह्यमानोऽसत्यसंकल्पः स्वर्गपश्वान्नादिहेयसाधनेषु वर्तत इत्यर्थः ॥ ३८ ॥

**विंद्याद्बहुपठन्तं तु बहुवागिति ब्राह्मणम् ।**
**य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ ३९ ॥**

इदानीं ब्राह्मणलक्षणमाह । विंद्यादिति । बहुपठन्तमाख्यानपंचमवेदाध्यायिनम् । बहुवागिति विन्द्यान्न साक्षाद्ब्राह्मणमिति । कस्तर्हि मुख्यो ब्राह्मण इति चेत् । य एतत्सत्यादिलक्षणान्नापैति न क्षरति चित्सदानंदाद्वितीयब्रह्मरूपेणावतिष्ठते स एव ब्राह्मणस्त्वया ज्ञेयः । नेतरो यः सत्याच्च्युतोऽकृतार्थः सन्कर्मणि प्रवर्तते । तथा च ब्रह्मविदमेव ब्राह्मणं दर्श-

यति श्रुतिः । मौनं चामौनं च निर्विद्याथ ब्राह्मण इति विपापो विज्वरो विचिकित्सो ब्राह्मणो भवतीति च ॥ ३९ ॥

**छंदांसि नाम द्विपदां वरिष्ठ स्वच्छंदयोगेन भवन्ति तत्र ।**
**छंदोविदस्तेन च तानधीत्य गता हि वेदस्य न वेद्यमार्याः ॥ ४० ॥**

भवेदेतदेवं यदि तत्रैव ब्रह्म सिध्येत् । न च सिध्यत्यन्यपरत्वाद्वेदस्येति तत्राह छंदांसीति । हे द्विपदां वरिष्ठ छंदांसि वेदाः स्वच्छंदयोगेन स्वच्छंदता स्वाधीनता यथाकाममित्यर्थः । तत्रैव परमात्मनि प्रमाणं भवति । श्रूयते च सर्वे वेदा यत्पदमामनन्ति । वेदैश्च सर्वैरहमेव वेद्य इति च । पुरुषार्थपर्यवसायित्वाद्वेदस्य तद्व्यतिरिक्तस्यानित्याशुचिदुःखानुविद्धत्वेन पुरुषार्थत्वाभावात्तत्स्वरूपत्वतत्साधकत्वतत्प्रतिपादकत्वेन वेदानां प्रमाणत्वमित्यर्थः । यस्माद्वेदाः स्वच्छंदयोगेन तत्रैव परमात्मनि प्रमाणं भवन्ति तेन च हेतुना तान्वेदानधीत्यावगम्य वेदान्तश्रवणादि कारणं कृत्वा गताः प्राप्ता वेदस्य संविद्रूपस्य परमात्मनः स्वरूपं न वेद्यं प्रपंचमार्याः पंडिता ब्रह्मविदः ॥ ४० ॥

**न वेदानां वेदिता कश्चिदस्ति वेद्येन वेदं न विदुर्न वेद्यम् ।**
**यो वेद वेदं स च वेद वेद्यं यो वेद वेद्यं न स वेद सत्यम् ॥४१॥**

एवं तर्हि वेदवेद्यत्वे अन्यदेव तद्विदितादथो अविदितादधि । यतो वाचो निवर्तन्ते इत्यादि विरोधः प्रसज्येतेत्यत्राह । न वेदानामिति । न वेदानामृगादीनां मध्ये कश्चिदपि वेदः परमात्मनो वाचामगोचरस्य संविद्रूपस्य वेदितास्ति । कस्माद्यस्माद्वेद्येन जडरूपेण वेदं संविद्रूपं न विदुः । न वेद्यं प्रपंचमपि न विदुः ! संविदधीनत्वात्सर्वसिद्धेः । यस्मात्संविदधीना सर्वसिद्धिस्तस्माद्यो वेदं संविद्रूपं परमात्मानं वेद जानाति स च वेद वेद्यमिदं सर्वम् । तथा च श्रुतिः । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमिति । एकविज्ञानेन सर्वं विज्ञातमिति च । यो वेद्यमिदं रूपं

वेद जानाति स सत्यं सत्यादिलक्षणं परमात्मानं न वेद ॥ ४१ ॥

**यो वेद वेदान्स च वेद वेद्यं न तं विदुर्वेदविदो न वेदाः ।**
**तथापि वेदेन विदन्ति वेदं ये ब्राह्मणा वेदविदो भवन्ति ॥ ४२ ॥**

नन्वेवं तर्हि वेद्येन वेदं न विदुर्न वेद्यमिति वदतोऽनात्मविदः प्रपंचासिद्धिरेवेत्युक्तं भवतीत्याशंक्याह । यो वेदेति।यो वेद जानाति ऋगादीन्वेदान्स च वेदवेद्यं सोऽप्यनात्मविदविच्छिन्नेन संवेदनेन वेद्यं प्रपंचं वेद । नन्वेवं चेत्तर्हि वेदवित्परमात्मानं विजानीयादित्याशंक्याह । न तं परमात्मानं वाचामगोचरं विदुर्वेदविदः । न वेदा वेदा अपि न तं विदुः । न तं विषयीकुर्वन्तीत्यर्थः । कथंचिल्लक्षणया बोधयन्तीति भावः । नन्वेवं तर्हि कथमौपनिषदं ब्रह्म स्यान्नेत्याह । तथापि वेदेन विदन्ति वेदं यद्यपि वागाद्यविषयं ब्रह्म तथापि वेदेन ऋगादिना विदन्ति जानन्ति वेदं संविद्रूपं परमात्मानम् । के ते ये ब्राह्मणा वेदविदो भवन्ति । वेदानामुपनिषद्वाक्यानामुपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तिरूपषाड्विधलिंगेन जहदजहल्लक्षणया तत्त्वमस्यहं ब्रह्मास्म्ययमात्मा ब्रह्मेत्यादिना संवेदस्य संविद्रूपस्य परमात्मनः प्रतिपादनप्रकारं जानन्तीत्यर्थः ॥ ४२ ॥

**धामांशभागस्य तथा हि वेदा यथा च शाखा हि महीरुहस्य ।**
**संवेदने चैव यथामनन्ति तस्मिन्हि नित्ये परमात्मनोऽर्थे ॥ ४३ ॥**

कथं तर्ह्यविषयमेव ब्रह्म वेदाः प्रतिपादयन्तीत्याशंक्याह । धामेति । धामांशभागस्य। रात्रिधामश्चंद्र इति श्रुतेः । चंद्रांशभागस्य प्रतिपच्चंद्रकलादर्शने यथा महीरुहस्य वृक्षस्य शाखा हेतुर्भवति तथा वेदास्तस्यैव परमात्मनः स्वरूपभूतसंवेदने नित्येऽविनाशिन्यर्थे परमपुरुषार्थरूपे परमानंदस्वरूपे हेतवो भवन्ति । मुनयो न पुनः साक्षाद्वाचामगोचरं परमात्मानं प्रतिपादयन्त्येवमामनन्ति ॥ ४३ ॥

**अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम् ।**
**परं हि तत्परं ब्रह्म जानात्येव च ब्राह्मणः ॥४४॥**

य एवं वेदानां वेदरूपात्मप्रतिपादनप्रकारमवगम्य व्याचष्टे सोऽपि ब्राह्मण इत्याह। अभीति। एवं वेदप्रतिपादनप्रकारं यो व्याचष्टे तमाख्यातारं विचक्षणं ब्राह्मणमभिजानामि। यस्तु बाल्यपांडित्यादिकं निर्विद्यावस्थितस्तमेव ब्राह्मणं ब्रुवे इति श्रुतिः। तथा हि "ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनं मौनं च निर्विद्याथ ब्राह्मण" इति। ननु कथमुच्यते ब्रह्माभिजानामि ब्राह्मणमाख्यातारं विचक्षणमिति तत्राह– वेदानां वेदप्रतिपादनं यथोक्तं यो विजानाति परं हि तत्परं ब्रह्म जानात्येव। अतः स ब्राह्मणो भवति। यो हि पांडित्यं निर्विद्य स्थितः स क्षिप्रं बाल्यादिकं निर्विद्य ब्राह्मणो भवतीत्यभिप्रायः ॥४४॥

**नास्य पर्येषणं गच्छेत्प्रत्यर्थिषु कथंचन।**

**अविचिन्वन्निमं वेदे ततः पश्यति तं प्रभुम्** ॥ ४५ ॥

यस्मात्सत्यनिष्ठस्यैव ब्राह्मणस्य प्रसिद्धिस्तस्माद्विषयपरो न भवेदित्याह नास्येति। नास्य जगतः पर्येषणं गच्छेद्विषयान्वेषणपरो न भवेदित्यर्थः। प्रत्यर्थिषु प्रतिपक्षभूतदेहेंद्रियादिनिमित्तमविचिन्वन्विषयसंचयमकुर्वन्निमं प्रत्यगात्मानं वेदेषूपनिषत्सु तत्त्वमस्यादिवाक्येषु ततः पश्चात्पश्यति तं प्रभुं परमात्मानमात्मत्वेन जानातीत्यर्थः। अथवा नास्यात्मनः पर्येषणमन्वेषणं गच्छेत्। प्रत्यर्थिषु प्रतिपक्षभूतदेहेंद्रियादिषु। देहेंद्रियतद्धर्मानात्मत्वेन न गृह्णीयादित्यर्थः। अविचिन्वन्देहेंद्रियतद्धर्मानात्मत्वेनासंचिन्वन्। तत्साक्षिणमात्मानमेव प्रतिपद्यमानस्तत्त्वंपदार्थशोधनानंतरमिमं प्रमात्रादिसाक्षिणं परमात्मानं पश्यति। देहेंद्रियादिकमात्मत्वेनाप्रतिपद्यमानस्तत्त्वमस्यादिवाक्यैः परमात्मानमात्मत्वेन पश्यतीत्यर्थः ॥ ४५ ॥

**तूष्णींभूत उपासीत न चेच्छेन्मनसा अपि।**

**अभ्यावर्तेत ब्रह्मास्मै बह्वनंतरमाप्नुयात्** ॥ ४६ ॥

यस्मादेवं तस्मात्। तूष्णीमिति। यस्मात्सर्वविषयपरित्याग एवात्मदर्श-

नसिद्धिस्तस्मात्तूष्णींभूतः स्वात्मव्यतिरिक्तं सर्वं परित्यज्य केवलो भूत्वा स्वात्मानमेव लोकमुपासीत । न चेच्छेन्मनसा अपि विषयेंद्रियेच्छां न कुर्यात् । यस्तूष्णींभूतो विषयोपसंहारं कृत्वा स्वात्मानमेव लोकमुपास्ते । अस्मै तूष्णींभूताय ब्राह्मणाय ब्रह्मापूर्वादिलक्षणमभ्यावर्तेत । अभिमुखीभवेदित्यर्थः । श्रूयते च– "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति" । अनंतरमाविर्भूतस्वरूपः सन्बहु भूमानं तमसः परं परमात्मानमाप्नुयात् ॥४६॥

**मौनाद्धि स मुनिर्भवति नारण्यवसनान्मुनिः ।**
**अक्षरं तत्तु यो वेद स मुनिः श्रेष्ठ उच्यते ॥४७॥**

मुनिरप्येष एवेत्याह मौनाद्धीति । मौनात्पूर्वोक्तात्तूष्णींभावादेव मुनिर्भवति न पुनररण्यवासमात्रान्मुनिर्भवति । तेषामपि तूष्णींभूतानां मध्ये यस्तु पुनरक्षरमविनाशिनं परमात्मानं वेद अयमहमस्मीति साक्षाज्जानाति स मुनिः श्रेष्ठ उच्यते । श्रूयते च । एतमेव विदित्वा मुनिर्भवतीति ॥ ४७ ॥

**सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ४८ ॥**

वैयाकरणोऽप्येष एवेत्याह सर्वेति । सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते । न पुनः शब्दैकदेशव्याकरणाद्वैयाकरणो भवति । भवतु सर्वार्थानां व्याकरणाद्वैयाकरणत्वम् । ततः किमिति चेत्तत्राह । तन्मूलतो व्याकरणम् । पूर्वोक्तादक्षराद्धि सर्वस्य नामरूपप्रपंचस्य व्याकरणम् । श्रूयते च । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । तस्माद्ब्रह्मण एव साक्षाद्वैयाकरणत्वं व्याकरोतीति तत्तथा विद्वानपि तत् ब्रह्म तथैव व्याकरोतीति वैयाकरणः ॥ ४८ ॥

**प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।**
**सत्ये वै ब्राह्मणास्तिष्ठंस्तद्विद्वान्सर्वविद्भवेत् ॥ ४९ ॥**

सर्वज्ञोऽप्येष एवेत्याह । प्रत्यक्षेति । प्रत्यक्षदर्शी लोकानां यः प्रत्यक्षेण भूरादींल्लोकान्पश्यति स सर्वदर्शनो भवेत् । सर्वरूपं परमात्मानं पश्यति । असौ पुनः सत्ये सत्यादिलक्षणे ब्रह्मणि तिष्ठन्मनः समादधाति । तद्विद्वान्सत्यादिलक्षणं ब्रह्म विद्वानात्मत्वेन सर्वं जानन्सर्वं जानातीत्यर्थः । तस्मादेष एव सर्वज्ञो नानात्ममात्रदर्शी ॥ ४९ ॥

**ज्ञानादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ।**
**वेदानां चारपूर्वेण चैतद्विद्वन्ब्रवीमि ते ॥ ५० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामुद्योगपर्वणि सनत्सुजातपर्वणि सनत्सुजातवाक्ये त्रिचत्वारिंशोऽध्यायः ।

यस्त्वेतेभ्य इत्यादिनोक्तमेवार्थं पुनरपि दर्शयत्यवश्यकर्तव्यत्वदर्शनार्थम् । ज्ञानेति । ज्ञानादिषु ज्ञानं चेत्यादिना पूर्वोक्तेषु स्थितोऽपि एवं यथा सत्ये तिष्ठन्ब्रह्म पश्यति । वेदानां चारपूर्वेण वेदान्तश्रवणादिकेनेत्यर्थः । अथवा गुणान्तरविधानमेतत् । ज्ञानादिषु स्थितोऽपि न केवलं तन्मात्रेण पश्यति । अपि तु एवमेव । वक्ष्यमाणप्रकारेण वेदान्तविचारपूर्वेण वेदान्तश्रवणपूर्वकमेव पश्यति ब्रह्म । एतद्वेदानां चारं प्रकारं हे विद्वन्ब्रवीमि वक्ष्यामीत्यभिप्रायः ॥ ५० ॥ इति भाष्ये द्वितीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ।

धृतराष्ट्र उवाच--

**सनत्सुजात यदि मां परार्थां ब्राह्मीं वाचं वदसि हि विश्वरूपाम् ।**
**परां हि कार्येषु सुदुर्लभां कथां प्रब्रूहि मे वाक्यमिदं कुमार ॥ १॥**

इदानीं ब्रह्मचर्यादिसाधनप्रतिपादनानंतरं तत्प्राप्यं च ब्रह्म प्रतिपादयितुं तृतीयचतुर्थावध्यायावारभ्येते । तत्र तावद्ब्रह्मचर्यादिसाधनं श्रुत्वा तद्वेदनाकांक्षी प्राह धृतराष्ट्रः । सनत्सुजातेति । हे सनत्कुमार । यद्यस्मादिमां परार्थामुत्कृष्टार्थां ब्राह्मीं ब्रह्मसंबंधिनीं वाचं वदसि हि । विश्वरूपां नानारूपां परामुत्तमाम् । कार्येषु कार्यरूपेषु प्रपंचेषु । सुदुर्लभां

श्रवणायाप्यश्रव्यां कथां प्रब्रूहि । मे वाक्यं एवंभूतम् । कुमार ! यस्मात्त्वं ब्राह्मीं वाचं परमपुरुषार्थसाधनभूतां सुदुर्लभां वदसि । तस्मात्त्वं वक्तुमर्हसीत्यभिप्रायः ॥ १ ॥

**सनत्सुजात उवाच—**

**नैतद्ब्रह्म त्वरमाणेन लभ्यं यन्मां पृच्छस्यभिषंगेण राजन् ।**
**बुद्धौ प्रलीने मनसि प्रचिंत्या विद्या हि सा ब्रह्मचर्येण लभ्या ॥ २ ॥**

एवं पृष्टः प्राह भगवान् नैतदिति । नैतद्ब्रह्म त्वरमाणेन पुरुषेण लभ्यं यद्ब्रह्म मां पृच्छसि । अभिषंगेण राजन् । कथं तर्हि लभ्यमित्याह । बुद्धौ अध्यवसायात्मिकायां प्रलीने मनसि प्रचिंत्या विद्या हि सा यदा पुनः संकल्पविकल्पात्मकं मनो विषयेभ्यः परावृत्य स्वात्मन्येव निश्चलं भवतीत्यर्थः । येयं बुद्धौ प्रलीने मनसि प्रचिंत्या सा विद्या ब्रह्मचर्येण वक्ष्यमाणेन लभ्या ॥ २ ॥

**आद्यां विद्यां वदसि हि सत्यरूपां या प्राप्यते ब्रह्मचर्येण सद्भिः ।**
**यां प्राप्यैनं मर्त्यलोकं त्यजन्ति या वै विद्या गुरुवृद्धेषु नित्या ॥३॥**

किं च । आद्यामिति । आद्यां सर्वादिभूतब्रह्मविषयां विद्यां वदसि हि सत्यरूपां परमार्थरूपां मे ब्रूहीति । यद्वा आद्यामकार्यभूतां असत्यप्रपंचाविषयां विद्यां वदसि तस्मात्त्वरमाणेन ब्रह्मचर्यादिसाधनोपेतेन उपसंहृतां तत्करणेनैव लभ्यामित्यर्थः । या प्राप्यते ब्रह्मचर्येण सद्भिः । यां प्राप्य एवं मर्त्यलोकं त्यजन्ति । या वै विद्या गुरुवृद्धेषु । गुरुणा विद्याप्रदानादिना वृद्धेषु वर्धितेषु शिष्येषु नित्या नियता ॥३॥

**धृतराष्ट्र उवाच—**

**ब्रह्मचर्येण या विद्या शक्या वेदितुमंजसा ।**
**तत्कथं ब्रह्मचर्यं स्यादेतद्ब्रह्मन्ब्रवीहि मे ॥ ४ ॥**

एवमुक्ते ब्रह्मचर्यविज्ञानायाह धृतराष्ट्रः । ब्रह्मचर्येणेति । या विद्या ब्रह्मचर्येण वेदितुं शक्या तत्साधनभूतं ब्रह्मचर्यं कथं स्यादेतद्ब्रह्मचर्यं ब्रह्म-

न्ब्रवीहि मे ॥ ४ ॥

**सनत्सुजात उवाच—**

**आचार्ययोनिमिह ये प्रविश्य भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।**
**इहैव ते शास्त्रकारा भवन्ति विहाय देहं परमं यान्ति सत्यम् ॥ ५ ॥**

एवं पृष्टः प्राह भगवान्सनत्सुजातः । आचार्येति । आचार्ययोनिमिह ये प्रविश्य आचार्यसमीपं गत्वेत्यर्थः । भूत्वा गर्भमुपसदनादिना शिष्यो भूत्वा ब्रह्मचर्यं गुरुशुश्रूषादिकं कुर्वन्ति । इहैवास्मिँल्लोके शास्त्रकाराः शास्त्रकर्तारः पंडिता भवन्ति । ततो बाल्यादिकं निर्विद्य ब्राह्मणत्वारब्धकर्मक्षये विहाय देहं परमं यान्ति । सत्यं सत्यादिलक्षणं परमात्मानं प्राप्नुवन्ति ॥५॥

**अस्मिँल्लोके वै जयन्तीह कामान्ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।**
**त आत्मानं निर्हरन्तीह देहान्मुंजादिषीकामिव धीरभावात् ॥६ ॥**

किं च । अस्मिन्निति । अस्मिँल्लोके वै जयन्तीह कामान्ब्राह्मीमिव स्थितिं ब्रह्मण्येव स्थितिम् । अनुतितिक्षमाणा अनुदिनं क्षममाणाः । ते आत्मानं देहेंद्रियादिभ्यो निष्क्रम्य तत्साक्षिणं चिन्मात्रं निर्हरन्ति पृथक्कुर्वन्ति । निर्वहन्तीति पाठे निर्वासयन्तीत्यर्थः । किमिवेति । मुंजादिषीकामिव । यथा मुंजादिषीकामंतस्थां निर्हरन्ति । एवं कोशपंचकेभ्यो निष्क्रम्य सर्वात्मानं प्रतिपद्यन्ते इत्यर्थः । श्रूयते च कठवल्लीषु । अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं ह स्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतमिति । धीरभावाद्धैर्येण ॥ ६ ॥

**शरीरमेतौ कुरुतः पिता माता च भारत ।**
**आचार्यतश्च यज्जन्म तत्सत्यं वै यथामृतम् ॥ ७ ॥**

आचार्ययोनिमिहेति आचार्यस्य योनित्वं दर्शितं तत्कथं मातापितृव्यतिरेकेणाचार्यस्य योनित्वमित्याशंक्य स एव साक्षाज्जनयितेत्याह ।

शरीरमेताविति । शरीरमेवास्यैतौ मातापितरौ कुरुतः । नात्मानं स्वरूपेण जनयतः । यदिदं देहद्वयात्मना जन्म तदसत्यम् । आचार्यतस्तु यदिदं चित्सदानंदाद्वितीयब्रह्मात्मना जन्म जननं तत्सत्यं परमार्थभूतम् । यथैवामृतं विनाशवर्जितं तस्मात्स एव जनयितेत्यर्थः । श्रूयते च प्रश्नोपनिषदि । त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । तथा चाहापस्तंबः स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयत इति ॥ ७ ॥

**स आवृणोत्यमृतं संप्रयच्छंस्तस्मै न द्रुह्येत्कृतमस्य जानन् ।**
**गुरुं शिष्यो नित्यमभिवादयीत स्वाध्यायमिच्छेच्च सदाऽप्रमत्तः॥८॥**

यस्मादाचार्याधीना परमपुरुषार्थसिद्धिस्तस्मात्स इति । स आवृणोत्यापूरयति । अमृतं पूर्णानंदं ब्रह्मात्मत्वेन संप्रयच्छन् । तस्मा आचार्याय न द्रुह्येत् द्रोहं नाचरेत् । तथा च श्रुतिः । " यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाश्यन्ते महात्मनः " इति । तथा चापस्तंबः । तस्मै न द्रुह्येत्कदाचन स हि विद्यातस्तं जनयतीति । कृतमस्य जानन् । अस्येति तृतीयार्थे षष्ठी ! अनेनात्मनः कृतमुपकारं जानन् । कथं तर्हि कर्तव्यमित्याह । गुरुं शिष्यो नित्यमभिवादयीत देवमिवाचार्यमुपासीत । तथा च श्रुतिः । यस्य देव इति । तथा स्वाध्यायमिच्छेच्छ्रवणादिपरो भवेच्च । सदाऽप्रमत्तः । अप्रमादी सन् ॥ ८ ॥

**शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।**
**ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ९ ॥**

इदानीं चतुष्पाद्ब्रह्मचर्यं श्लोकचतुष्टयेनाह । शिष्येति । आचार्ययोनिमिहेत्यादिनोक्तक्रमेण शुचिर्विद्यामाप्नोति ब्रह्मचर्यस्यास्य प्रथमः पाद उच्यते ॥ ९ ॥

**यथा नित्यं गुरौ वृत्तिर्गुरुपत्न्यां तथा चरेत् ।**
**तत्पुत्रे च तथा कुर्वन्द्वितीयः पाद उच्यते ॥ १० ॥**

यथेति स्पष्टार्थः श्लोकः। तथा चोक्तमाचार्यवदाचार्यदारेषु वृत्तिराचार्यपुत्रे च तथा वृत्तिश्चेति ॥ १० ॥

**आचार्येणात्मकृतं विजानञ्ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन।**
**यन्मन्यते तं प्रति हृष्टबुद्धिः स वै तृतीयो ब्रह्मचर्यस्य पादः॥ ११ ॥**

आचार्येणेति। आचार्येणात्मनः कृतमुपकारं जानञ्ज्ञानाच्चार्थं वेदार्थं परमपुरुषार्थं ज्ञात्वाऽवगम्य भावितोऽस्मीत्यनेन स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मना यथावदुत्पादितोऽस्मीति चिन्तयन्तमाचार्यं प्रति हृष्टबुद्धिः सन्यदात्मनः कृतार्थत्वं मन्यते स वै तृतीयो ब्रह्मचर्यस्य पादः॥११॥

**आचार्याय प्रियं कुर्यात्प्राणैरपि धनैरपि।**
**कर्मणा मनसा वाचा चतुर्थः पाद उच्यते ॥ १२ ॥**

आचार्यायेति। स्पष्टोऽर्थः ॥ १२ ॥

**कालेन पादं लभते तथार्थं ततश्च पादं गुरुयोगतश्च।**
**उत्साहयोगेन च पादमृच्छेच्छास्त्रेण पादं च ततोऽभियाति ॥१३॥**

इदानीं चतुष्पदीं विद्यां दर्शयति। कालेनेति। अत्र क्रमो न विवक्षितः। प्रथमं गुरुयोगतः। तत उत्साहयोगेन बुद्धिविशेषप्रादुर्भावेन। ततः कालेन बुद्धिपरिपाकेन तथार्थमिति पादविशेषणम्। ततः शास्त्रेण सहाध्यायिभिरतत्त्वविचारेण। तथा चोक्तम्। आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया। कालेन पादमादत्ते पादं सब्रह्मचारिभिरिति ॥ १३ ॥

**ज्ञानादयो द्वादश यस्य रूपमन्यानि चांगानि तथा बलं च।**
**आचार्ययोगे फलतीति चाहुर्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥१४॥**

ज्ञानादीनामाचार्यसंनिधाने फलमाह ज्ञानेति। ज्ञानादयो ज्ञानं चेत्यादिना पूर्वोक्ता द्वादशगुणा यस्य पुरुषस्य रूपम्। अन्यानि चांगानि श्रेयांस्तु षड्विधस्त्यागः सत्यं ध्यानमिति श्लोकद्वयेन चोक्तानि। तथा बलं च तद्धर्मपरिपालनसामर्थ्यं सर्वमाचार्ययोग एव फलति। नाचार्ययोगं विना फलति। श्रूयते च। आचार्याद्धैव विद्या विदितेति। आचा-

येवान्पुरुषो वेदेति च ब्रह्मार्थयोगेन च ब्रह्मचर्यम् । यदिदं गुरुसन्निधौ शुश्रूषाद्याचरणं तद्ब्रह्मचर्यं ब्रह्मार्थयोगेन फलति । स्वात्मनश्चित्सदानंदाद्वितीयब्रह्मात्मैकत्वसंपादनद्वारेण फलतीत्यर्थः ॥ १४ ॥

**एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।**
**ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन् ॥ १५ ॥**

ब्रह्मचर्यस्तुतिं करोति । एतेनेति द्वाभ्याम् । पादसप्तकस्य स्पष्टोऽर्थः ॥ १५ ॥

**एतेनैव सगंधर्वा रूपमप्सरसोऽजयन् ।**
**एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते ॥ १६ ॥**

अह्नो दीप्तिसमूहः । अह्नाय जगतां द्योतनाय सूर्यश्च जायते । उक्तं च । अह्नो दीप्तिश्च कथ्यत इति ॥ १६ ॥

**आकांक्षार्थस्य संयोगाद्रसभेदार्थिनामिव ।**
**एवं ह्येतत्समाज्ञाय तादृग्भावं गता इमे ॥ १७ ॥**

कथमेकस्य ब्रह्मचर्यस्यानेकफलसाधनत्वमित्याह । आकांक्षेति । यथा चिंतामण्यादयो रसभेदार्थिनामाकांक्षार्थस्य संयोगात्तत्तदाकांक्षितमर्थं प्रयच्छन्ति । एवमेवैतद्ब्रह्मचर्यमाकांक्षार्थस्य संयोगात्तत्तदाकांक्षितं प्रयच्छतीति ज्ञात्वा तत्तत्फलार्थं ब्रह्मचर्यं चरित्वा तादृग्भावं गता इमे देवादयः । यस्मादाचार्यसांनिध्यानुष्ठिताद्ब्रह्मचर्यात्परमपुरुषार्थप्राप्तिस्तस्मादाचार्ययोनिं प्रविश्य गर्भो भूत्वा ब्रह्मचर्यं चरेदित्यर्थः ॥ १७ ॥

**अंतवन्तः क्षत्रिय ते जयन्ति नानंतं स्वात्मभूतं जयन्ति ।**
**ज्ञानेन विद्वांस्तेज अभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पंथाः॥१८**

नन्वेवं ज्ञाननिष्ठता यदि ज्ञानस्यैव पुरुषार्थत्वं भवेदपि तु कर्मणैवेत्याशंक्याह अंतवन्त इति । हे क्षत्रिय ते अंतवंतः अंतवतो लोकान्पितृलोकान्देवलोकादीञ्जयन्ति प्राप्नुवन्ति ।नानंतं स्वात्मभूतं परमात्मभूतं लोकं जयन्ति। केन तर्ह्यनंतलोकप्राप्तिरित्याशंक्याह । ज्ञानेन विद्वांस्तेज अभ्येति

नित्यमिति । नित्यमविनाश्यात्मभूतमेवाभ्येति तेजो ज्योतिर्न कर्मणा । कस्मात्पुनर्ज्ञानेनैवाभ्येति । न विद्यते ह्यन्यथा तस्य पंथाः । तस्य पूर्णानंदज्योतिषो ज्ञानमेकं मुक्त्वाऽन्यः पंथा मार्गो नास्त्येव । श्रूयते । तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति ॥ १८ ॥

**धृतराष्ट्र उवाच—**

**आभाति शुक्लमिव लोहितमिवाथो कृष्णमथांजनं काद्रवं वा ।**
**तद्ब्रह्मणः पश्यति यत्र विद्वान्कथं रूपं तदमृतमक्षरं परम् ॥१९॥**

ज्ञानेन यद्विद्वान्पश्यति ब्रह्म तत्किमिति पृच्छति धृतराष्ट्रः । आभातीति । ब्रह्मणः अक्षरं परं ब्रह्म पश्यति तत्कथं रूपं कीदृग्रूपमिति रूपप्रश्नः । यत्र पश्यति तदित्यधिकरणप्रश्नश्च ॥ १९ ॥

**सनत्सुजात उवाच—**

**नाभाति शुक्लमिव लोहितमिवाथो कृष्णमथांजनं काद्रवं वा ।**
**न पृथिव्यां तिष्ठति नांतरिक्षे नैतत्समुद्रे सलिलं बिभर्ति ॥ २० ॥**
**न तारकासु न च विद्युदाश्रितं न चाभ्रेषु दृश्यते रूपमस्य ।**
**न चापि वायौ न च देवतासु नैतच्चंद्रे दृश्यते नोत सूर्ये ॥ २१ ॥**

एवं पृष्टः प्राह भगवान् । नेति द्वाभ्याम् । नैतद्ब्रह्म शुक्लादिरूपत्वेनावभासतेऽरूपत्वाद्ब्रह्मणः । श्रूयते च । ततो यदन्तरं तदन्तररूपमनामयमिति । अशब्दमस्पर्शमरूपमव्ययमिति च । तथा न पृथिव्यां तिष्ठति नान्तरिक्षे । तथा च श्रुतिः । अन्यत्रानवस्थानं दर्शयति । स भगवान्कस्मिन्प्रतिष्ठित इति । स्वे महिम्नीति । कस्मात्पुनः कारणात्पृथिव्यादिषु न तिष्ठति तत्राह । नैतत्समुद्रे सलिलं पंचभूतात्मकं देहं बिभर्ति । सलिलशब्दो भूतपंचकोपलक्षणार्थः । यथा अप एव ससर्जादौ तासु बीजमवासृजदित्यत्राप्यप्शब्दो भूतपंचकोपलक्षणार्थः । श्रूयते च पंचाग्निविद्यायाम् । पंचम्यामाहुतावापः पुरुषवचसो भवन्तीत्यपामेव पुरुषशब्दवाच्यत्वम् । एतदुक्तं भवति । यदि ब्रह्मणः संसारांतर्वर्तित्वं भवेत्तदा संसारानुप्रविष्टत्वा-

द्घटादिवदीदृग्रूपादिमत्त्वमन्यस्मिंश्चावस्थानं भवेत् । इदं तु पुनरपूर्वादिलक्षणत्वात्संसाराननुप्रविष्टमेव ब्रह्म तस्माद्रूपादिरहितमिति ॥ २० ॥ २१ ॥

**नैवर्क्षु नैतद्यजुष्षु नाप्यथर्वस्सु न दृश्यते वै विमलेषु सामसु ।**
**रथंतरे बृहद्रथे वापि राजन्महाव्रतस्यात्मनि दृश्यते तत् ॥ २२ ॥**

कस्य कुत्राप्युपलभ्यत इत्याह । नैवेति । ज्ञानं च सत्यं चेत्युपक्रम्य महाव्रता द्वादश ब्राह्मणस्येति ये गुणा उक्तास्तत्संयुक्तस्यात्मनि दृश्यते तत्परं ब्रह्म न घटादिवदियत्तया सिध्यति । अपि त्वात्मन्येवात्मतया सिध्यतीत्यर्थः ॥ २१ ॥

**अवारणीयं तमसः परस्तात्तदन्ततोऽभ्येति विनाशकाले ।**
**अणीयरूपं च तथाऽप्यणीयसां महत्स्वरूपं त्वपि पर्वतेभ्यः ॥२३॥**

इदानीं तत्स्वरूपं तद्दर्शनं तत्फलं च श्लोकद्वयेन निर्दिशति । अवारणीयमिति । यदिदं महाव्रतस्यात्मनि दृश्यते तदवारणीयं ब्रह्म सर्वगतत्वात् । तमसोऽज्ञानात्परस्तात्तद्ब्रह्म कर्मभूतं अंततोऽभ्येति प्रविशति । विनाशकाले प्रलयकाले । जगदिति शेषः । तथाऽणीयसामप्यणीयरूपम् । पर्वतेभ्योऽपि महत्स्वरूपम् । श्रूयते च । अणोरणीयान्महतो महीयानिति ॥ २३॥

**तदेतदह्ना संस्थितं भाति सर्वं तदात्मवित्पश्यति ज्ञानयोगात् ।**
**तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं य एतद्विदुरमृतास्ते भवन्ति ॥ २४॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामुद्योगपर्वणि सनत्सुजातपर्वणि सनत्सुजातवाक्ये चतुश्चत्वारिंशोऽध्यायः ॥

दृश्यन्ते च येऽणुत्वमहत्त्वादयो लोके तदेतत्सर्वं जगदह्नो रूपेण प्रकाशरूपेण ब्रह्मणि संस्थितं तदात्मत्वेनैवावभाति । श्रूयते च । तस्य भासा सर्वमिदं विभातीति । येन सूर्यस्तपति तेजसेद्ध इति च । तद्ब्रह्मात्मवित्पश्यति ज्ञानयोगान्न कर्मयोगेण । तस्मिन्नेव परमात्मनि जगत्सर्वं प्रतिष्ठितं य एतद्विदुरमृतास्ते भवन्ति ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीशंकरभगवतः कृतौ सनत्सुजातभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

---

## पंचमोऽध्यायः ।

सनत्सुजात उवाच—

यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
यद्वै देवा उपासन्ते यस्मादर्को विराजते ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १ ॥

अवारणीयं तमसः परस्तादित्यादिना ब्रह्मणो रूपं निर्धार्य तदात्मवित्पश्यति ज्ञानयोगादिति ज्ञानयोगेनात्मदर्शनमुक्तम् । पुनरपि तस्य स्वरूपं दर्शयित्वा योगिनस्तद्रूपं पश्यन्तीत्याह । यत्तदिति । यद्ब्रह्मात्मवित्पश्यति ज्ञानयोगाद्यज्ज्ञात्वाऽमृता भवन्ति तच्छुक्रं शुद्धमविद्यादिदोषरहितम् । महज्ज्योतिः सर्वावभासकत्वात् । श्रूयते च । तस्य भासा सर्वमिदं विभातीति । दीप्यमानं भ्राजमानं महद्यशः । श्रूयते च । तस्य नाम महद्यश इत्यादि । यद्वै ब्रह्म देवा इंद्रादय उपासते । श्रूयते च । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति । यस्मात्परं ज्योतिषो ब्रह्मणोऽर्कादिर्ज्योतिर्विराजते येन सूर्यस्तपति तेजसेद्ध इति श्रुतेः । एवंभूतं परमात्मानं सनातनं भगवन्तं योगिन एव पश्यन्ति । न पुनर्ज्ञानयोगरहिताः ॥ १ ॥

शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेन वर्धते ।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २ ॥

इदानीं परस्मादेव ब्रह्मणो हिरण्यगर्भाद्युत्पत्तिं दर्शयति । शुक्रादिति । शुक्राच्छुद्धात्पूर्वोक्ताद्ब्रह्मणो हिरण्यगर्भाख्यं ब्रह्म प्रभवत्युत्पद्यते । अथोत्पन्नं ब्रह्म शुक्रेन वर्धते विराडात्मना । तच्छुक्रं शुद्धं ब्रह्म ज्योतिषामादित्यानां मध्ये तैरतप्तमप्रकाशितं सत्तपति स्वयमेव प्रकाशते तेषामपि तापकं प्रकाशकं सत् । योऽन्यानवभास्यः स सर्वावभासकः स्वयमेव भासते । तं भगवन्तं योगिन एव पश्यन्ति ॥ २ ॥

**पूर्णात्पूर्णमुद्धरन्ति पूर्णात्पूर्णं प्रचक्षते ।**
**हरन्ति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३ ॥**

इदानीं पूर्णवाक्यार्थं कथयति । पूर्णादिति । पूर्णाद्देशतः कालतो वस्तुतश्चापरिच्छिन्नात्परमात्मनः पूर्णमेवोद्धरान्ति । जीवरूपेण यत्पूर्णात्पूर्णमुद्धृतं जीवात्मनाऽतः पूर्णादेव समुद्धृतत्वादिमपि जीवस्वरूपं पूर्णमेव प्रचक्षते विद्वांसः । तथा हरन्ति पूर्णाज्जीवात्मनाऽवस्थितात्पूर्णमात्मस्वरूपमात्रं देहेंद्रियाद्यनुप्रविष्टं देहेंद्रियादिभ्यो निष्क्रम्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्तीत्यर्थः । अत उद्धृतं तेनैव मूलभूतेन पूर्णानंदेनावशिष्यते । तेनैव पूर्णानंदेन ब्रह्मणा संयुज्यते । चित्सदानंदाद्वितीयब्रह्मात्मनाऽवशिष्यत इत्यथः । पूर्णमेवावशिष्यत इति वा पाठः । यदा देहेंद्रियादिभ्यो निष्क्रम्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरान्ति तदा पूर्णमेवावशिष्यत इत्यर्थः । तथा च श्रुतिः । पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । अस्यायमर्थः । पूर्णमदस्तच्छब्दवाच्यं जगत्कारणं ब्रह्म पूर्णमिदं त्वंशब्दानिर्दिष्टं प्रत्यगात्मस्वरूपं कथमनयोस्तत्त्वंपदार्थयोः पूर्णत्वमिति चेत्तत्राह । पूर्णादनवच्छिन्नात्पूर्णमेव उदच्यते जीवेश्वररूपेण यस्मात्तस्मादनयोः पूर्णत्वमित्यर्थः । पूर्णस्य तत्त्वात्मनावस्थितस्य पूर्णरूपमादाय तत्त्वंपदार्थयोः शोधनं कृत्वा शोधितपदार्थः सन्नित्यर्थः । पूर्णमेव ब्रह्मावशिष्यते ब्रह्मैव भवतीत्यर्थः । यः पूर्णस्वरूपस्तं परमात्मानं योगिन एव पश्यन्ति ॥ ३ ॥

**यथाकाशेऽवकाशोऽस्ति गंगायां वीचयो यथा ।**
**तद्वच्चराचरं सर्वं ब्रह्मण्युत्पद्य लीयते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ४ ॥**

स्पष्टार्थः श्लोकः ॥ ४ ॥

**आपोऽथाद्भ्यः सलिलं तस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे ॥**

**आदध्रीचीः सविषूचीर्वसानावुभौ बिभर्ति पृथिवीं दिवं च ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५ ॥**

इदानीं द्वा सुपर्णाविति मंत्रार्थं कथयति । आप इति । यस्मात्परमात्मन आपः प्रथमं सृष्टाः । तथा चाह मनुः । अप एव ससर्जादाविति। भूतपंचकोपलक्षणार्थोऽप्शब्दः । अनेन सूक्ष्मसृष्टिरभिहिता । अथानंतरमद्भयः पूर्वमेव सृष्टाभ्यः सलिलं भूतपंचकं भूतपंचकात्मकं स्थूलदेहादिकं सृष्टम् । तस्य सलिलस्य देहात्मनावस्थितस्य मध्येऽन्तारिक्षे हृदयाकाश उभौ जीवपरमात्मानौ देवौ द्योतनस्वभावौ शिश्रियाते वर्तेते । न केवलमंतरिक्षे शिश्रियाते । आदध्रीचीः सविषूचीर्वसानौ । आभिमुख्येन ध्रियमाणा अवस्थितास्ता अंचन्तीत्यादध्रीच्यो दिशः प्राच्याद्याः सविषूचीरूपदिशो विष्वग्गमनात्ताभिः सह वर्तन्त इति सविषूच्यः प्राच्याद्याः सर्वा दिशो वसानावाच्छादयन्तौ । उभौ बिभर्ति पृथिवीं दिवं च । एको जीव आत्मनः स्वाभाविकचित्सदानंदाद्वितीयं ब्रह्मात्मत्वमनवगम्यानात्मनि देहादौ आत्मभावमापन्नः पृथिवीं भूतभौतिकलक्षणं कर्मफलानुरूपं सुखदुःखात्मकं देहादिकं बिभर्ति । अपरो दिवं द्योतनात्मकं स्वात्मरूपं बिभर्ति । श्रूयते च । द्वा सुपर्णाविति । यः स्वात्ममायया स्वात्मानं प्राणाद्यनंतरं कृत्वान्तरमनुप्रविश्याभिपश्यन्नास्ते तं भगवन्तं योगिन एव पश्यन्ति ॥ ५ ॥

**चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः ।**
**केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ६ ॥**

इदानीं ज्ञानिनः स्वात्मावस्थानं दर्शयति । चक्र इति । ध्रुवस्याव्ययकर्मणः परमेश्वरस्य चेश्वरात्मनावस्थितस्य रथस्य शरीरस्य त्रैलोक्यात्मनावस्थितस्य चक्रे चंक्रमणात्मके देहे तिष्ठन्तं केतुमन्तं प्रज्ञावन्तमत एव दिव्यमप्राकृतमजरं जरामरणादिधर्मविवर्जितम् । दिवि द्योतना-

त्मकेऽनुदितानस्तमितज्ञानात्मनावस्थिते पूर्णानंदे ब्रह्मणि वहन्त्यश्वा इंद्रियाणि। एतदुक्तं भवति। यद्यपींद्रियाणि स्वभावतो विषयेष्वेव वर्तन्ते तथापि विज्ञानसारथिना समाकृष्यमाणानि केतुमन्तं पुरुषं दिवि वहन्ति न पराग्विषय इति। तदुक्तं कठवल्लीषु- "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादिना। यत्र परमात्मनि वहन्ति तं भगवन्तं योगिन एव पश्यन्ति॥६

**न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्।**
**मनीषयाथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ ७॥**

नानेन सदृशं किंचिद्विद्यत इत्याह। सादृश्य इति। अस्य परमात्मनो रूपं न सादृश्ये तिष्ठति। नान्येन सादृश्यं वर्तते नानेन सदृशं किंचिद्विद्यत इत्यर्थः। श्रूयते च। न तस्य प्रतिमा अस्ति यस्य नाम महद्यश इति। अत एवोपमाद्यविषयत्वम्। तथा च न चक्षुषा पश्यति कश्चिदप्येनं सर्वान्तरं परमात्मानम्। कथं तर्हि पश्यन्ति। मनीषयाऽध्यवसायात्मिकया बुद्ध्या। मनसा संकल्पविकल्पात्मकेन। हृदा च हृदयेन च साधनभूतेन। हृदयं विना नान्यत्र परमात्मन उपलब्धिः संभवतीति मत्वा हृदा चेत्युक्तम्। अथवा न केवलं मनोबुद्धिमात्रेणापि च हृदा हृदयस्थेन च परमेश्वरेणानुगृहीताः सन्तो य एनं परमात्मानं विदुरयमहमस्मीति तेऽमृता अमरधर्माणो भवन्ति। अथवा हृदा हृदयेन परमात्मना। तथा च हृत्स्थे परमात्मनि हृदयशब्दं निर्वक्ति स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्मात् हृदयमिति। अहरहर्वा एवंवित्स्वर्गं लोकमेतीति श्रुतिः। तथा तदधीनामात्मसिद्धिं दर्शयति यस्य देव इति। एवं यं विदित्वाऽमृता भवन्ति तं योगिन एव पश्यन्ति॥७॥

**द्वादशपूगाः सरितो देवरक्षिताः॥**

**मध्वीशते तदनुविधायिनस्तदा संचरन्ति घोरम्।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ ८॥**

इदानीमिंद्रियाणां विषयेषु प्रवृत्तिरनर्थायेत्याह। द्वादशेति। ये द्वादशपूगाः कर्मज्ञानेंद्रियाण्येकादशं मनो द्वादशी बुद्धिस्तेषामनेकपुरुषापेक्षयैकैकस्य पूगत्वमुच्यते। सरितः सरणशीलाः। देवरक्षिता देवेन परमात्मना रक्षिताः। मधु विषयं मधु। ईशते नियमयन्ति। असांकर्येण स्वं स्वं विषयमनुभवन्तीत्यर्थः। यदैवमनुभवन्ति तदापि तदनुविधायिनो विषयपराः संचरन्ति घोरं संसारम्। तस्मादिंद्रियाणि विषयेभ्य उपसंहृत्य स्वात्मन्येव वशं नयेदित्यर्थः। येन रक्षिता मध्वीशते तं देवं योगिन एव पश्यन्ति॥ ८॥

**तदर्धमासं पिबति संचितं भ्रमरो मधु।**
**ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ ९॥**

किं च दृष्टान्तदार्ष्टान्तिकयोस्तत्राभिधानं तदर्धेति। यथा मधुकरो भ्रमरोऽर्धमासोपार्जितं मध्वर्धमासं पिबत्येवमसावपि भ्रमरो भ्रमणविषयत्वात्संसारी तद्विषयमध्वर्धमाससंचितमर्धमासं पिबति। पूर्वजन्मसंचितं कर्म अन्यस्मिञ्जन्मनि भुंक्ते इति यावत्। भवेदस्यैहिकफलात्कर्मणः फलसिद्धिः कर्मानन्तरभावित्वात्कथं पुनरामुष्मिकफलात्कर्मणः फलसिद्धिः। कर्मणो विनाशित्वादित्याशंक्याह। ईशान इति। भवेदयं दोषो यदि केवलात्कर्मणः फलसिद्धिः स्यादीशानः परमेश्वरः कृतप्रयत्नापेक्षः सन्सर्वेषु प्राणिषु प्राणाग्निहोत्रस्येतरस्य च तत्कर्मानुसारेण हविर्भूतमन्नादिकमकल्पयत्। य ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्तं योगिन एव पश्यन्ति॥ ९॥

**हिरण्यपर्णमश्वत्थमभिपद्य ह्यपक्षकाः।**
**तत्रैव पक्षिणो भूत्वा प्रपतन्ति यथासुखम्।**

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १० ॥

किंच । किमेते मध्वाशिनो बंभ्रम्यमाणाः परिवर्तन्त एव सर्वदा किंवा ज्ञानं लब्ध्वा मुक्ता भवन्तीत्याशंक्याह हिरण्यपर्णमिति । हितं च रमणीयं च भवति तेन हिरण्यमित्याचक्षते । येऽपक्षका ज्ञानपक्षरहिता मध्वाशिनः परिवर्तन्ते हिरण्यपर्णमश्वत्थमभिपद्य । हितं च रमणीयं चेति हितं च रमणीयं च पर्णं यस्याश्वत्थस्य । तथा चाह भगवान्वासुदेवः । छंदांसि यस्य पर्णानीति । हिरण्यपर्णमश्वत्थमभिपद्यारुह्य च वेदसंयोगिब्राह्मणादिदेहं प्राप्येत्यर्थः । तत्रैव ब्राह्मणादिदेहे पक्षिणो ज्ञानिनो भूत्वा तथा च ब्राह्मणाः । ये वै विद्वांसस्ते पक्षिणो येऽविद्वांसस्तेऽपक्षा इति । प्रपतन्ति यथासुखम् । प्रयत्नं कृत्वा मुक्ता भवन्तीत्यर्थः । यं ज्ञात्वा प्रपतन्ति तं योगिन एव पश्यन्ति ॥ १० ॥

अपानं गिरति प्राणं प्राणं गिरति चंद्रमाः ।
आदित्यो गिरते चंद्रमादित्यं गिरते परः ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ११ ॥

इदानीं योगं दर्शयति । अपानमिति । अपानं गिरति प्राण उपसंहरति । प्राणं गिरति चंद्रमा मन उपसंहरति । मनसश्चंद्रमा अधिदैवतं यस्माच्चंद्रशब्देन मन उच्यते । तं चंद्रं मन आदित्यो बुद्धिर्गिरति । बुद्धेश्चाधिदैवतमादित्यः । तमादित्यं बुद्धिं गिरते परः परं ब्रह्म । एतदुक्तं भवति । समाधिवेलायामपानं प्राण उपसंहृत्य प्राणं मनसि मनश्च बुद्धौ बुद्धिं परमात्मन्युपसंहृत्य स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः ॥ ११ ॥

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत्सततमृत्विजं न मृत्युर्नामृतं भवेत् ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२ ॥

इदानीं परस्य जीवात्मनाऽवस्थानं दर्शयति । एकमिति । हन्त्यविद्यां

तत्कार्यमिति हंसः परमात्मा। भूतभौतिकलक्षणात्संसारात्सलिलादुच्चरन्नूर्ध्वं चरन्संसाराद्बहिरेव वर्तमान एकं जीवाख्यं पादं सततं नोत्क्षिपति नोद्धरति नोपसंहरति। रूपं रूपं प्रतिरूपोऽवातिष्ठत इत्यर्थः। श्रूयते कठवल्लीषु। एकस्तथा सर्वभूतान्तरात्मेति। कस्मात्पुनरेकं पादं नोत्क्षिपतीत्यत्राह—जीवाख्यं पादं सततमृत्विजं सततयाजिनं यद्युत्क्षिपेत्स्वमायया स्वमात्मानं प्राणाद्यनंतभेदं कृत्वा। अनुप्रविश्य जीवात्मना यदि नानुतिष्ठेत्तदा न मृत्युर्जननमरणादिलक्षणः संसारो भवेत्। संसारिणो जीवस्याभावात्। तथाऽमृतममृतत्वं मोक्षो न भवेत्। अननुप्रविष्टस्य दर्शनासंभवात्। तथा च तदर्थमेवानुप्रवेशं दर्शयति। रूपं रूपमिति। तथा चाथर्वणी श्रुतिः—एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्। स चेदुत्क्षिपत्यानंदे न मृत्युर्नामृतं भवेदिति। एकं रूपं बहुधा यः करोतीति च। यः पादरूपेण जीवात्मना त्रिपादरूपेण चित्सदानंदाद्वितीयब्रह्मात्मनावस्थितस्तं परमात्मानं योगिन एव पश्यन्ति॥ १२॥

**अंगुष्ठमात्रः पुरुषोऽन्तरात्मा लिंगस्य योगेन संयाति नित्यम्।**
**तमीशमीड्यमनुकल्पमाद्यं पश्यन्ति मूढा न विराजमानम्॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ १३॥**

केन ह्युपाधिना परः पादात्मनाऽवातिष्ठत इत्याशंक्य परस्यैव लिंगोपाधिकं जीवात्मानं दर्शयति। अंगुष्ठमात्रमिति। स एव चित्सदानंदाद्वितीयान्तरात्मा सर्वभूतान्तरात्मा पूर्णः पुरुषः पूर्णः परमात्मा लिंगयोगेन अंगुष्ठपरिमाणः परिच्छिन्नः संयाति संसरति नित्यम्। कस्मात्पुनः कारणाल्लिंगयोगेनांगुष्ठमात्रः संसरति तत्राह। यो लिंगस्य योगेनांगुष्ठमात्रः संसरति तमीशं सर्वस्येशितारम्। ईड्यं स्तुत्यम्। अनुकल्पं सर्वमनुप्रविश्यात्मनाऽनुकल्पयतीत्यनुकल्पम्। आद्यमादौ भवम्। विराजमानं दीप्यमानम्। यस्मान्मूढा अविवेकिनो देहद्वयात्माभिमानिनो न पश्यन्ति तस्मादात्मनो ब्रह्मभावानवगमात्संसरति। यं महात्मानमपश्यन्तः संसरन्ति तं

योगिन एव पश्यन्ति ॥ १३ ॥

**गूहन्ति सर्पा इव गह्वरेषु क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान् ।**
**ते विप्रमुह्यन्ति जना विमूढास्तैर्दत्ता भोगा मोहयन्ते भवाय ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १४ ॥**

इदानीमिंद्रियाणां विषयाणां चानर्थहेतुत्वं दर्शयति । गूहन्तीति । यथा सर्पा गह्वरेभ्यो निष्क्रम्य स्वेन वृत्तेन विषप्रदानेन मर्त्यान्क्षयं नीत्वा गह्वरेषु गूहन्ति स्वात्मानं प्रच्छादयन्त्येवमिंद्रियसर्पाः श्रोत्रादिषु शयनाच्छ्रोत्रादिभ्यो निर्गत्य स्वेन वृत्तेन विषयप्रदानेन मर्त्यान्क्षयं नीत्वा गह्वरेषु गूहन्ति स्वात्मानं प्रच्छादयन्ति । ते विप्रमुह्यन्ति । विषयविषाभिभूता विशेषेण मुह्यन्ति तद्व्यतिरिक्तं न किंचिज्जानन्तीत्यर्थः । तथा च श्रुतिः । यथा प्रियया संपरिष्वक्त इति । तैरिंद्रियैर्दत्ता विषकल्पा भोगा विषया मर्त्यान्मोहयन्ते पुनः पुनर्मोहहेतवो भवन्ति । यदिदं विषयैर्विमोहनं तद्भवाय गर्भजन्मजरामरणसंसाराय भवति । यमीडयमनुकल्पमाद्यमदृष्ट्वा विषयविषान्धा मुह्यन्ति तं योगिन एव पश्यन्ति ॥ १४ ॥

**नात्मानमात्मस्थमवेति मूढः संसारकूपे परिवर्तते यः ।**
**त्यक्त्वात्मरूपं विषयांश्च भुंक्ते स वै जनो गर्दभ एव साक्षात् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १५ ॥**

संमतिमाह । नात्मानमिति । मूढ आत्मानात्मविवेकशून्यः पुमानात्मस्थमात्मनि तिष्ठन्तं न जानाति स एवाहमिति । अतः कारणात्संसारकूपे संसार एव कूपस्तस्मिन्परिवर्तते श्वसूकरादियोनिं प्राप्नोति । अपरोक्षात्मचैतन्यं देहादिदोषरहितं सर्वावभासकं येन सूर्यस्तपति य एव तत्स्वरूपं परित्यज्यानित्यान्विषयान्भोगान्भुंक्ते स जनो न, तर्हि किं साक्षाद्गर्दभ एव । एवंविधं पूर्वोक्तमात्मानं योगिन एव पश्यन्ति ॥ १५ ॥

**असाधना वापि ससाधना वा समानमेतद्दृश्यते मानुषेषु ।**
**समानमेतदमृतस्येतरस्य मुक्तास्तत्र मध्व उत्सं समापुः ॥**

**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १६ ॥**

ज्ञानिनां मोक्षस्वरूपमाह । असाधना वेति । येऽसाधनाः शमदमादिसाधनरहिता ये च शमदमादिसाधनयुक्ताः समाधनास्तेषु समानं साधारणमात्मस्वरूपं दृश्यते मानषेषु । तथा समानममृतस्य मोक्षस्येतरस्य संसारस्य साति वाऽसाति तेषां मध्ये ये मुक्ताः शमदमादिसाधनास्ते तस्मिन्विष्णोः परमे पदे मध्वो मधुन उत्सं समापुः पूर्णानंदं ब्रह्म प्राप्नुवन्तीत्यर्थः । यमुत्सं संपूर्णानंदं मुक्ताः प्राप्नुवन्ति तं योगिन एव पश्यन्ति ॥ १६ ॥

**उभौ लोकौ विद्यया व्याप्य याति तदाहुतं चाहुतमग्निहोत्रम् ।**
**मा ते ब्राह्मी लघुतामादधीत प्रज्ञानं स्यान्नाम धीरा लभन्ते ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १७ ॥**

किं चोभाविति । उभौ लोकाविहपरौ विद्यया ब्रह्मात्मत्वविषयया व्याप्य याति तत्पूर्णानंदं ब्रह्म । यस्मादुभौ लोकौ विद्यया व्याप्य याति तस्मादनाहुतं चाग्निहोत्रमनेनात्मज्ञानेनाभिमुख्येन हुतं भवति । सर्वमग्निहोत्रादिकं कर्म फलं चानेनैव संपादितं भवतीत्यर्थः । यस्मादुभौ लोकौ विद्यया व्याप्य याति यस्मादनाहुतमाग्निहोत्रं चाहुतं भवति तस्मान्मा ते तव ब्राह्मी ब्रह्मविषया विद्या लघुतां मर्त्यभावं कर्मवदादधीत न करोतु । अपि तु प्रज्ञानं तमसः परं परमात्मानमात्मत्वेन संपादयतु । यदा ब्रह्मविद्याव्यापृतस्य परमात्मानमात्मत्वेनावगच्छतः प्रज्ञानमिति नाम स्यात् । ब्रह्मेति नाम भवतीत्यर्थः । तथा च श्रुतिः प्रज्ञानं ब्रह्मेति । तत्प्रज्ञानं ब्रह्म धीरा धीमन्तो लभन्ते तं योगिन एव पश्यन्ति ॥ १७ ॥

**एवंरूपो महानात्मा पावकं पुरुषो गिरन् ।**
**यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १८ ॥**

किंच । एवमिति । य एवंरूपः प्रज्ञानैकरसो ब्रह्मरूपः सन्नास्ते स

आत्मा महान्संपद्यते ब्रह्मैव संपद्यत इत्यर्थः । पावकमाग्निं सर्वोपसंहृतिरूपं कारणं सकारणं काय गिरन्स्वात्मन्युपसंहरन्यो वै तं पुरुषं ज्ञानैकरसं पुरुषं पूर्णं पुरिशयं वेदायमहमस्मीति साक्षाज्जानाति तस्य प्रज्ञानरूपं परमात्मानमात्मत्वेनावच्छत इहास्मिन्नैव देह आत्मा न रिष्यते न विनश्यति । विदुष उत्क्रान्तेरसंभवात् । उत्क्रान्तिनिमित्तत्वाद्विनाशस्य । तथा च श्रुतिः प्रश्नपूर्वकमुत्क्रान्त्यभावं दर्शयति । उदस्मात्प्राणा उत्क्रामन्तीत्याहोस्विन्नेति होवाच याज्ञवल्क्यः । अत्रैव समवलीयन्ते न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्योति य एवं वेदेति । यं विदित्वा न रिष्यति तं योगिन एव पश्यन्ति ॥ १८ ॥

**सदा सदा सत्कृतः स्यान्न मृत्युरमृतं कुतः ।**
**सत्यानृते सत्यसमानबंधिनी सतश्च योनिरसतश्चैकमेव ॥**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १९ ॥**

यस्मात्तद्विज्ञानादेव नात्मनो विनाशस्तस्मात् । सदा सदेति । सदा सदा सर्वदाऽहर्निशं सत्कृतः स्यात् । सच्चिदानंदाद्वितीयब्रह्मात्मनाऽभिमन्यते यः स सदा सत्कृतो भवति । तस्य न मृत्युर्जननमरणलक्षणः संसारो न भवेत् । अमृतं कुतः । मृत्युसापेक्षत्वादमृतस्य तदभावे कुतः प्रसक्तिः।तथा च श्रुतिः मृत्युर्नास्त्यमृतं कुत इति । सत्यानृते च वर्तेते सत्यसमानबंधिनी परमार्थसत्यमेकमधिष्ठानमनुबध्य वर्तेते रज्ज्वामिव सर्पः । कथमेतदवगम्यते सत्यानृते सत्यसमानबंधिनी इति तत्राह । असतश्च लौकिकस्य योनिः कारणं सतश्चैकमेव कारणमेकमेवाद्वितीयं सद्ब्रह्म यस्मात्प्रवदन्ति तस्मात्सत्यानृते स्वकारणभूते सत्यसमानबंधिनी इति । यदात्मतत्त्वज्ञानकारणान्मृत्योर्विनाशो यमनुबध्य सत्यानृते वर्तेते तं योगिन एव पश्यन्ति ॥ १९ ॥

**अंगुष्ठमात्रः पुरुषोऽन्तरात्मा न दृश्यतेऽसौ हृदये निविष्टः ।**
**अजश्चरो दिवारात्रमतंद्रितश्च स तं मत्वा कविरास्ते प्रसन्नः ॥२०॥**

अंगुष्ठमात्र इति । आकाशादि देहान्तं जगत्सृष्ट्वा हृदये निविष्टोऽजश्चराचरात्मा सन्न दृश्यते स्वेनात्मना चित्सदानंदाद्वितीयेन । तमहोरात्रमतंद्रितो भूत्वान्नादिकोशपंचकेभ्यो निष्क्रम्य सर्वान्तरात्मानं मत्वा कविरास्ते प्रसन्नः कृतार्थः सन्नित्यर्थः ॥ २० ॥

**तस्माच्च वायुरायातस्तस्मिंश्च प्रलयस्तथा ।**
**तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः ॥ २१ ॥**
**सर्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २२ ॥**

ब्रह्मणो विश्वोपादानत्वमाह । तस्माच्चेति द्वाभ्याम् । श्लोकौ स्पष्टौ ॥ २१ ॥ २२ ॥

**तत्प्रतिष्ठास्तदमृतं लोकास्तद्ब्रह्म तद्यशः ।**
**भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च ॥ २३ ॥**

स्पष्टोऽर्थः ॥ २३ ॥

**उभौ च देवौ पृथिवीं दिवं च दिशश्च शुक्रं भुवनं बिभर्ति ।**
**यस्माद्दिशः सरितश्च स्रवन्ति यस्मात्समुद्रा विहिता महान्तः**

सर्वमिदं ब्रह्मणः सकाशादुद्भूतं तत्रैव लीयत इत्युक्तं तदेव विवृणोति । उभाविति । देवौ जीवेश्वरौ शुक्रं ब्रह्म कर्तृ बिभर्ति । यस्माद्ब्रह्मणः सकाशाद्दिश उत्पद्यन्ते । एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत इति श्रुतेरर्थः प्रतिपादितः ॥ २४ ॥

**यः सहस्रं सहस्राणां पक्षानाहृत्य संपतेत् ।**
**नान्तं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः ॥ २५ ॥**

इदानीं ब्रह्मणोऽनंतत्वं कथयति यः सहस्रमिति । यः पुरुषः सहस्राण सहस्रं पक्षानाहृत्यात्मनः पक्षान्कृत्वा संपतेत् । अनेकशः कोटिकल्पं स पुरुषो नान्तं गच्छेत्सर्वकारणस्य परमात्मनः । यद्यप्यसौ मनोजवस्तथापि तस्यान्तं न गच्छेत् । यस्मादंतं न गच्छन्ति तस्मादनंतः परमात्मेत्यर्थः । योऽनंतः परमात्मा तं योगिन एव पश्यन्ति ॥ २५ ॥

**अदर्शने तिष्ठति रूपमस्य पश्यन्ति चैनं सुसमिद्धसत्त्वाः ॥**

**हीनो मनीषी मनसाऽपि पश्येद्य एनं विदुरमृतास्ते भवन्ति ॥२६॥**

किं च । अदर्शन इति। अदर्शने दर्शनायोग्यविषये तिष्ठति रूपमस्य परमात्मनः । तथा च श्रुतिः । न संदृशे तिष्ठति रूपमस्येति । पश्यन्ति चैनं सुसमिद्धसत्त्वाः । यद्यपि दर्शनायोग्ये तिष्ठति तथापि परमात्मानं पश्यन्ति । के ते सुसमिद्धसत्त्वाः सुष्ठु समिद्धं सम्यग्दीप्तं सत्त्वमंतःकरणं यज्ञादिभिर्विमलीकरणसंस्कारेण येषां ते सुसमिद्धसत्त्वाः । यस्मादेवं तस्माद्धीनो रागद्वेषादिमलरहितो विशुद्धसत्त्वो मनीषी मनसाऽभिपश्येत् । य एनं परमात्मानं विदुरयमहमस्मीत्यमृता अमरणधर्माणस्ते भवन्ति ॥२६

**इमं यः सर्वभूतेषु आत्मानमनुपश्यति ।**

**अन्यत्रान्यत्र युक्तेषु स किं शोचेत्ततः परम् ॥ २७ ॥**

इमामिति । इमं सर्वान्तरं सर्वभूतेषु सर्वप्राणिष्वात्मानं योऽनुपश्यति । अन्यत्रान्यत्र देहेंद्रियादियुक्तेषु शरीराद्यभिमानिषु । स किं शोचेत्ततः परं सर्वभूतेषु स्वात्मानं पश्यंस्ततः परं किमनुशोचतिः । सर्वभूतस्थमात्मानमनुपश्यन्कृतार्थत्वान्नानुशोचतीत्यर्थः तथा च श्रुतिः तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ २७ ॥

**यथोदपाने महति सर्वतः संप्लुतोदके ।**

**एवं सर्वेषु भूतेषु ब्राह्मणस्य विजानतः ॥२८ ॥**

तदेवाह । यथेति । यथा सर्वतः संप्लुतोदके महति कृतकृत्यस्य पुंसोऽल्प उदपानेऽर्थो नास्त्येवं सर्वेषु भूतेष्वात्मानं पश्यतो ब्राह्मणस्य विजानतः सर्ववेदोदिते कर्मादौ किंचिदपि प्रयोजनं न विद्यत इत्यर्थः । आत्मदर्शनेनैव कृतार्थत्वादिति भावः । तथा चाह भगवान्वासुदेवः । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रय इति ॥ २८ ॥

**अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।**

**आत्माहमस्य सर्वस्य यच्च नास्ति यदस्ति च ॥ २९ ॥**

इदानीमुक्तस्यार्थस्य द्रढिम्ने वामदेवादिवत्स्वानुभवं दर्शयति। अहमेवास्मीति सार्धैस्त्रिभिः। हे धृतराष्ट्राहमेवास्मि वो युष्माकं माता जनयित्री पिताऽप्यहमेव। युष्माकं पुत्रो दुर्योधनादिरहमस्मि। किं बहुना आत्माऽहमस्य सर्वस्य प्राणिजातस्य यच्च नास्ति यदस्ति च तदस्म्यहमेवात्मा ॥ २९ ॥

**पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत।**
**ममैव यूयमात्मस्था न मे यूयं न चाप्यहम् ॥ ३० ॥**

एवं तावदाधिभौतिकं पित्रादिकं दर्शितम्। अथेदानीमाधिदैविकं पित्रादिभावं दर्शयति। पितामह इति। पितामहोऽस्मि स्थविरो वृद्ध इंद्रादेः पितामहोऽस्मि। अनादिसिद्धः परमात्मा सोऽप्यहमेव। य पिता इंद्रादेर्हिरण्यगर्भः सोऽप्यहमेव। तथा मम यूयमात्मस्था एव। यूयं सर्वे परमार्थतो न म आत्मनि व्यवस्थिता न चाप्यहं युष्मासु स्थितः। तथा चाह भगवान्। मत्स्थानि सर्वभूतानीति ॥ ३० ॥

**आत्मैव स्थानं मम जन्म चात्मा ओतप्रोतोऽहमजरप्रतिष्ठः।**
**अजश्चरो दिवारात्रमतंद्रितोऽहं मां विज्ञाय कविरास्ते प्रसन्नः॥ ३१**

आत्मैवेति। यद्यपि न ममात्मनि यूयं व्यवस्थिता न चाप्यहं युष्मासु स्थितस्तथाप्यात्मैव स्थानमात्मैवाश्रयो जन्म चात्माऽस्मादेवात्मनः सर्वमुत्पन्नम्। तथा च श्रुतिः। आत्मन एवेदं सर्वमिति। ओतप्रोतः। अहमेव ओतप्रोतरूपेण व्यवस्थितः। जगदात्मा युष्माकं जनयिता। अजरप्रतिष्ठः। अजरे जरामरणवार्जिते स्वे महिम्नि तिष्ठतीत्यजरप्रतिष्ठः। तथा च श्रुतिः स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति ॥ ३१ ॥

**अणोरणीयान्सुमनाः सर्वभूतेष्ववस्थितः ॥**
**पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ ३२ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामुद्योगपर्वणि धृतराष्ट्रसनत्कुमारसंवादे श्रीसनत्सुजातीये षष्ठोऽध्यायः ॥

अणोरिति । अणोः सूक्ष्मादणयान्सूक्ष्मतरः । सुमनाः शोभनं मनो रागद्वेषादिमात्सर्यशोकमोहादिधर्मवर्जितं केवलं चित्सदानंदाद्वितीयब्रह्मात्माकारं मनो यस्य स सुमनाः । सर्वभूतेषु सर्वप्राणिषु हृदयकमलमध्येऽहमेवावस्थितः सर्वभूतात्मतया । एवं तावत्स्वानुभवो दर्शितः । इदानीं न केवलमस्मदनुभव एवात्र प्रमाणमन्येऽप्येवमेवावगच्छन्तीत्याह पितरमित्यर्धेन । येऽन्ये सनकसनंदनसनातनवामदेवादयो ब्रह्मविदस्तेऽपि पितरं सर्वभूतानां सर्वप्राणिनां पिता जनयिता परमेश्वरो यस्तं पुष्करे हृत्पुंडरीकमध्ये निहितं विदुः परमात्मानमात्मत्वेनावगच्छन्तीत्यर्थः । तथा च श्रुतिस्तेषामनुभवं दर्शयति ! तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति । इति बृहदारण्यके । एतत्साम गायन्नास्त इति तैत्तिरीयके । सामगानेन स्वानुभवो दर्शित आत्मनः कृतार्थत्वद्योतनार्थम् । तथा छांदोग्येपि तद्धास्य विजज्ञाविति । तलवकारे चाहमन्नमित्यादिना विदुषोऽनुभवो दर्शितः ॥ तत्रैते श्लोका भवन्ति । "नित्यशुद्धबुद्धमुक्तस्वभावमीशमात्मनो भावयन्षडिंद्रियाणि संनियम्य निश्चलः । अस्तिवस्तुचिद्घनं जगत्प्रसूतिकारणमनश्वरं च तद्भवं जगत्तमोनुदं च यत् । तत्पदैकवाचकं सदामृतं निरंजनं चित्तवृत्तिदृक्सुखं तदस्म्यहं तदस्म्यहमिति" ॥ ३२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीशंकरभगवतः कृतौ सनत्सुजातभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

———

# विष्णुसहस्रनामभाष्यम् ।



सच्चिदानंदरूपाय कृष्णायाक्लिष्टकारिणे ॥
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥
यस्य स्मरणमात्रेण जन्मसंसारबंधनात् ॥
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ २ ॥
कृष्णद्वैपायनं व्यासं सर्वलोकहिते रतम् ॥
वेदाब्जभास्करं वन्दे शमादिनिलयं मुनिम् ॥ ३ ॥
सहस्रमूर्तेः पुरुषोत्तमस्य सहस्रनेत्राननपादबाहोः ॥
सहस्रनाम्नां स्तवनं प्रशस्तं निरुच्यते जन्मजरादिशान्त्यै ॥ ४ ॥

**वैशंपायन उवाच—**

**श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।**
**युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

वैशंपायनो जनमेजयमुवाच श्रुत्वेति । धर्मानभ्युदयनिःश्रेयसोत्पत्तिहेतुभूतान्वेदलक्षणान् । अशेषेण कात्स्न्र्येन । पावनानि पापक्षयकराणि । च सर्वशः सर्वप्रकारैः । श्रुत्वा । युधिष्ठिरो धर्मपुत्रः शांतनवं शंतनुसुतं भीष्मं । सकलपुरुषार्थसाधनं अल्पप्रयासं अनल्पफलं अनुक्तमिति कृत्वा पुनर्भूय एवाभ्यभाषत प्रश्नं कृतवान् ॥ १ ॥

**युधिष्ठिर उवाच—**

**किमेकं दैवतं लोके किं वाप्येकं परायणम् ।**
**स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥**

किमिति । किमेकं दैवतं देव इत्यर्थः स्वार्थे तद्धितविधानात् लोके लोकनहेतुभूते समस्तविद्यास्थाने उक्तं 'यदाज्ञया प्रवर्तन्ते सर्वे' इति प्रथमः प्रश्नः । किं वाप्येकं परायणं अस्मिँल्लोके एकं परायणं किं परमं प्राप्तव्यं स्थानं यस्मिन्निरीक्षिते 'भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसं-

शयाः । क्षीयन्ते चास्य कर्माणि यस्मिन् दृष्टे परावरे । यस्य विज्ञानमात्रेणानंदलक्षणो मोक्षः प्राप्यते । यद्विद्वान्न बिभेति कुतश्च नेति । यत्प्रविष्टस्य न विद्यते पुनर्भवः । यस्य च वेदनात्तदेव भवति । यद्विहायापरं पंथा नृणां नास्ति ' तदुक्तमेकं परायणं लोके यत्तत् किमिति द्वितीयः प्रश्नः । कं कतमं देवं स्तुवन्तो गुणसंकीर्तनं कुर्वन्तः कं कतमं देवमर्चन्तः बाह्यमाभ्यंतरं चार्चनं बहुविधं कुर्वन्तो मानवा मनुसुताः शुभं कल्याणं स्वर्गादिफलं प्राप्नुयुर्लभेयुरिति पुनः प्रश्नद्वयम् ॥ २ ॥

**को धर्मः सर्वधर्माणां भवतः परमो मतः ।**
**किं जपन्मुच्यते जन्तुर्जन्मसंसारबंधनात् ॥ ३ ॥**

को धर्मः पूर्वोक्तलक्षणः सर्वेषां धर्माणां मध्ये भवतः परमः प्रकृष्टो मतोऽभिप्रेत इति पंचमः प्रश्नः । किं जपन्नित्यादि किं जप्यं जपन् उच्चोपांशुमानसलक्षणं जपं कुर्वन् जंतुर्जननधर्मा । अनेन जंतुशब्देन च जपार्चनस्तवनादिषु यथायोग्यं सर्वप्राणिनामधिकारं सूचयति । जन्मसंसारबंधनात् जन्माज्ञानविजृंभितानामविद्याकार्याणामुपलक्षणं संसारोऽविद्या ताभ्यां जन्मसंसाराभ्यां यद्बंधणं तस्मान्मुच्यते मुक्तो भवतीति षष्ठः प्रश्नः। जन्मसंसारबंधनादितीदमुपलक्षणं इतरेषां फलानामप्येतद्ग्रहणं मोक्षस्य प्राधान्यख्यापनार्थम् ॥ ३ ॥

**भीष्म उवाच—**

**जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।**
**स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥**

भीष्म उत्तरमुवाच । सर्वेषां शत्रूणां भयहेतुर्भीष्मः मोक्षधर्मादीनां प्रवक्ता सर्वज्ञः । किमेकमिति षट्प्रश्नाः तत्र पाश्चात्योऽनंतरो जप्यविशेषः षष्ठः प्रश्नोऽनेन श्लोकेन परिहीयते जगत्प्रभुमिति । जगत् स्थावरजंगमात्मकं तस्य प्रभुं स्वामिनं । देवदेवं देवानां देवं । अनंतं देशतः कालतो वस्तुतश्चापरिच्छिन्नं । पुरुषोत्तमं क्षराक्षराभ्यां कार्यकारणाभ्यां उत्कृष्टं ।

नामसहस्रेण नाम्नां सहस्रेण । स्तुवन् गुणान्संकीर्तयन् । सततोत्थितो निरंतरमुद्युक्तः पूर्णत्वात् पुरिशयनाद्वा पुरुषः स च सर्वदुःखातिगो भवेत् इति सर्वत्र संबध्यते ॥ ४ ॥

**तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।**
**ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥**

उत्तरेण श्लोकेन चतुर्थः प्रश्नः समाधीयते । तमेव चार्चयन् बाह्यार्चनं कुर्वन् । नित्यं सर्वेषु कालेषु । भक्तिर्भजनं तात्पर्येण तया भक्त्या । पुरुषमव्ययं विनाशक्रियारहितं । ध्यायन्नाभ्यंतरार्चनं कुर्वन् । स्तुवन् पूर्वोक्तेन । नमस्यन्नमस्कारं कुर्वन् पूजाशेषभूतमुभयं स्तुतिनमस्कारलक्षणं कुर्वन् । यजमानः पूजकः फलभोक्ता । अथवाऽर्चयन्नित्यनेनोभयविधमर्चनमुच्यते । ध्यायंस्तुवन्नमस्यन्निति मानसं वाचिकं कायिकं चोच्यते ॥ ५ ॥

**अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ॥**
**लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥**

तृतीयं प्रश्नं परिहरति उत्तरैस्त्रिभिः पादैः । अनादिनिधनं षड्भावविकारवर्जितं । विष्णुं व्यापनशीलं । सर्वं लोक्यते इति लोको दृश्यवर्गः तस्य नियंतॄणां ब्रह्मादीनामपीश्वरत्वात् सर्वलोकमहेश्वरः तं । लोकं दृश्यवर्गं स्वाभाविकेन बोधेन साक्षात्पश्यतीति लोकाध्यक्षं । तं नित्यं निरंतरं स्तुवन् सर्वदुःखातिगो भवेदिति त्रयाणां स्तवनार्चनजपानां साधारणं फलवचनं । सर्वाण्याध्यात्मिकादीनि दुःखान्यतीत्य गच्छतीति सर्वदुःखातिगः । भवेत् स्यात् ॥ ६ ॥

**ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ॥**
**लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥**

तमेव स्तुत्यं विशिनष्टि । ब्रह्मण्यं ब्रह्मणे स्रष्ट्रे ब्राह्मणाय तपसे श्रुतये हितं । सर्वान् धर्मान् जानातीति सर्वधर्मज्ञः तं । लोकानां प्राणिनां । कीर्तिर्यशांसि स्वशक्त्याऽनुप्रवेशेन वर्धयतीति तम् । लोकैर्नाथ्यते

लोकानुपतापयते शास्ते लोकानामीष्ट इति वा लोकनाथः तं महत् । ब्रह्म विश्वोत्कर्षेण वर्तमानत्वात् महद्भूतं परमार्थसत्यं । सर्वभूतानां भवः संसारो यत्सकाशादुद्भवतीति सर्वभूतभवोद्भवस्तम् ॥ ७ ॥

**एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ॥**
**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥**

पंचमं प्रश्नं परिहीयते एष इति । सर्वेषां वेदलक्षणानां धर्माणामेष वक्ष्यमाणो धर्मोऽधिकतम इति मे मम मतोऽभिप्रेतः । यद्भक्त्या तात्पर्येण पुंडरीकाक्षं हृदयपुंडरीके प्रकाशमानं वासुदेवं स्तवैर्गुणसंकीर्तनलक्षणैः स्तुतिभिः सदाऽर्चेत् सत्कारपूर्वकमर्चनं करोति नरो मनुष्य इति यत् एष धर्म इति संबंधः । अस्य स्तुतिलक्षणस्यार्चनस्याधिक्ये किं कारणमुच्यते हिंसादिपुरुषान्तरद्रव्यदेशकालादिनियमानपेक्षत्वाच्चाधिक्ये कारणम् 'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्' इति विष्णुपुराणे । 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति मानवं वचनम् । एतत्सर्वमभिप्रेत्य 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इति उक्तम् ॥ ८ ॥

**परमं यो महत्तेजः परमं यो महत्तपः ॥**
**परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥**

द्वितीयं प्रश्नं समाधत्ते परममिति । परमं प्रकृष्टं महद्बृहत्तेजश्चैतन्यलक्षणं सर्वावभासकं श्रुतिश्च 'येन सूर्यस्तपति तेजसेद्धस्तद्देवा ज्योतिषां ज्योतिर्न तत्र सूर्यो भाति न चंद्रतारकम्' इत्यादिश्रुतेः 'यदादित्यगतं तेजः' इत्यादिस्मृतेश्च । परमं तपत इत्याज्ञापयतीति तपः 'य इमं लोकं परमं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्यंतर्यामिब्राह्मणे सर्वनियन्तृत्वं श्रूयते 'भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचमः' इत्यादि तैत्तिरीयके । तपतीष्ट

इति वा तपः तस्यैश्वर्यमनवच्छिन्नमति महत्त्वं एष सर्वेश्वरः ' इत्यादिश्रुतेः । परमं सत्यादिलक्षणं ब्रह्म महनीतया महत् । परमं प्रकृष्टं परायणं पुनरावृत्तिशंकारहितम् । परमग्रहणात् सर्वत्र परं तेज आदित्यादिकं व्यावर्त्यते सर्वत्र यो देव इति विशेष्यते च । यो देवः परमं तेजः परमं तपः परमं ब्रह्म परमं परायणं स एकं सर्वभूतानां परायणमिति वाक्यार्थः ॥९॥

**पवित्राणां पवित्रं यो मंगलानां च मंगलम् ॥**
**दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥**

इदानीं प्रथमप्रश्नस्योत्तरमाह । पवित्राणां पवित्रं पावनानां तीर्थादीनां परमं पवित्रं । परमस्तु पुमान् ध्यातो दृष्टः कीर्तितश्च स्तुतः संपूजितः स्मृतः ॥ प्रणतः पाप्मनः सर्वानुन्मूलयति' इति संसारबंधहेतुभूतं पुण्यापुण्यात्मकं कर्म तत्कारणं चाज्ञानं सर्वं नाशयन् स्वयाथात्म्यज्ञानेनेति वा पवित्राणां पवित्रं । ' रूपमारोग्यमर्थांश्च भोगांश्चैवानुषंगिकान् । ददाति ध्यायतो नित्यमपवर्गप्रदो हरिः । चिंत्यमानः समस्तानां क्लेशानां हानिदो हरिः । समुत्सृज्याखिलं चान्यं सोऽच्युतः किं न चिंत्यते । ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । प्रायश्चित्तं हि सर्वस्य दुष्कृतस्येति वै श्रुतिः । अतिपातकयुक्तोऽपि ध्यायन्निमिषमच्युतम । भूयस्तपस्वी भवति पंक्तिपावनपावनः । आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा । हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः । ओमित्येवं सदा विप्राः पठत ध्यात केशवम् । भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः । अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव । ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ।

ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीतनात् । तत्सर्वं विलयं याति तोयस्थं लवणं यथा । यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिंतने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोपि लोकोऽल्पकः । मुक्तिं चेतसि यत्स्थितोऽमलऽधियां पुंसां ददात्यव्ययः । किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥ शमायालं जलं वह्नेस्तमसो भास्करोदयः । शान्तिकाले ह्यघौघस्य नामसंकीर्तनं हरेः । हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ स्तुत्वा विष्णुं वासुदेवं विपापो जायते नरः । विष्णोः संपूजनान्नित्यं सर्वपापं प्रणश्यति ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् । येषां हृदिस्थो भगवान् मंगलायतनं हरिः । गंगास्नानसहस्रेषु पुष्करस्नानकोटिषु । यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् । कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् । प्रयाति विलयं सद्यः सकृद्यत्रापि संस्मृते । सकृत्स्मृतोऽपि गोविंदो नृणां जन्मशतैः कृतम् । पापराशिं दहत्याशु तूलराशिमिवानलः । यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् । ईश्वरो देवीं प्रत्याह मुक्तिकारणं "यावज्जीवं प्रणवमथवा वर्तयेद्रौद्रियं वा याजुर्वेद्यं वसतिमथवा वारणस्यां विदध्यात् । हित्वा लज्जां कलिमलकुलच्छेदनानीरयेद्वा विष्णोर्नामान्यनिशमथवा मुक्तिरेषा चतुर्धा । जनार्दनं भूतपतिं जगद्गुरुं स्मरन्मनुष्यः सततं महामुने । दुःखानि सर्वाण्यपहन्ति साधयत्यशेषकार्याणि च यान्यभीप्सते । कलावत्रापि दोषाढ्ये विषयासक्तमानसः । कृत्वापि सकलं पापं गोविंदं संस्मरञ्छुचिः । वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेंद्रत्वादिकं फलम् । लोकत्रयाधिपतिमप्रतिमप्रभावमीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् । जन्मान्तरप्रलयकल्पसहस्रजातमाशु प्रणाशमुपयाति नरस्य पापम् ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी

पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविंदं न तेषां विद्यते भयम् । शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये । संसारस्थूलबंधानामुद्वेजनकरो हि सः । इत्यादिश्रुतिस्मृतीतिहासपुराणेभ्यः मंगलं सुखं तत्साधनं तत्र ज्ञापकं च तेषामपि परमानंदलक्षणं परं मंगलमिति मंगलानां च मंगलं ॥ दैवतं देवतानां च देवानां देवः द्योतनादिभिः समुत्कर्षेण वर्तमानत्वात् । भूतानां योऽव्ययः व्ययरहितः पिता जनको यो देवः स एकं दैवतं लोक इति वाक्यार्थः ॥ 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्वेताश्वतराणां मंत्रोपनिषदि । " सोऽयं देवत ऐक्षत एकमेवाद्वितीयं" इति छांदोग्ये । हिरण्यगर्भ इत्यष्टौ मंत्राः । कस्मै देवायेत्यत्र एकारलोपेनैकदैवतप्रतिपादकस्तैत्तिरीयके ' अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बहिश्च । वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्व भूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च । एकोत्तरः सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् । सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते सर्वदुःखेन बाह्यः । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ' इति काठके । 'ब्रह्म वा इदमग्र आसीदेकमेव नान्यदतोऽस्ति द्रष्टा' इत्यादिबृहदारण्यके । 'अनेजदेकं मनसो जवीयः तत्र को मोहः क शोकः एकत्वमनुपश्यतः' इति ईशावास्ये । 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् । सर्वेषां भूतानामंतरः पुरुषः स म आत्मेति विद्यात् । एकं सद्विप्रा बहुधा वदन्ति एकं सन्तं बहुधा

कल्पयन्ति । द्यावाभूमी जनयन्देव एकः एको दधार भुवनानि विश्वा’ इति ऋग्वेदे ।‘सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः’ ‘विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि’ ‘अहमात्मा गुडाकेश सर्वभूताशयस्थितः’ ‘यदा भूतपृथग्भावमेकस्थमनुपश्यति’ ‘यथा प्रकाशत्येकः’ ‘सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज’ इति गीतोपनिषत्सु । भवति मनोर्माहात्म्यख्यापनी श्रुतिः ‘एतद्वै किंच मनुरवदत्तद्भेषजं’ इति । मनुना चोक्तं ‘सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति’ इति । सृष्टिस्थित्यंतकरणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः । तस्मान्न विज्ञानमृतेऽस्ति किंचित्कचित्कदाचिद्द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेदाद्विभिन्नचित्तैर्बहुधाभ्युपेतम् । ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसंगम् । एकं सदेकः परमः परेशः स वासुदेवो न यतोऽस्ति किंचित् । यदा समस्तदेहेषु पुमानेको व्यवस्थितः । तदा हि को भवान्कोऽहमित्येतद्विफलं वचः। सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तदृष्टिभिरात्मापि तथैकः सन्पृथक् पृथक् । एकः समस्तं यदिहास्ति किंचित्तदुच्यते नास्ति परं ततोऽन्यत् । सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः’। यमेनोक्तं– ‘सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः । इति मतिरचला भवत्यनंते हृदयगते व्रज तान् विहाय दूरात् । यथाह वसुधा सर्वं सत्यमेव दिवौकसः । अहं भवो भवन्तश्च सर्वं नारायणात्मकं । विभूतयस्तु यास्तस्य तासामेव परस्परम् । आधिक्यं न्यूनता बाध्याबाधत्कवेन वर्तते ।भवानहं च विश्वात्मन्नेक एव हि कारणम्। जगतोऽस्य जगत्यर्थेऽभेदेनावां व्यवस्थितौ । त्वया यदभयं दत्तं तद्दत्तमखिलं मया । मत्तो विभिन्नमात्मानं द्रष्टुं नार्हसि शंकर । योहं स त्वं जगच्चेदं सदेवासुरमानुषम् । अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः’ । इति विष्णुपुराणे । ‘विष्णोरन्यं तु पश्यन्ति येऽमी ब्रह्मणमेव

च । कुतर्कमतयो मूढाः पच्यन्ते नरकेऽशुचौ । ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः । ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्ववम्' इति भविष्योत्तरपुराणे महेश्वरवचनम् । च हरिवंशे कैलासयात्रायां महेश्वरवचनम् । । " आदिस्त्वं सर्वभावानां मध्यमंतस्तथा भवान् । त्वत्तः सर्वमभूद्विश्वं त्वयि सर्वं प्रलीयते । अहं त्वं सर्वगो देवस्त्वमेवाहं जनार्दन । आवयोरंतरं नास्ति शब्दैरर्थैर्जगत्त्रये । नामानि तव गोविं यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा । त्वदुपासा जगन्नाथ सैवास्तु मम गोपते । यश्च त्वां द्विषते देव स मां द्वेष्टि न संशयः । त्वद्विस्तारो यतो देवा अहं भूतपतिस्ततः । न तदस्ति विभो देव यत्ते विरहितं क्वचित् । यदासीद्वर्तते यच्च यच्च भावि जगत्पते । सर्वं त्वं देव देवेश विना किंचित्त्वया नहि' इत्यादिवाक्यान्येकत्वप्रतिपादकानि ॥१०॥

**यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।**
**यस्मिश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥**

यदेकं दैवतं प्रस्तुतं तस्योपलक्षणमुच्यते । यतो यस्मात्सर्वाणि भूतानि संभवन्ति उद्भवन्ति च आदियुगागमे कल्पादौ । यस्मिंश्च प्रलयं विलयं यान्ति विनाशं गच्छन्ति पुनर्भूय एवेत्यवधारणार्थः नान्यस्मिन्नित्यर्थः । युगक्षये महाप्रलये । चकारान्मध्येपि यस्मिंस्तिष्ठन्ति " यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति " इति श्रुतेः ॥ ११ ॥

**तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।**
**विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥**

तस्यैवंलक्षितस्यैकदैवतस्य लोकप्रधानस्य लोकहेतुभिः प्रतिपाद्यस्य जगन्नाथस्य । भूपते महीपाल । विष्णोर्व्यापनशीलस्य नाम्नां सहस्रं । अशुभकर्मकृतं पापं संसारलक्षणभयं चापहन्तीति पापभयापहं मे मत्तः शृणु एकाग्रमना भूत्वाऽवधारयेत्यर्थः ॥ १२ ॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥

'एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम । नाम्नां बहुत्वं लोकानामुपकारकरं शृणु । निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात् । विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम । यच्छक्तिमन्नाम यस्य तत्तस्मिन्नेव वस्तुनि । साधकं पुरुषव्याघ्र सौम्ये क्रूरेषु वस्तुषु' इति विष्णुधर्मवचनाद्यद्यपि परस्य ब्रह्मणः षष्ठी गुणक्रियाजातिरूढानां शब्दप्रवृत्तिहेतून निमित्तशक्त्यादीन् चासंभवस्तथापि सगुणे ब्रह्मणि सर्वकारणे च सर्वात्मत्वात्तेषां शब्दप्रवृत्तिहेतूनां संभवात् सर्वे शब्दाः परस्मिन्पुंसि वर्तन्ते । तत्र यानि नामानि गौणानि गुणयोगात्प्रवृत्तानि तेषु यानि विख्यातानि प्रसिद्धानि ऋषिभिर्मन्त्रदृग्भिश्च परिगीतानि तानि भूतये पुरुषार्थचतुष्टयसिद्ध्यै । महांश्चासावात्मेति महात्मा "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्ति संततो भावस्तस्मादात्मेति कीर्त्यते' इति वचनादयमेव महात्मा तस्याचिन्त्यप्रभावस्य तानि वक्ष्यामि । भूतये पुरुषार्थचतुष्टयार्थिनामिति ॥ १३ ॥

---

ॐ ॥ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १४ ॥

अत्र नामसहस्रे आदित्यादिशब्दानामर्थान्तरे प्रसिद्धानामादित्याद्यर्थान् । तद्विभूतित्वेन तदभेदात् तस्यैव स्तुतिरिति प्रसिद्धार्थग्रहणेऽपि स्तुतित्वं " भूतात्मा चेंद्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेकः पंचधा स्थितः । ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च । स एव सर्वो भुवनैकरूपो यदस्ति यन्नास्ति च विप्रवर्य' इति विष्णुपुराणे । 'आदित्यानामहं विष्णुः' इत्यारभ्य 'अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'

इति श्रीगीतोपनिषत्सु भगवतैवोक्तम् । 'ब्रह्मैवेदं विश्वमिदं वरिष्ठं' 'पुरुष एवेदं सर्वम्' इति श्रुतिभ्यः विष्ण्वादिशब्दानां पुनरुक्तानामपि वृत्तिभेदादपौनरुक्त्यम् । श्रीपतिर्माधव इत्यादीनां वृत्त्यैकत्वेपि शब्दभेदान्न पौनरुक्त्यम् । विशेष्यैक्ये अर्थैक्ये पौनरुक्त्यं तु न दोषाय नाम्नां सहस्रस्य किमेकं दैवतमिति पृष्टैकदैवतविषयत्वात् । यत्र पुंल्लिगशब्दप्रयोगस्तत्र विष्णुर्विशेष्यो यत्र स्त्रीलिंगशब्दप्रयोगस्तत्र देवता विशिष्यते यत्र नपुंसकप्रयोगस्तत्र ब्रह्म विशेषणीयम् । यतः सर्वाणि भूतानीत्यारभ्य जगदुत्पत्तिस्थितिलयकारणस्य ब्रह्मण एकदैवतत्वेनाभिहितत्वादादावुभयविधं ब्रह्म विश्वशब्देनोच्यते विश्वमिति । विश्वस्य जगतः कारणत्वेन विश्वमित्युच्यते ब्रह्म आदौ तु विश्वमिति कार्यशब्देन कारणग्रहणम् । कार्यभूतं विरिंच्यादिनामभिरुपपन्ना स्तुतिर्विष्णोरिति दर्शयितुम् । यद्वा परस्मात्पुरुषान्न भिन्नमिदं विश्वं परमार्थतस्तेन विश्वमित्यभिधीयते ब्रह्म । 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । पुरुष एवेदं विश्वं' इति श्रुतेः । न तद्भिन्नं किंचित्परमार्थतः सदस्ति । अथवा विशतीति विश्वं ब्रह्म 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । किंच संहृतौ विशन्ति सर्वाणि भूतान्यस्मिन्निति विश्वं ब्रह्म 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः । तथाहि सकलं जगत्कार्यभूतमेष विशत्यत्र चाखिलं विशतीत्युभयथापि विश्वं ब्रह्म 'तपो ब्रह्म परं मतं' इति श्रुतेः । नाचिकेतसा पृष्टे मृत्युरुवाच । अन्यत्र धर्मादन्यत्राधर्मादित्यारभ्य 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि । ओमित्येतत् । एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । ओमिति ब्रह्म ओमितीदं सर्वं । तद्यथा शंकुना सर्वाणि पर्णानि संतृण्णानि एवमोंकारेण सर्वा वाक् संतृण्णा एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेण ओँइत्येतेन च अक्षरेण परं पुरुषमभिध्यायीत ओँकार एवेदं सर्वं ओँइत्ये-

तदक्षरमिदं सर्वम्' इत्युपक्रम्य 'प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतम्। अपूर्वोऽनंतरोऽबाह्यो न परः प्रणवोऽव्ययः। सर्वस्य प्रणवो ह्यादिर्मध्यमंतस्तथैव च। एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनंतरम्। प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम्। सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति। अमात्रोऽनंतमात्रश्च द्वैतस्योपशमः शिवः। ॐकारो विदितो येन स मुनिर्नेतरो जनः' इत्यंता मांडूक्योपनिषत्। 'ॐतद्ब्रह्म ॐतद्वायुः ॐतदात्मा ॐतत्सत्यं ॐतत्सर्वं ॐतत्पुरोर्नमः' इत्यादिश्रुतिभिः। ओमित्येकाक्षरं ब्रह्म' 'रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः। प्रणवः सर्ववेदेषु' 'गिरामस्म्येकमक्षरम्'। आद्यं च त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता। एकाक्षरं परं ब्रह्म प्राणायामः परं तपः। प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः। वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत्' इत्यादिस्मृतेश्च विश्वशब्देनोंकारो व्यभिधीयते। वाच्यवाचकयोरत्यंतभेदाभावात् विश्वमित्योंकार एव ब्रह्मेत्यर्थः। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शांत उपासीत' इति। एतदुक्तं भवति। यस्मात्सर्वमिदं विकारजातं ब्रह्म तज्जत्वात्तल्लयत्वात्तदन्यत्वाच्च। न च सर्वस्यैकात्मत्वे रागादयः संभवन्ति। 'तस्माच्छान्त उपासीत' इति श्रुतेः। 'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्। आत्मनः प्रतिकूलानि परेषां न समाचरेत्। आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन। सुखं वा यदि वा दुःखं स योगी परमो मतः। निर्गुणः परमात्मात्र देहं व्याप्य व्यवस्थितः॥ तमहं ज्ञानविज्ञेयं नावमन्ये न लंघये। यद्यागमैर्न विन्देयं तमहं भूतभावनम्। क्रमेयं त्वां गिरिं चेमं हनूमानिव सागरम्। बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः। शोच्यान्यहोऽतिमोहेन व्याप्तानीति मनीषिणाम्॥ एते भिन्नदृशां दैत्या विकल्पाः कथिता मया॥ कृत्वाऽभ्युपगमं तत्र संक्षेपः श्रूयतां मम। विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत्। द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः। समुत्सृज्यासुरं भावं तस्माद्यूयं तथा वयम्। तथा यत्नं

करिष्यामो यथा प्राप्स्याम निर्वृतिम् । सर्वत्र दैत्याः समतामुपेत समत्व-मारावधनमच्युतस्य । न मंत्रादिकृतस्तात न च नैसर्गिको मम । प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि । अन्येषां यो न पापानि चिंतयत्या-त्मनो यथा । तस्य पापागमस्तात हेत्वभावान्न विद्यते । कर्मणा मनसा वाचा परपीडां करोति यः । यद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम्। सोऽहं न पापमिच्छामि न करोमि वदामि वा । चिंतयन्सर्वभूतस्थ-मात्मन्यपि च केशवम् ॥ शारीरं मानसं वाग्जं दैवं भूतभवं तथा ॥ सर्वत्र समचित्तस्य तस्य मे जायते कुतः ॥ एवं सर्वेषु भूतेषु भक्तिरव्यभि-चारिणी ॥ कर्तव्या पंडितैर्ज्ञात्वा सर्वभूतमयो हरिः ॥ सामं चोपप्रदानं च भेददंडौ तथा परौ ॥ उपायाः कथिता ह्येते मित्रादीनां च साधने ॥ तानेवाहं न पश्यामि मित्रादींस्तात मा क्रुधः ॥ साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ॥ सर्वभूतात्मके तात जगन्नाथे जगन्मये ॥ पर-मात्मनि गोविंदे मित्रामित्रकथा कुतः ॥ जडानामविवेकानामशूराणामपि प्रभो ॥ भाग्यभोग्यानि राज्यानि सन्त्यनीतिमतामपि ॥ तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ॥ यतितव्यं समत्वे च निर्वाणमपि चेच्छता ॥ देवा मनुष्याः पशवः पक्षिकीटसरीसृपाः ॥ रूपमेतदनंतस्य विष्णोर्भिन्नमिव स्थितम् ॥ एतद्विजानता सर्वं जगत्स्थावरजंगमम् ॥ द्रष्टव्यमात्मवद्विष्णु-र्यतोऽयं विश्वरूपधृक् ॥ एवं ज्ञाते स भगवाननादिपरमेश्वरः ॥ प्रसीद-त्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ॥ शंकरहिरण्यगर्भौ हरेर्भिन्नाविति न मन्तव्यम् ॥ विष्णोरन्यं तु पश्यन्ति ये मामित्यादि पूर्ववत् । 'बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इत्यादिवचनैश्च ॥ हिंसादिरहितेन स्तुतिनमस्कारादि कर्तव्यमिति दर्श-यितुं विश्वशब्देन ब्रह्माभिधीयत इति वा 'मत्कर्मकृन्मत्परमो मद्भक्तः संग-वर्जितः ॥ निर्वैरः सर्वभूतेषु यः स मामेति पांडव' इति ॥ 'न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ॥ न हरति न च हन्ति

किंचिदुच्चैः शुद्धमनसं तमवेहि विष्णुभक्तम् ॥ विमलमतिरमत्सरः प्रशान्तः शुचि चरतोऽखिलसत्त्वमित्रभूतः ॥ प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः ॥ इति मतिरचला भवत्यनंते हृदयगते व्रज तान्विहाय दूरात् ॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ॥ अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ' इत्यादिवचनैर्वैष्णवलक्षणस्यैवंप्रकारत्वाच्च हिंसादिरहितेन विष्णोः स्तुतिनमस्कारादि कर्तव्यमिति ॥ ' श्रद्धया देयं अश्रद्धयाऽदेयं श्रद्धयाग्निः समिध्यते' इत्यादि श्रुतेः । 'श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ' ॥ ' इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ' ॥ ' अश्रोत्रियं श्राद्धमधीतमव्रतमदक्षिणं यज्ञमनृत्विजाहुतम् ॥ अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते तव दैत्यसत्तम ॥ पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा ॥ क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणाम् । अश्रद्धया च यद्दानं यजतां ददतां तथा ॥ तत्सर्वं तव दैत्येंद्र मत्प्रसादाद्भविष्यति ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥ असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ' इत्यादिस्मृतिभिश्च श्रद्धया स्तुतिनमस्कारादि कर्तव्यमश्रद्धया न कर्तव्यम् ॥ ' ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ' इतिभगवद्वचनात् स्तुतिनमस्कारादिकं कर्म सात्त्विकं त्रिगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति । आत्मानं विष्णुं ध्यात्वाऽर्चनस्तुतिनमस्कारादि कर्तव्यम् । 'नाऽविष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् ॥ नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात्' इति महाभारते कर्मकांडे । 'सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ ॥ सर्वकामानवाप्नोति समाराध्य जगद्गुरुम् ॥ तन्मयत्वेन गोविंदमित्येतद्दाल्भ्य नान्यथा ॥ तन्मयो वांछितान्कामान्यदवाप्नोति मानवः ' इति विष्णुधर्मे । ' सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥ सर्वथा वर्तमानोऽपि स योगी मयि वर्तते' इति भगवद्गीतासु ॥

अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ॥ ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वंद्वगदा भवन्ति ' इति विष्णुपुराणे । ' गुरोर्यत्र परीवादो निंदा वापि प्रवर्तते ॥ कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥ तस्माद्ब्रह्मैवाचार्यस्वरूपेणावतिष्ठति'इति व्यासस्मृतेः। "वरं हुतवहज्वालापुंजस्यान्तर्व्यवस्थितिः ॥ न शौरिचिंताविमुखजनसंवासवैशसम् " इति कात्यायनवचनात् यत्र देशे, वासुदेवनिंदा तत्र वासो न कर्तव्यः । एतदुक्तं भवति । ' यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । ' इति श्वेताश्वतरोपनिषन्मंत्रवर्णात् हरौ गुरौ च परा भक्तिः कार्येति । अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ॥ पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् ॥ तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥ कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ॥ प्रयाति विलयं सद्यः सकृत् कृष्णस्य संस्मृतेः॥ सकृत्स्मृतोऽपि गोविंदो नृणां जन्मशतैः कृतम् ॥ पापराशिं दहत्याशु तूलराशिमिवानलः ॥ सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय' । एवमादिवचनैः श्रद्धाभक्त्योरभावेऽपि नामसंकीर्तनं समस्तदुरितं नाशयतीति मन्तव्यं किमुत सहस्रनामसंकीर्तनं नाशयतीति । ' मनसा अग्रे संकल्पयत्यथ वाचा व्याहरति । यद्वै मनसा ध्यायति तद्वाचा वदति ' इति श्रुतिभ्यां स्मरणं ध्यानं च नामसंकीर्तनेऽन्तर्भूतम् । नामशक्तितात्पर्यावधारणम् । 'यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोपि यच्चिंतने विघ्नो यत्र निवेशिते च मनसि ब्राह्मोऽपि लोकोऽल्पकः ॥ मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ' इति विष्णुपुराणान्ते श्रीपाराशरेणोपसंहृतम । ' आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः

सदा’ इति श्रीमहाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहृतम् ॥ हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ॥ ॐ मित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ’ इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं महेश्वरेणापि । एतत्सर्वमभिप्रेत्यैव “ एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ” इत्याधिक्यमुक्तम् । “ किमेकं दैवतं लोके किंवाप्येकं परायणं ” “ यतः सर्वाणि” इत्यादिना यद्ब्रह्मोक्तं तद्विश्वशब्देनोक्तमिति व्याख्यातम् । तत्किमित्याकांक्षायामाह विष्णुरिति । तथाच ऋग्वेदे “तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विषक्त न महस्ते विष्णो सुमतिं भजामहे ” इत्यादिश्रुतिभिः विष्णोः नामसंकीर्तनं सम्यग्ज्ञानप्राप्तये विहितम् । तमेव स्तोतारः पुराणं यथाज्ञानेन सत्यस्य गर्भं जन्मसमाप्तिं कुरुत । जानन्तः आ अस्य विष्णोः नामापि आवदत अन्ये वदन्तु मा वा हे विष्णो वयं ते सुमतिं शोभनं महः भजामहे इति श्रुतेरभिप्रायः ॥ वेवेष्टि व्याप्नोतीति विष्णुः विषेर्व्याप्त्यभिधायिनो क्नुप्रत्ययान्तस्य रूपं विष्णुरिति देशकालवस्तुपरिच्छेदशब्दशून्य इत्यर्थः । ‘ व्याप्ता मे रोदसी पार्थ कान्तिश्चाभ्यधिका स्थिता ॥ क्रमणाच्चाप्यहं पार्थ विष्णुरित्याभिसंज्ञितः ’ इति महाभारते ॥ ‘ यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ’ इत्यादि श्रुतेर्बृहन्नारायणे । ‘ सर्वभूतस्थमेकं नारायणं कारकरूपमेकाकारं परं ब्रह्म शोकमोहाविनिर्मुक्तं विष्णुं ध्यायन्नासीदति ’ इत्यात्मबोधोपनिषदि । विशतेर्वा क्नुप्रत्ययान्तस्य रूपं विष्णुरिति ‘ यस्माद्विश्वमिदं सर्वं तस्य शक्त्या महात्मनः । तस्मादेवोच्यते विष्णुर्विशेर्धातोः प्रवेशनात् ’ इति विष्णुपुराणे । यदुद्देशेन वषट्क्रिया स वषट्कारः यस्मिन्यज्ञे वा वषट्क्रिया स वषट्कारः । ‘ यज्ञो वै विष्णुः ’ इति श्रुतेर्यज्ञो वषट्कारः वषट्कारादिमंत्रात्मना देवान्प्रीणयतीति वा प्रजापतिश्च वषट्कारश्चेति श्रुतेः देवता वा॥भूतं च भव्यं च भवच्च भूतभव्य-

भवन्ति तेषां प्रभुर्भूतभव्यभवत्प्रभुः कालभेदमनादृत्य सन्मात्रप्रतियौगिकमैश्वर्यमस्येति प्रभुत्वम् । रजोगुणं समाश्रित्य विरिंचिरूपेण भूतानि करोतीति वा भूतकृत् । सत्त्वगुणमधिष्ठाय भूतानि बिभर्ति पालयति धारयति पोषयतीति वा भूतभृत । प्रपंचरूपेण भवतीति केवलं भवत्येवेति भावः भवनं भावः सत्तात्मको वा । भूतात्मा भूतानामात्मान्तर्यामीति भूतात्मा ' एष त आत्मान्तर्यामी ' इति श्रुतेः । भूतानि भावयति जनयति वर्धयतीति वा भूतभावनः ॥ १४ ॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ॥
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ १५ ॥

भूतकृदादिभिर्गुणतंत्रत्वं प्राप्तं प्रतिषिध्यते पूतात्मेति पूत आत्मा यस्य स पूतात्मा कर्मधारयो वा ' केवलो निर्गुणश्चेति ' श्रुतेः । ' गुणोपरागः स्वेच्छातः पुरुषस्येति कल्प्यते '। परमश्चासावात्मा चेति परमात्मा कार्यकारणविलक्षणो नित्यशुद्धमुक्तस्वभावः । मुक्तानां परमा प्रकृष्टा गतिर्गन्तव्या देवता पुनरावृत्त्यसंभवात्तद्गतस्येति मुक्तानां परमा गतिः 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ' इति भगवद्वचनम् । न व्येति नास्य व्ययो विनाशो विकारो वा विद्यत इत्यव्ययः ' अजरोऽमर ' इति श्रुतेः । पुरं शरीरं तस्मिन् शेते पुरुषः । 'नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् ॥ व्याप्य शेते महात्मा यत्तस्मात्पुरुष उच्यते ' इति महाभारते । यद्वा अस्तेर्व्यस्ताक्षरयोगात् असीत्पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः पुरुषः । पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वं ' इति श्रुतेः पुरुष सूरिषु उत्कर्षशालिषु सत्त्वेषु सीदत... ।। पु भुवनानि संहारसमयेऽस्यति अन्तं करोति वा । पूर्णत्वात्पूरणाद्वा सदनाद्वा पुरुषः 'पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः ' इति पंचमवेदे । साक्षादव्यवधानेन पश्यति सर्वमिति साक्षी ' साक्षात् द्रष्टरि संज्ञायाम् ' इति पाणिनिवचनादिनिप्रत्ययः । क्षेत्रं शरीरं

जानातीति क्षेत्रज्ञः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः 'क्षेत्रज्ञं चापि मां विद्धि' इति भगवद्वचनात् । 'क्षेत्राख्यानि शरीराणि तेषां चैव यथासुखम् । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' इति ब्रह्मपुराणे । स एवा न क्षरतीत्यक्षरः परमात्मा च अश्नातेरश्नोतेर्वा सरप्रत्ययान्तस्य रूपमक्षरमिति स एवकारात् क्षेत्रज्ञाक्षरयोरभेदः परमार्थतस्तत्त्वमस्येति श्रुतेश्चकाराद्व्यावहारिको भेदः प्रसिद्धेरपरमार्थत्वात् ॥ १५ ॥

**योगो योगविदां नेता प्रधानपुरुषेश्वरः ॥**
**नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ १६ ॥**

योगो 'नानेंद्रियाणि सर्वाणि निरुध्य मनसा सह । एकत्वभावनायोगः क्षेत्रज्ञपरमात्मनोः' तदव्याप्यतया योगः । योगं विचारयन्ति जानन्ति लभन्त इति वा योगविदस्तेषां नेता ज्ञानिनां योगक्षेमवहनादिनेति योगविदांनेता । प्रधानं प्रकृतिर्माया पुरुषो जीवस्तयोरीश्वरः प्रधानपुरुषेश्वरः । नरस्य सिंहस्य चावयवा यस्मिन् लक्ष्यन्ते तद्वपुर्यस्य स नारासिंहवपुः । यस्य वक्षसि नित्यं वसति श्रीः स श्रीमान् । अभिरूपाः केशाः यस्य स केशवः 'केशाद्वोऽन्यतरस्यां' इति वप्रत्ययः प्रशंसायां यद्वा कश्च अश्च ईशश्च त्रिमूर्तयः केशास्ते यद्वशेन वर्तन्ते स केशवः । केशिवधाद्वा 'यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन । तस्मात्केशवनाम्ना त्वं लोके गोपो भविष्यसि' इति विष्णुपुराणे श्रीकृष्णं प्रति नारदवचनम् । पृषोदरादित्वाच्छब्दसाधुत्वकल्पना । पुरुषाणामुत्तमः पुरुषोत्तमः । अत्र 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधो न भवति जात्याद्यनपेक्षयाऽसमर्थत्वात् यत्र पुनर्जातिगुणक्रियापेक्षया पृथक् क्रिया तत्र समर्थत्वान्निषेधः प्रवर्तते मनुष्याणां क्षत्रियः शूरतमः गवां कृष्णा गौः संपन्नक्षीरतमा अध्वगानां धावन् शीघ्रतम इति । अथवा पंचमीसमासः तथा च भगवद्वचनं "यस्मात् क्षरमतीतोहमक्षरादपि चोत्तमः । अतोस्मि

लोके वेदे च प्रथितः पुरुषोत्तमः " इति ॥१६॥

**सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ॥**

**संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ १७ ॥**

'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययौ । सर्वस्य सर्वदा ज्ञानात्सर्वमेनं प्रचक्षते ' इति भगवद्व्यासवचनात्सर्वः । शृणाति सकलाः प्रजाः संहरति इति शर्वः । निस्त्रैगुण्यतया शुद्धत्वाच्छिवः । 'स ब्रह्मा स शिवः ' इति अभेदादेशाच्छिवादिनामभिर्हरिरेव स्तूयते । स्थिरत्वात्स्थाणुः । भूतानामादिः कारणत्वादिति भूतादिः । प्रलये अस्मिन्सर्वं निधीयत इति निधिः । ' कर्मण्यधिकरणे च ' इति किप्रत्ययः । स एव निधिर्विशिष्यते अव्यय अविनश्वरो निधिरित्यर्थः स्वेच्छया समीचीनं भवनमिति संभवः ' संभवामि युगे युगे ' इति भगवद्वचनात् । तथा दुष्टविनाशाय साधूनां रक्षायै संभवाम्येवं गर्भदुःखविवर्जित इति । सर्वेषां भोक्तॄणां फलानि भावयतीति भावनः सर्वफलदातृत्वं फलमेतदुपपत्तेः इत्यत्र प्रतिपादितम् । प्रपंचस्याधिष्ठानत्वेन धारणाद्भर्ता । प्रकर्षेण महाभूतानि अस्माज्जायन्त इति प्रभवः । प्रकृष्टो भवो जन्मास्येति वा । सर्वासु क्रियासु सामर्थ्यातिशयात्प्रभुः । निरुपाधिकमैश्वर्यमस्येति ईश्वरः । ' एष सर्वेश्वरः ' इति श्रुतेः ॥ १७ ॥

**स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ॥**

**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८ ॥**

वयमेव भवतीति स्वयंभूः स एव स्वयमुद्भवत् इति मानवं वचनम् । एष यदुपरि भवति स्वयं भवतीति वा स्वयंभूः' 'परिभूः स्वयंभू' इति मंत्रवर्णात् 'शं सुखं भक्तानां भावयतीति शंभुः । आदित्यमंडलान्तःस्थो हिरणमयः पुरुषः आदित्यः द्वादशादित्येषु विष्णुर्वा 'आदित्यानामहं विष्णुः' इत्युक्तेः अदितेरखंडितायाः मह्या अयं पतिरिति वा इयं वा अदितिः ' महीं देवीं विष्णुपत्नीम्' इनि श्रुतेः । यथाऽऽदित्य एक एवानेकेषु जलभाजनेषु अनेक-

वत्प्रतिभासते एवमनेकेषु शरीरेषु एक एवात्माऽनेकवत्प्रतिभासत इति आदित्यसाधर्म्याद्वा आदित्यः । पुष्करेणोपमिते अक्षिणी यस्येति पुष्कराक्षः महानूर्जितः स्वनो नादो वा ऽतिलक्षणो यस्येति महास्वनः 'सन्महत्' इत्यादिना समासे कृते ' आन्महतः समानाधिकरणजातीययोः ' इत्यात्वं 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः ' इति श्रुतेः आदिर्जन्म निधनं विनाशः तत् द्वयं यस्य न विद्यते सोऽनादिनिधनः । अनंतादिरूपेण विश्वं बिभर्तीति धाता कर्मणां तत्फलानां च कर्ता । विधाता अनंतादीनामपि धारकत्वाद्विशेषेण दधातीति वा ॥ धातुरुत्तम इति नामैकं सविशेषणं सामानाधिकरण्येन सर्वधातुभ्यः पृथिव्यादिभ्य उत्कृष्टश्चिद्धातुरित्यर्थः धातुर्विरिंचेरुत्कृष्ट इति वा नामद्वयं वा कार्यकारणप्रपंचाधारणाच्चिदेव धातुरुक्तः सर्वेषामुत्कृष्टानामतिशयेनोद्भवत्वादुत्तम ॥ १८ ॥

**अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ॥**
**विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ १९ ॥**

शब्दादिरहितत्वान्न प्रत्यक्षगम्यः । नाप्यनुमानविषयः तद्व्याप्तलिंगाभावात् । नाप्युपमानसिद्धो निर्धर्मत्वेन सादृश्याभावात् नाप्यर्थापत्तिग्राह्यः तद्विनानुपपद्यमानत्वासंभवात् । नाप्यभावगोचरो भावत्वेन संमतात् । अभावसाक्षित्वाच्च न षष्ठप्रमाणस्य । नापि शास्त्रप्रमाणवेद्यः प्रमाणजन्यातिशयाभवात् । यद्येवं शास्त्रयोनित्वं कथमुच्यते प्रमाणादिसाक्षित्वेन प्रकाशस्वरूपस्य प्रमाणाविषयत्वे अध्यस्तात्तद्रूपत्वेन शास्त्रप्रमाणत्वमित्यप्रमेयः। साक्षित्वात् हृषीकाणींद्रियाणि तेषामीशः क्षेत्रज्ञरूपभाक् यद्वेंद्रियाणि यस्य वशे वर्तन्ते स परमात्मा । यस्य वा सूर्यरूपस्य जगत्प्रीतिकरा हृष्टाः केशा रश्मयः स हृषीकेशः पृषोदरादित्वं । तथोक्तं मोक्षधर्मे ' सूर्याचंद्रमसोः शश्वदंशुभिः केशसंज्ञितैः । बोधयन् स्वापयंश्चैव जगदुत्तिष्ठते पृथक् । बोधनात्स्वापनाच्चैव जगतो हर्षणं भवेत् । अग्निष्टोमकृतैरेव

कर्मभिः पांडुनंदन । हृषीकेशो महीशानो वरदो लोकभावनः ’ इति । जगत्कारणं पद्मं नाभौ यस्येति पद्मनाभः ‘ अजस्य नाभावध्येकमर्पितम् ’ इति श्रुतेः । पृषोदरादित्वात्साधुत्वं । अमराणां प्रभुरमरप्रभुः । विश्वं कर्म-क्रिया क्रियत इति जगत्कर्म । विश्वं कर्म यस्य विश्वकर्मा । विचित्रनि-र्माणशक्तिमत्वाद्विश्वकर्मा त्वष्टा तत्सादृश्याद्वा मननान्मनुः । ‘ नान्योऽ-तोऽस्ति मन्ता ’ इति श्रुतेः मंत्रो वा प्रजापतिर्वा । संहारसमये सर्वभूत-तनूकरणत्वात् त्वष्टा त्वक्षतेस्तनूकरणत्वार्थे तृच्प्रत्ययः । अतिशयेन स्थूलः स्थविष्ठः । पुराणः स्थविरः ‘एकं ह्यस्य स्थविरस्य नाम ’ इति श्रुतेः । वयोवचने वा स्थिरत्वात् ध्रुवः स्थविरो ध्रुव इत्येकमिदं नाम सविशे-षणम् ॥ १९ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ॥
प्रभूतस्त्रिककुब्धाम पवित्रं मंगलं परम् ॥ २० ॥

कर्मेन्द्रियैर्न गृह्यते इत्यग्राह्यः ‘यतो वाचो निवर्तन्ते अप्राप्य मनसासह इति श्रुतेः । शश्वत् सर्वेषु कालेषु भवतीति शाश्वतः ‘ शाश्वतं शिवमच्यु-तम् इति श्रुतेः । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । विष्णुस्तद्भा-वयोगाच्च कृष्णो भवति शाश्वतः ’ इति व्यासवचनात् सच्चिदानंदा-त्मकः कृष्णः । कृषामि पृथिवीं पार्थ भूत्वा कार्ष्णायसो हलः । कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन’ इति महाभारते । लोहिते अक्षिणी यस्येति लोहिताक्षः ‘असावृषभो लोहिताक्षः’ इति श्रुतेः । प्रलये भूतानि तर्दयतीति प्रतर्दनः । ज्ञानैश्वर्यादिसंपन्नः प्रभूतः ऊर्ध्वाधोमध्य-भेदेन तिसृणां ककुभामपि धामेति त्रिककुब्धामेत्येकमिदं नाम । येन पुनाति यो वा पुनाति ऋषिर्देवता वा तत्पवित्रम् । ‘ पुवः संज्ञायां कर्तरि चर्षिदेवतयोः ’ इति भगवत्पाणिनिस्मरणात् इत्रप्रत्ययः । ‘अशुभानि निराचष्टे तनोति शुभसंततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मंगलं विदुः’ इति श्रीविष्णुपुराणवचनात् कल्याणरूपत्वान्मंगलं सर्वभूतेभ्यः उत्कर्षतरं

परं मंगलमित्येकमिदं नाम सविशेषणम् ॥ २० ॥

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।**
**हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २१ ॥**

सर्वभूतनियन्तृत्वादीशानः । प्राणान् ददाति चेष्टयतीति वा प्राणदः 'को ह्येवान्यात्कः प्राण्यात्' इति श्रुतेः । यद्वा प्राणान् कालात्मना द्यति खंडयतीति वा प्राणदः प्राणान्दापयति शोधयतीति ददाति लुनातीति वा प्राणदः । प्राणितीति प्राणः क्षेत्रज्ञः परमात्मा वा 'प्राणस्य प्राणम्' इति श्रुतेर्मुख्यप्राणो वा । वृद्धतमो ज्येष्ठः 'ज्यचः इत्याधिकारे' वृद्धस्य च इति 'वृद्धशब्दस्य' ज्यादेशविधानात् । प्रशस्यतमः श्रेष्ठः 'प्रशस्यस्य श्रः' इति श्रादेशविधानात् 'प्राणो वा ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतेः । मुख्यप्राणो वा ज्येष्ठश्चेत्यधिकरणसिद्धत्वात् सर्वकारणत्वाद्वा ज्येष्ठः सर्वातिशयत्वाद्वा श्रेष्ठः । ईश्वरत्वेन सर्वासां प्रजानां पतिः प्रजापतिः । हिरमयांडान्तर्वर्तित्वाद्धिरण्यगर्भः विरिंच्यात्मना वा हिरण्यगर्भः । 'हिरण्यगर्भः समवर्तताग्रे' इति श्रुतेः । भूर्गर्भो यस्य सः भूगर्भः । मायाः श्रियः धवः पतिः माधवः । मधुविद्याच्च माधवः बोध्यत्वाद्वा । 'मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्' इति व्यासवचनाद्वा माधवः । मधुनामानमसुरं सूदितवान् इति मधुसूदनः । 'कर्णमिश्राद्भवं चापि मधुं नाम महासुरम् । ब्रह्मणोपचितं कुर्वन् जघान पुरुषोत्तमः । तस्य तात वधादेव देवदानवमानवाः । मधुसूदन इत्याहुर्ऋषयश्च जनार्दनम्' इति महाभारते ॥ २१ ॥

**ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।**
**अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २२ ॥**

सर्वशक्तिमत्तया ईश्वरः । विक्रमः शौर्यं तद्योगाद्विक्रमी । धनुरस्यास्तीति धन्वी व्रीह्यादित्वादिनिप्रत्ययः । 'रामः शस्त्रभृतामहम्' इति भगवद्वचनात् । मेधा बहुग्रन्थधारणसामर्थ्यं सा यस्यास्तीति मेधावी 'अस्मा-

यामेधास्रजो विनिः' इति पाणिनिवचनाद्विनिप्रत्ययः सलोपश्च । विचक्रमे जगद्विश्वं तेन विक्रमः विना गरुडेन पक्षिणा क्रमणाद्वा विक्रमः । 'क्रमणात् क्रमहेतुत्वाद्वा क्रमो विष्णुः' इति मनुवचनात् । अविद्यमान उत्तमो यस्मात्सोऽनुत्तमः ।'यस्मात्परं नापरमस्ति किंचित्' इति श्रुतेः 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति स्मृतेश्च । दैत्यादिभिर्धर्षयितुं न शक्यत इति दुराधर्षः । प्राणिनां पुण्यापुण्यात्मकं कर्म कृतं जानातीति कृतज्ञः, पत्रपुष्पाद्यल्पमपि प्रयच्छतां मोक्षं ददातीति वा कृतज्ञः । पुरुषप्रयत्नः कृतिः क्रिया वा हिंसा वा सर्वात्मकत्वात्तदाधारतया लक्ष्यत इति वा कृतिः कृतेति वा कृतिः । स्वमहिम्नि प्रतिष्ठितत्वादात्मवान् 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेः ॥ २२ ॥

**सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।**
**अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ २३ ॥**

सुराणां देवानां शोभनदातॄणां वा ईशः सुरेशः । आर्तानामार्तिहरणत्वाच्छरणम् । परमानन्दरूपत्वाच्छर्म । विश्वस्य कारणत्वाद्विश्वरेताः । सर्वाः प्रजा यत्सकाशादुद्भवन्तीति स प्रजाभवः । प्रकाशरूपत्वादहः । कालात्मना स्थितो विष्णुः संवत्सर इत्युक्तः । व्यालवद्ग्रहीतुमशक्यत्वाद्व्यालः । प्रतीतिः प्रज्ञा तद्रूपत्वात्प्रत्ययः । 'प्रज्ञानं ब्रह्म' इति श्रुतेः । सर्वाणि दर्शनानि प्रत्यक्षाणि यस्य स सर्वदर्शनः सर्वात्मकत्वात् 'विश्वतश्चक्षुर्विश्वाक्षम्' इति श्रुतेः ॥ २३ ॥

**अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।**
**वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ २४ ॥**

न जायत इत्यजः 'न जातो न जनिष्यते' इति श्रुतेः । 'नहि जातो न जायेऽहं न जनिष्ये कदाचन । क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः' इति महाभारते । सर्वेषामीश्वराणामीश्वरत्वात्सर्वेश्वरः 'एष सर्वेश्वरः' इति श्रुतेः । नित्यं निष्पन्नरूपत्वात् सिद्धः । सर्ववस्तुषु

संविद्रूपत्वान्निरतिशयत्वात्फलरूपत्वात् सिद्धिः । स्वर्गादीनां विनाशित्वादफलत्वम् । सर्वभूतानामादिकारणत्वात्सर्वादिः । स्वरूपसामर्थ्यान्न च्युतो न च्यवते न च्यविष्यते इत्यच्युतः । 'शाश्वतं शिवमच्युतम्' इति श्रुतेः । तथा च भगवद्वचनं 'यस्मान्न च्युतः पूर्वोऽहमच्युतस्तेन कर्मणा' इति ॥ इति नाम्नां शतमाद्यं विवृतम् । विश्वं । परमात्मा । नारसिंहवपुः । संभवो । महास्वनो । मनुः । त्रिककुब्धाम । भूगर्भो । दुराधर्षः । संवत्सरः ॥ वर्षणात् सर्व कामानां धर्मो वृषः कात् तोयात् भूमिमपादिति कपिर्वराहः वृषरूपत्वात्कपिरूपत्वाच्च वृषाकपिः । 'कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते । तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः' इति व्यासवचनम्॥ इयानिति मातुं परिच्छेत्तुं न शक्यत आत्मा यस्येत्यमेयात्मा । सर्व संबंधविनिर्गतः सर्वयोगविनिःसृतः । 'असंगो ह्ययं पुरुषः' इति श्रुतेः । नाना शास्त्रोक्तायोगादवगतत्वाद्वा सर्वयोगविनिःसृतः ॥ २४ ॥

**वसुर्वसुमनाः सत्यः समात्मा संमितः समः ॥**
**अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ २५ ॥**

वसन्ति सर्वभूतान्यत्र तेष्वयमपि वसतीति वसुः 'वसूनामस्मि पावकः' इत्युक्तो वा वसुः । वसुशब्देन धनवाचिना प्राशस्त्यं लक्ष्यते प्रशस्तं च मनो यस्य स वसुमनाः रागद्वेषादिभिः क्लेशैः उपक्लेशैश्च यतोऽकलुषितं ततस्तन्मनः प्रशस्तम् । अवितथरूपत्वात्परमात्मा सत्यः'सत्यं ज्ञानमनंतं ब्रह्म' इति श्रुतेः । मूर्तामूर्तात्मकत्वाद्वा 'सच्च त्यच्चाभवत्' इति श्रुतेः । सदितिप्राणरित त्यन्नं यमितिदिवाकरस्तेन प्राणान्नादित्यरूपत्वाद्वा 'सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यः' इति श्रुतेः । सत्यः सत्सुसाधुत्वाद्वा सत्यः । सम आत्मा मनो यस्य रागद्वेषादिभिरदूषितः स समात्मा सर्वभूतेषु सम एक आत्मा वा समात्मा 'सम आत्मेति विद्यात्' इति श्रुतेः । सर्वैरर्थजातैः परिच्छिन्नो मितः संमितः सर्वैरपरिच्छिन्नोऽमित इत्यसं-

मितो वा । सर्वकालेषु सर्वविकाररहितत्वात्समः मया लक्ष्म्या सह वर्तत इति वा समः । पूजितः स्तुतः संस्मृतो वा सर्वं फलं ददाति न वृथा करोतीत्यमोघः अवितथसंकल्पाद्वा । सत्यसंकल्प इति श्रुतेः । हृदयस्थं पुंडरीकमश्नुते व्याप्नोति तत्रोपलक्षित इति पुंडरीकाक्षः । 'यत्पुंडरीकं पुरमध्यसंस्थम्' इति श्रुतेः । पुंडरीकाकारे उभे अक्षिणी अस्येति वा । धर्मलक्षणं कर्म यस्येति वृषकर्मा । धर्मार्थमाकृतिः शरीरं यस्येति स वृषाकृतिः । 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति भगवद्वचनात् ॥ २५ ॥

**रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।**
**अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ २६ ॥**

संहारकाले प्रजाः संहरन् रोदयतीति रुद्रः, रुतं राति ददातीति वा रुद्रः, रुद्दुःखं कारणं वा द्रावयतीति वा रुद्रः । रोदनाद्द्रावणाद्वापि 'रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्' इति लिंगपुराणवचनात् । बहूनि शिरांसि यस्येति बहुशिराः । 'सहस्रशीर्षा' इति श्रुतेः । बिभर्ति लोकानिति बभ्रुः । विश्वस्य कारणत्वाद्विश्वयोनिः । शुचीनि श्रेयांसि नामानि श्रवणीयान्यस्येति शुचिश्रवाः । न विद्यते मृतं मरणमस्येति अमृतः । 'अजरोऽमर' इति श्रुतेः । शाश्वतश्चासौ स्थाणुश्चेति शाश्वतस्थाणुः । वर आरोहोऽङ्कोऽस्येति वरारोहः । वरमारोहणं यस्मिन्निति वा आरूढानां पुनरावृत्त्यसंभवात् 'न स पुनरावर्तते' इति श्रुतेः 'यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इति भगवद्वचनात् । महत्सृज्यविषयं तपो ज्ञानमस्येति महातपाः 'यस्य ज्ञानमयं तपः' इति मंत्रवर्णात् । ऐश्वर्यं प्रतापो वा तपो महदस्येति वा महातपाः ॥ २६ ॥

**सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।**
**वेदो वेदविदव्यंगो वेदांगो वेदवित्कविः ॥ २७ ॥**

सर्वत्र गच्छतीति सर्वगः कारणत्वेन व्याप्तत्वात् । सर्वत्र सर्वं वेत्ति

विंदतीति वा सर्ववित् । भातीति भानुः 'तमेव भान्तमनुभाति सर्वं' इति श्रुतेः । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलं' इति स्मृतेश्च । सर्वविच्चासौ भानुश्च सर्वविद्भानुः । विष्णु अव्ययं सर्व इत्यर्थे विष्वगंचति पलायते दैत्यसेना यस्य रणोद्योगमात्रेणेति विष्वक्सेनः । जनान् अर्दयति हिनस्ति नरकादीन् गमयतीति वा, जनैः पुरुषार्थमभ्युदयनिःश्रेयसलक्षणं याच्यते इति जनार्दनः । वेदरूपत्वाद्वेदः वेदयतीति वा वेदः । 'तेषामेवानुकंपार्थमहज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति भगवद्वचनात् । यथावद्वेदं वेदार्थं च विंदत इति वा वेदवित् 'वेदान्तकृद्वेदविदेव चाहम्' इति भगवद्वचनात् । 'सर्वे वेदाः सर्ववेद्याः सशास्त्रा सर्वे यज्ञाः सर्व ईज्यश्च कृष्णः । विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञाः समाप्ताः' इति महाभारते । अव्यंगः ज्ञानादिभिः परिपूर्णोऽविकल इत्युच्यते व्यंगो व्यक्तिर्न विद्यत इत्यव्यंगो वा 'अव्यक्तोऽयं' इति भगवद्वचनात् । वेदा अंगभूता यस्य स वेदांगः वेदान् विचारयतीति वेदवित् । कविः क्रान्तदर्शी सर्वदृक् नान्यदतोऽस्ति द्रष्टा इत्यादिश्रुतेः 'कविर्मनीषी' इत्यादिमंत्रवर्णात् ॥ २७ ॥

**लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।**
**चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥**

लोकानध्यक्षयतीति लोकाध्यक्षः सर्वेषां लोकानां प्राधान्येनोपद्रष्टा । लोकपालादिसुराणामध्यक्षः सुराध्यक्षः धर्माधर्मौ साक्षादक्षितेऽनुरूपं फलं दातुं तस्माद्धर्माध्यक्षः । कृतश्च कार्यरूपेण अकृतश्च कारणरूपेणेति कृताकृतः । सर्गादिषु पृथग्विभूतयश्चतस्रः आत्मनो मूर्तयो यस्य स चतुरात्मा । 'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतः सृष्टिहेतवः । विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः । रुद्रः कालोन्तकाद्याश्च समस्ताश्चैव जंतवः । चतुर्धा प्रलयायैता जनार्दनविभूतयः' इति वैष्णवपुराणे । 'व्यूह्या-

त्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः । सृष्ट्यादीन्प्रकरोत्येष विश्रुतात्मा जनार्दनः' इति व्यासवचनात् चतुर्व्यूहः । दंष्ट्राश्चतस्रो यस्येति चतुर्दंष्ट्रो नृसिंहविग्रहः यद्वा सादृश्याच्छृंगं दंष्ट्रेत्युच्यते । 'चत्वारि शृंगा' इति श्रुतेः । चत्वारो भुजा अस्येति चतुर्भुजः ॥ २८ ॥

**भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।**
**अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ २९ ॥**

प्रकाशैकरसत्वात् भ्राजिष्णुः । भोज्यरूपतया प्रकृतिर्माया भोजनमुच्यते पुरुषरूपेण तां भुनक्तीति भोक्ता । हिरण्याक्षादीन् सहते अभिभवतीति सहिष्णुः । हिरण्यगर्भरूपेण जगदादावुत्पद्यते स्वयमिति जगदादिजः । अघं न विद्यतेऽस्येत्यनघः । अपहतपाप्मा इति श्रुतेः । विजयते ज्ञान-वैराग्यैश्वर्यादिभिर्गुणैर्विश्वमिति विजयः । यतो जयत्यतिशयेन सर्वभूतानि स्वभावतोऽतो जेता । विश्वं योनिर्यस्य विश्वश्चासौ योनिश्चेति वा विश्व-योनिः । पुनः पुनः शरीरेषु वसति क्षेत्रज्ञरूपेणेति पुनर्वसुः ॥ २९ ॥

**उपेंद्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।**
**अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥ ३० ॥**

इंद्रमुपगतोऽनुजत्वेनेत्युपेंद्रः यद्वा उपरि इंद्रः उपेंद्रः । 'ममोपरि यथेंद्र-स्त्वं स्थापितो गोभिरीश्वरः । उपेंद्र इति कृष्ण त्वां गास्यन्ति भुवि देवताः' इति हरिवंशवचनात् । बलिं वामनरूपेण याचितवानिति वामनः । संभजनीय इति वा वामनः 'मध्ये वामनमासीनं विश्वे देवा उपासते' इति मंत्रवर्णात् । स एव जगत्त्रयं क्रममाणः प्रांशुरभवदिति प्रांशुः । 'तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्वदेवमयं रूपं दर्शयामास वै प्रभुः । भूः पादौ द्यौः शिरश्चास्य चंद्रादित्यौ च चक्षुषी' इत्यादि विश्व-रूपं दर्शयित्वा ' तस्य विक्रमतो भूमिं चंद्रादित्यौ स्तनांतरे । नभः प्रक्र-ममाणस्य नाभ्यां तौ समवस्थितौ । दिवमाक्रममाणस्य जानुमूले व्यवस्थितौ' इति प्रांशुत्वं दर्शितं हरिवंशे । न मोघं चेष्टितं यस्य सोऽमोघः ।

स्मरतां स्तुवतामर्चयतां पावनत्वाच्छुचिः ' अस्पर्शश्च महान् शुचिः ' इति मंत्रवर्णात् । बलप्रकर्षशालित्वादूर्जितः अतीत्येंद्रं स्थितो ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरित्यतींद्रः । सर्वेषां प्रतिसंहृतौ प्रतिसंग्रहात्संग्रहः । सृज्यरूपतया सर्गहेतुत्वाद्वा सर्गः । एकरूपेण जन्मादिरहिततया धृत आत्मा येन स धृतात्मा । स्वेषु स्वेष्वधिकारेषु प्रजा नियमयतीति नियमः अंतर्यमयतीति यमः ॥ ३० ॥

**वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ॥**
**अतींद्रियो महामायो महोत्साहो महाबलः ॥ ३१ ॥**

निःश्रेयसार्थिभिर्वेदनार्हत्वाद्वेद्यः । सर्वविद्यानां वेदितृत्वाद्वैद्यः । सदा आविर्भूतस्वरूपत्वात्सदायोगी । धर्मत्राणाय वीरान् असुरभटान् हन्तीति वीरहा । माया विद्यायाः पतिर्माधवः । ' मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवः स्वामीति शब्दितः ' इति हरिवंशे । यथा मधु परां प्रीतिमुत्पादयति अयमपि तथेति मधुः । शब्दादिरहितत्वादिंद्रियाणामविषय इत्यतींद्रियः । 'अशब्दमस्पर्शम् ' इति श्रुतिः। मायाविनामपि मायाकारित्वान्महामायः 'मम माया दुरत्यया ' इति भगवद्वचनात् । जगदुत्पत्तिस्थितिलयार्थमुद्युक्तत्वान्महोत्साहः । बलिनामपि बलवत्त्वान्महाबलः ॥ ३१ ॥

**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ॥**
**अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ ३२ ॥**

बुद्धिमतामपि बुद्धिमत्त्वान्महाबुद्धिः । महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्येति महावीर्यः । महती शक्तिः सामर्थ्यमस्येति महाशक्तिः । महती द्युतिर्बाह्याभ्यंतरा वाऽस्येति महाद्युतिः ' स्वयंज्योतिश्च ' इति श्रुतेः । ' ज्योतिषां ज्योतिः ' इत्यादेश्च । इदं तादिति निर्दिष्टुं यन्न शक्यते परस्मै असंवेद्यत्वात्तदनिर्देश्यं वपुरस्येति अनिर्देश्यवपुः । ऐश्वर्यलक्षणा समग्रा श्रीर्यस्य स श्रीमान् । सर्वैः प्राणिभिरमेया बुद्धिरात्मा यस्य सोऽमेयात्मा ।

महान्तमद्रिं गिरिं मंदरं गोवर्धनं च अमृतमथने गोरक्षणे च धृतवानिति महाद्रिधृक् षान्तोयम् ॥ ३२ ॥

**महेष्वासो महीभर्ता श्रीनिवासः सतांगतिः ॥**
**अनिरुद्धः सुरानंदो गोविंदो गोविदांपतिः ॥ ३३ ॥**

महानिष्वास इषुक्षेपो यस्य स महेष्वासः। एकार्णवां प्लुतां महीं च बभारेति महीभर्ता। यस्य वक्षस्यनपायिनी श्रीर्वसति स श्रीनिवासः। सतां वैदिकानां साधूनां पुरुषार्थसाधनहेतुः प्राप्तिहेतुः सतांगतिः। न केनापि प्रादुर्भावेषु निरुद्ध इत्यनिरुद्धः। सुरान् आनंदयतीति सुरानंदः। 'नष्टां वै धरणीं पूर्वमविंदं यद्गुहागताम्। गोविंद इति तेनाहं देवैर्वाग्भिरभिष्टुतः' इति मोक्षधर्मवचनाद्गोविंदः 'अहं किलेंद्रो देवानां त्वं गवामिंद्रतां गतः। गोविंद इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्' इति। 'गौरेषा भवतो वाणी तां च विंदयते भवान्। गोविंदस्तु ततो देव मुनिभिः कथ्यते भवान्' इति च हरिवंशे। गौर्वाणी तां विदन्तीति गोविंदः तेषां पतिर्विशेषेणेति गोविदांपतिः ॥ ३३ ॥

**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ॥**
**हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४ ॥**

तेजस्विनामपि तेजस्त्वान्मरीचिः 'तेजस्तेजस्विनामहं' इति भगवद्वचनात्। स्वाधिकारात्प्रमाद्यन्तीः प्रजा दमयितुं शीलमस्य वैवस्वतादिरूपेणेति दमनः। अहं स इति तादात्म्यभाविनः संसारभयं हन्तीति हंसः पृषोदरादित्वाच्छब्दसाधुत्वम्। हन्ति गच्छति सर्वशरीरेष्विति वा हंसः 'हंसः शुचिषत्' इति मंत्रवर्णात्। शोभनधर्माधर्मरूपपर्णत्वात्सुपर्णः 'द्वा सुपर्णा' इति मंत्रवर्णात्। शोभनं पर्णं यस्येति वा सुपर्णः 'सुपर्णः पततामस्मि' इति ईश्वरवचनात्। भुजेन गच्छतामुत्तमो भुजगोत्तमः। हिरण्यमेव कल्याणा नाभिरस्येति रमणीयनाभित्वात् हिरण्मयत्वाद्वा हिरण्यनाभः। बदरिकाश्रमे नरनारायणरूपेण शोभनं तपश्चरतीति सुतपाः।

' मनसश्चेंद्रियाणां च ह्यैकाग्र्यं परमं तपः ' इति स्मृतेः । पद्ममिव सुवर्तुला नाभिरस्येति हृदयपद्मस्य नाभौ मध्ये प्रकाशनाद्वा पद्मनाभः पृषोदरादित्वात्साधुत्वकल्पना । प्रजानां पतिः पिता प्रजापतिः ॥ ३४ ॥

**अमृत्युः सर्वदृक् सिंहः संधाता संधिमान् स्थिरः ॥**
**अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ ३५ ॥**

मृत्युर्विनाशस्तद्धेतुर्वास्य न विद्यते इत्यमृत्युः । प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति सर्वदृक् । हिनस्तीति सिंहः पृषोदरादित्वात्साधुत्वम् ॥ इति नाम्नां द्वितीयं शतं विवृतम् ॥ वृषाकपिः । पुंडरीकाक्षो । वरारोहो । वेदवित् । भ्राजिष्णुः । उपेंद्रः नियमो । महोत्साहो । महेष्वासो । हंसः ॥ कर्मफलैः पुरुषान् संधत्त इति संधाता । फलभोक्ता च स एवेति संधिमान् । सदैकरूपत्वात् स्थिरः । अजति गच्छति क्षिपति इति वा अजः । मर्षितुं सोढुं दानवादिभिर्न शक्यते इति दुर्मर्षणः । श्रुतिस्मृत्यादिभिः सर्वेषामनुशिष्टिं करोतीति शास्ता । विशेषेण श्रुतो सत्यज्ञानादिलक्षणः आत्माऽतो विश्रुतात्मा । सुरारीणां निहन्तृत्वात्सुरारिहा ॥ ३५ ॥

**गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ॥**
**निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥**

सर्वविद्यानामुपदेष्टृत्वात्सर्वेषां जनकत्वाद्वा गुरुः विरिंच्यादीनामपि ब्रह्मविद्यासंप्रदायकत्वाद्गुरुतमः 'यो ब्रह्माणं विदधाति पूर्वम्' इति मंत्रवर्णात् । धाम ज्योतिः ' नारायणः परो ज्योतिः ' इति मंत्रवर्णात् सर्वकामानामास्पदत्वाद्वा धाम ' परं ब्रह्म परं धाम ' इति श्रुतेः । सत्यवचनलक्षणधर्मरूपत्वात्सत्यः ' तस्मात् सत्यं परमं वदन्ति ' इति श्रुतेः । सत्यस्य सत्यमिति वा सत्यः । ' प्राणा वै सत्यं तेषामेष सत्यम् ' इति श्रुतेः । सत्यः अवितथः पराक्रमो यस्य स सत्यपराक्रमः । निमीलिते यतो नेत्रे योगनिद्रयाऽतो निमिषः । नित्यप्रबुद्धस्वरूपत्वादनिमिषः मत्स्यरूपतया

वा आत्मरूपतया वा अनिमिषः । भूततन्मात्ररूपां वैजयन्त्याख्यां स्रजं नित्यं बिभर्तीति स्रग्वी । वाचो विद्यायाः पतिर्वाचस्पतिः सर्वार्थविषया धीर्बुद्धिरस्येत्युदारधीरिति पदद्वयमेकं नाम ॥ ३६ ॥

**अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ॥**
**सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ ३७ ॥**

अग्रं प्रकृष्टं पदं नयति मुमुक्षुमित्यग्रणी। भूतग्रामस्य नेतृत्वात् ग्रामणीः। श्रीः कान्तिः सर्वातिशायिन्यस्येति श्रीमान् । प्रमाणानुग्राहको भेदकरस्तर्को न्यायः । जगद्यंत्रनिर्वाहको नेता । श्वसनरूपेण भूतानि चेष्टयतीति समीरणः । सहस्राणि मूर्धानोऽस्येति सहस्रमूर्धा । विश्वस्यात्मा विश्वात्मा सहस्राण्यक्षीण्यक्षाणि वा यस्य स सहस्राक्षः । सहस्राणि पादा अस्येति सहस्रपात् ‘ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ’ इति श्रुतेः ॥३७॥

**आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ॥**
**अहः संवर्तको वह्निरनिलो धरणीधरः ॥ ३८ ॥**

आवर्तयितुं संसारचक्रं शीलमस्येत्यावर्तनः । संसारबंधान्निवृत्त आत्मा स्वरूपमस्येति निवृत्तात्मा । आच्छादिकया अविद्यया संवृतत्वात्संवृतः सम्यक् प्रमर्दयतीति रुद्रकालाद्याभिर्विभूतिभिरिति संप्रमर्दनः । सम्यगह्नां प्रवर्तमानात्सूर्यादहः । संवर्तकः महाप्रलयरूपः । हविर्वहनाद्वह्निः । अनादानादनिलः अननाद्वा अनिलः । शेषदिग्गजादिरूपेण वा धत्त इति धरणीधरः ॥ ३८ ॥

**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ॥**
**सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ ३९ ॥**

शोभनः प्रसादो यस्यापकारवतामपि शिशुपालादीनां मोक्षप्रदातृत्वादिति सुप्रसादः । रजस्तमोभ्यामकलुषित आत्मान्तःकरणमस्येति प्रसन्नात्मा करुणार्द्रस्वभावत्वाद्वा यद्वा प्रसन्नस्वभावः कारुणिक इत्यर्थः अवाप्तसर्वकामत्वाद्वा । विश्वं धृतवानिति विश्वधृक् ‘ ञिधृषा प्रागल्भ्ये ’। विश्वं

भुंक्ते भुनक्ति पालयतीति वा विश्वभुक् । हिरण्यगर्भादिरूपेण विविधं भवतीति विभुः । 'नित्यं विभुम्' इति मंत्रवर्णात् । सत्करोति पूजयतीति सत्कर्ता । पूजितैरपि पूजितः सत्कृतः । न्यायप्रवृत्ततया साधुः । साधयति साध्यभेदानुपादानात् साध्यमात्रसाधको वा । जनान् संहारसमये अपह्नुते अपनयतीति जह्नुः । जहात्यविदुषोऽभक्तान्नयाति परं पदमिति वा । नर आत्मा ततो जातान्याकाशादीनि नाराणि कार्याणि तानि कारणात्मना व्याप्नोतीत्यतश्च तान्ययनमस्येति नारायणः 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति मंत्रवर्णात् । 'नराज्जातानि सत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः' इति महाभारते । नाराणां जीवानामयनत्वात्प्रलय इति वा नारायणः 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतेः । 'नाराणामयनं यस्मात्तस्मान्नारायणः स्मृतः' इति ब्रह्मवैवर्तात् । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति मनुवचनाद्वा नारायणः । 'नारायणाय नम इत्यमुमेव सत्यं संसारघोरविषसंहरणाय मंत्रम् । शृण्वन्तु भव्यमतयो यतयोऽनुरागा उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः' इति श्रीनारसिंहपुराणे । 'नयतीति नरः प्रोक्तः परमात्मा सनातनः' इति व्यासवचनम् ॥ ३९ ॥

**असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ॥**
**सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ॥ ४० ॥**

यस्मिन्संख्याभेदादि न विद्यत इत्यसंख्येयः । अप्रमेय आत्मा स्वरूपमस्येत्यप्रमेयात्मा । अतिशेते सर्वमतो विशिष्टः 'विश्वतः यस्मान्नित्यम्' इति श्रुतेः । शिष्टं शासनं तत् करोतीति शिष्टकृत् । शिष्टान् करोति पालयतीति वा । सामान्यवचनो धातुर्विशेषवचनो दृष्टः कुरु काष्ठानीत्याहरणे यथा तद्वदिद्विशिष्टकृत् । निरंजनः शुचिः । सिद्धो निर्वृत्त अर्थ्यमानोर्थोऽस्येति सिद्धार्थः । 'सत्यकाम' इति श्रुतेः । सिद्धो निष्पन्नः संकल्पो-

स्येति सिद्धसंकल्प । 'सत्यसंकल्प' इति श्रुते । सिद्धिं फलं कर्तृभ्यः स्वाधिकारानुरूपतो ददातीति सिद्धिदः । सिद्धेः क्रियायाः साधकत्वात्सिद्धिसाधनः ॥ ४० ॥

**वृषाहीं वृषभो विष्णुर्वृषपर्वा वृषोदरः ॥**
**वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ४१ ॥**

वृषो धर्मः पुण्यं तद्देवाहः प्रकाशसाधर्म्यात् द्वादशाहप्रभृतिर्वृषाहः सोस्यास्तीति वृषाही वृषाह इत्यत्र 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः । वर्षत्येष भक्तेः कामानिति वृषभः ! यास्केनोक्तं 'विष्णुर्विचक्रमणात्' इति विष्णुः । वृषरूपाणि सोपानपर्वाण्याहुः परं धामारुरुक्षोरित्यतो वृषपर्वा । प्रजा वर्षन्ति चोदरं तस्येति वृषोदरः । वर्धयतीति वर्धनः । प्रपंचरूपेण वर्धत इति वर्धमानः । इत्थं वर्धमानोऽपि पृथगेवावतिष्ठतीति विविक्तः । श्रुतयः सागर इवात्र निधीयन्ते इति श्रुतिसागरः ॥ ४१ ॥

**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ॥**
**नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४२ ॥**

शोभना भुजा जगद्रक्षाकरा यस्येति सुभुजः । पृथिव्यादीन्यपि धारकाण्यन्यैर्धारयितुं अशक्यानि तानि धारयन् न केनचिद्धारयितुं शक्य इति दुर्धरः दुःखेन ध्यानसमये मुमुक्षुभिर्हृदये धार्यत इति वा दुर्धरः । यतो निःसृता ब्रह्ममयी वाक् तस्माद्वाग्मी । महांश्चासाविंद्रश्चेति महेंद्रः ईश्वराणामपीश्वरः । वसु धनं ददातीति वसुदः 'अन्नादो वसुदानः' इति श्रुतेः । दीयमानं तद्वस्त्वपि स एवेति वा वसुः आच्छादयत्यात्ममाययेति वा वसुः । अंतरिक्ष एव वसति नान्यत्रेत्यसाधारणेन वसनेन वा वसुः 'वसुरंतरिक्षसत्' इति श्रुतेः । एकं रूपं न विद्यत इति नैकरूप इत्यथः । 'इंद्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः।ज्योतींषि रूप इत्यादिस्मृतेश्च । बृहद्वराहादिरूपमस्य बृहद्रूपः । शिपयः पशवः तेषु प्रतितिष्ठति यज्ञरूपेणेति शिपिविष्टो यज्ञमूर्तिः 'यज्ञो बै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति'

इति श्रुतेः । शिपयो रश्मयस्तेषु निविष्ट इति वा 'शैत्याच्छयनयोगाच्च शीति वारि प्रचक्षते । तत्पानादुक्षणाच्चैव शिपयो रश्मयो मताः । तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते । सर्वेषां प्रकाशनशीलत्वात्प्रकाशनः ॥४२॥

**ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ॥**
**ऋद्धः स्पष्टाक्षरो मंत्रश्चंद्रांशुर्भास्करद्युतिः ॥ ४३ ॥**

ओजः प्राणबलं तेजः शौर्यादयो गुणा द्युतिर्दीप्तिः ता धारयतीत्योजस्तेजोद्युतिधरः अथवा ओजस्तेज इति नामद्वयं वा । "बलं बलवतां चाहं तेजस्तेजस्विनामहं" इति भगवद्वचनात् । ज्ञानलक्षणां दीप्तिं धारयतीति द्युतिधरः । प्रकाशस्वरूपः आत्मा यस्य स प्रकाशात्मा । सवित्रादिविभूतिभिः विश्वं प्रतापयतीति प्रतापनः । धर्मज्ञानवैराग्यादिभिरुपेतत्वादृद्धः । स्पष्टमुदात्तमोंकारलक्षणमस्येति स्पष्टाक्षरः । ऋग्यजुःसामलक्षणो मंत्रः मंत्रवाच्यत्वाद्वा मंत्रः । संसारतापतिग्मांशुतापतापितचेतसां चंद्रांशुरिवाह्लादकरत्वाच्चंद्रांशुः । भास्करद्युतिसाधर्म्याद्भास्करद्युतिः ॥ ४३ ॥

**अमृतांशूद्भवो भानुः शशबिंदुः सुरेश्वरः ॥**
**औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ४४ ॥**

अमृते मथ्यमाने पयोनिधावमृतांशोश्चंद्रस्योद्भवो यस्मात्सोऽमृतांशूद्भवः । भातीति भानुः " तमेव भान्तमनुभाति सर्वम् " इति श्रुतेः । शश इव बिंदुर्लांछनमस्येति शशबिंदुश्चंद्रः तद्वत्प्रजाः पुष्णातीति शशबिंदुः"पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः " इति भगवद्वचनम् । सुराणां देवानां शोभनदातॄणां चेश्वरः सुरेश्वरः । संसाररोगभेषजत्वादौषधम् । जगतां समुत्तारणहेतुत्वादसंभेदकारणाद्वा सेतुवद्वर्णाश्रमादीनामिति जगतः सेतुः " स एव सेतुर्विधरण एषां लोकानामसंभेदाय " इति श्रुतेः । सत्या अवितथा धर्मज्ञानादयो गुणाः पराक्रमश्च यस्य स सत्यधर्मपराक्रमः ॥ ४४ ॥

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः ॥**

**कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ४५ ॥**

भूतभव्यभवतां भूतग्रामाणां नाथस्तैर्याच्यते तानुपतपति तेषामीष्टे शास्तीति वा भूतभव्यभवन्नाथः । इति नाम्नां तृतीयं शतं विवृतम् ॥ पवत इति पवतः " पवनः पवतामस्मि " इति भगवद्वचनात् । पावयतीति पावनः । " भीषास्माद्वातः पवते इति " इति श्रुतेः । अनान् प्राणान् आत्मत्वेन लातीति जीवोऽनलः अनान् लातीति वा णलतेर्गंध-वाचिनो नञ्पूर्वाद्वा " अगंधमरसम् " इति श्रुतेः । नालं पर्याप्तमस्य विद्यत इति वाऽनलः अनित्यनेन लोके वाऽनलः । कामान् हन्ति मुमुक्षूणां भक्तानां हिंसकानां वेति कामहा । सत्त्वानां कामिनां कामान् करोतीति कामकृत् कामः प्रद्युम्नः तस्य जनकत्वाद्वा कामकृत् । अभिरूप-तमः कान्तः । काम्यते पुरुषार्थाभिकांक्षिभिरिति कामः । भक्तेभ्यः कामान् प्रकर्षेण ददातीति कामप्रदः । प्रकर्षेण भवनात्प्रभुः ॥ ४५ ॥

**युगादिकृद्युगावर्तो नैकमायो महाशनः ॥**
**अदृश्योऽव्यक्तरूपश्च सहस्रजिदनंतजित् ॥ ४६ ॥**

युगादेः कालभेदस्य कर्तृत्वाद्युगादिकृत् युगादीनामारंभं करोतीति वा युगादिकृत् । युगानि कृतादीन्यावर्तयतीति कालात्मना तस्माद्युगावर्तः । नैका माया विद्यते बह्वीर्माया वहतीति नैकमायः । ' नलोपो नञः ' इति नकारलोपो न भवति ञकारानुबंधस्यापि नकारस्य प्रतिषेधवाचिनो विद्यमानत्वात् । महदशनमस्येति महाशनः कल्पांते सर्वग्रसनात् । सर्वेषां बुद्धींद्रियाणामगम्यः अदृश्यः । स्थूलरूपेण व्यक्तं स्वरूपमस्येति व्यक्त-रूपः स्वयंप्रकाशत्वाद्योगिनां व्यक्तरूपत्वादिति वा व्यक्तरूपः । सुरारीणां सहस्राणि युद्धे जयतीति सहस्रजित् । सर्वाणि भूतानि युद्धक्रीडादिषु सर्वत्राचिंत्यशक्तितया जयतीत्यनंतजित् ॥ ४६ ॥

**इष्टो विशिष्टः शिष्टेष्टः शिखंडी नहुषो वृषः ।**
**क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४७ ॥**

परमानंदकत्वेन प्रिय इष्टः यज्ञेन पूजित इति वा इष्टः । सर्वेषामंतर्यामित्वेन विशिष्टः । शिष्टानां विदुषामिष्टः शिष्टेष्टः, शिष्टा इष्टा अस्येति वा शिष्टेष्टः " प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः " इति भगवद्वचनात् । शिष्टैरिष्टः पूजित इति वा शिष्टेष्टः । शिखंडः कलापोऽलंकारोऽस्येति शिखंडी गोपवेषधरो । यतः नह्यति भूतानि माययाऽतो नहुषः णह् बंधने । कामानां वर्षणात् वृषो धर्मः । " वृषो हि भगवान् धर्मः स्मृतो लोकेषु भारत । नैघंटुकपदाख्यानैर्विद्धि मां वृषमित्युत " इति महाभारते । साधूनां क्रोधं हन्तीति क्रोधहा । असाधुषु क्रोधं करोतीति क्रोधकृत् । क्रियत इति कर्म जगत् तस्य कर्ता 'एषां पुरुषाणां यः कर्ता यस्य वा एतत्कर्म स वै वेदितव्यः' इति श्रुतेः । क्रोधकृतां दैत्यादीनां कर्ता छेदक इत्येकं वा नाम । विश्वेषामालंबनत्वेन विश्वे बाहवोऽस्येति विश्वतो बाहवोऽस्येति वा विश्वबाहुः । 'विश्वतो बाहुः' इति श्रुतेः । महीं पूजां धरणीं वा धत्ते इति महीधरः ॥ ४७ ॥

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।**
**अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥**

षड्भावविकाररहितत्वादच्युतः " शाश्वतं शिवमच्युतं " इति श्रुतेः । जगदुत्पत्त्यादिकर्मभिः प्रख्यातः प्रथितः । सूत्रात्मना प्रजाः प्राणयतीति प्राणः " प्राणो वा अहमस्मि" इति बह्वृचाः " वायुर्वै गौतम तत्सूत्रम् " इति श्रुतेः । सुराणामसुराणां च यथासंख्यं प्राणं बलं च ददाति द्यति वेति प्राणदः । अदित्यां कश्यपाद्वासवस्यानुजो जात इति वासवानुजः । आपो यत्र निधीयन्ते सोऽपांनिधिः "सरसामस्मि सागरः" इति भगवद्वचनम् । अधितिष्ठन्ति भूतानि उपादानकारणत्वेन ब्रह्मेत्यधिष्ठानम् । " मत्स्थानि सर्वभूतानि " इति भगवद्वचनात् । अधिकारिभ्यः कर्मानुरूपं फलं प्रयच्छन्न प्रमाद्यतीति अप्रमत्तः । स्वे महिम्नि स्थितः प्रतिष्ठितः " स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि " इति श्रुतेः ॥ ४८ ॥

**स्कंदः स्कंदधरो धुर्यो वरदो वायुवाहनः ॥**
**वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥ ४९ ॥**

स्कंदत्यमृतरूपेण गच्छति वायुरूपेण शोषयतीति वा स्कंदः । स्कंदं धर्मपथं धारयतीति स्कंदधरः । धुरं वहति समस्तभूतजन्मादिलक्षणामिति धुर्यः । अभिमतान् वरान् ददातीति वरदः । वरां गां दक्षिणां ददाति यजमानरूपेणेति वा वरदः " गौर्वै धरा " इति श्रुतेः । मरुतः सप्तावहादीन् वाहयतीति वायुवाहनः । वसति वासयतीत्याच्छादयतीति वा स्वयमिति वासुः दीव्यति क्रीडते विजिगीषते व्यवहरति द्योतते स्तूयते गच्छतीति वा देवः वासुश्चासौ देवश्च वासुदेवः " छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः । वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः । वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः" इत्युद्योगपर्वणि । " सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते । सर्वाणि तत्र भूतानि वसन्ति परमात्मनि । भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः " इति च विष्णुपुराणे । बृहन्तो भानवो यस्य चंद्रसूर्यादिगामिनः । विश्वं जगद्भासयति स बृहद्भानुरुच्यते । आदिः कारणं स चासौ देवश्चेत्यादिदेवः द्योतनादिगुणवान् वा देवः । सुरशत्रूणां पुराणां दारणात्स पुरंदरः । " याचं यमपुरंदरौ च " इति भगवता पाणिनिना निपातनात् ॥ ४९ ॥

**अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ॥**
**अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५० ॥**

शोकादिषडूर्मिवर्जितोऽशोकः । संसारसागरात्तारयतीति तारणः । गर्भजन्मजरामृत्युलक्षणाद्भयात् तारयतीति तारः । शूरो विक्रमवत्तया । शूरस्यापत्यं वासुदेवरूपः यद्वा शूरकलोद्भवाच्छौरिः । जनानां जंतूनामीश्वरो जनेश्वरः । आत्मत्वेन हि सर्वेषामनुकूलः न हि स्वस्मिन्प्रातिकूल्यं स्वयमाचरतीत्यनुकूलः । धर्मत्राणाय शतमावर्तनानि

प्रादुर्भावा अस्येति शतावर्तः यद्वा नाडीशते प्राणरूपेणावर्तत इति वा । पद्मं हस्ते विद्यते इति पद्मी । पद्मनिभे ईक्षणे दृशावस्येति पद्मनिभेक्षणः ॥ ५० ॥

**पद्मनाभोऽरविंदाक्षः पद्मगर्भः शरीरभृत् ॥**
**महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५१ ॥**

पद्मस्य नाभौ मध्ये कर्णिकायां स्थित इति पद्मनाभः । अरविंदसदृशे अक्षिणी अस्येति अरविंदाक्षः । पद्मस्य हृदयाख्यस्य मध्ये उपास्यत्वात्पद्मगर्भः । पोषयन्नरूपेण प्राणरूपेण वा शरीरिणां शरीराणि धारयच्छरीरभृत्, स्वया मायया शरीराणि बिभर्तीति वा शरीरभृत् । महती ऋद्धिर्विभूतिरस्येति महर्द्धिः । प्रपंचरूपेण ऋद्धः । वृद्धः पुरातन आत्मा यस्येति वृद्धात्मा । महती अक्षिणी महान्त्यक्षीणि वास्येति महाक्षः । गरुडांको ध्वजो यस्येति गरुडध्वजः ॥ ५१ ॥

**अतुलः शरभो भीमः समयज्ञो हविर्हरिः ॥**
**सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिंजयः ॥ ५२ ॥**

तुला उपमानमस्य न विद्यते इत्यतुलः "न तस्य प्रतिमास्ति यस्य नाम महद्यशः" इति श्रुतेः । "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इति स्मृतेश्च । शरीराणि शीर्यमाणत्वात्तेषु प्रत्यगात्मतया भातीति शरभः । बिभेत्यस्मात्सर्वमिति भीमः 'भीमादयोऽपादाने' इति पंचमी । समयं मरणयोगं जानाति सृष्टिस्थित्यंतकालवित्' षट्समयान् जानातीति वा समयज्ञः सर्वभूतेषु समत्वं यजनं साध्वस्येति वा । "समत्वमाराधनमच्युतस्य" इति प्रह्लादवचनम । यज्ञेषु हविर्भागं हरतीति हविर्हरिः "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति भगवद्वचनात् । अथवा हूयते हविषेति हविः "अबध्न पुरुष पशुं" इति हविष्ट्वं श्रूयते। स्मृतिमात्रेण पुंसां पापं हरतीति हरिद्वर्णत्वाद्वा हरिः "हराम्यघं च स्मर्तॄणां हविर्भागं क्रतुष्वहम् । वर्णश्च मे हरिर्वेति तस्माद्धरिरहं स्मृतः" इति

भगवद्वचनात् । सर्वलक्षणैः प्रमाणैः लक्षणं ज्ञानं जायते यत्तद्विनिर्दिष्टं सर्वलक्षणलक्षणं, तत्र साधुः सर्वलक्षणलक्षण्यः तस्यैव परमार्थत्वात् । लक्ष्मीः अस्य वक्षसि नित्यं वसतीति लक्ष्मीवान् । समितिं युद्धं जयतीति समितिंजयः ॥ ५२ ॥

**विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ॥**
**महीधरो महाभागो वेगवानमिताशनः ॥ ५३ ॥**

विगतः क्षरो नाशो यस्यासौ विक्षरः । स्वच्छंदतया रोहितां मूर्तिं मत्स्यमूर्तिं वा वहन् रोहितः । मुमुक्षवः तं देवं मार्गयन्ति इति मार्गः । परमानंदो येन प्राप्यते स मार्गः इति वा । उपादानं निमित्तं च कारणं स एवेति हेतुः । दमादिसाधनेन उदरः उत्कृष्टा मतिर्या तया गम्यते इति दामोदरः । " दमाद्दामोदरं विदुः " इति महाभारते । यशोदया दाम्नोदरे बद्ध इति वा । " तयोर्मध्यगतं बद्धं दाम्ना गाढं तयोदरे । ततश्च दामोदरतां स ययौ दामबंधनात् " इति ब्रह्मपुराणे । " दामानि लोकनामानि तानि यस्योदरांतरे । तेन दामोदरो देवः " इति व्यासवचनाद्वा दामोदरः । सर्वानभिभवति क्षमते इति वा सहः । महीं गिरिरूपेण धरत इति महीधरः । " वनानि विष्णुर्गिरयो दिशश्च " इति विष्णुपुराणे । स्वेच्छया धारयन्देहं महान्ति उत्कृष्टानि भोजनानि भोगजन्यानि भुंक्ते इति महाभागः । महान् भागः भाग्यं अस्य अवतारेष्विति वा महाभागः । वेगो जवः तद्वान् वेगवान् । " अनेजदेकं मनसो जवीयः " इति श्रुतेः । संहारसमये विश्वमश्नातीति अमिताशनः ॥ ५३ ॥

**उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ॥**
**करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ५४ ॥**

प्रपञ्चोत्पत्त्युपादानकारणत्वादुद्भवः उद्भूतो भवति संसारादिति वा । सर्गकाले प्रकृतिं पुरुषं च प्रविश्य क्षोभयामासेति क्षोभणः । " प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास भगवान् सर्गकाले व्यया-

व्ययौ " इति विष्णुपुराणे । यतो दीव्यति क्रीडति सर्गादिभिर्जिगीषतेऽसुरादीन् व्यवहरति सर्वभूतेषु आत्मतया द्योतते स्तूयते स्तुत्यैः सर्वत्र गच्छति तस्माद्देवः । " एको देवः " इति मंत्रवर्णात् । श्रीर्विभूतिर्यस्योदरान्तरे जगद्रूपा स्थिता स श्रीगर्भः । परमश्चासौ ईशनशीलश्चेति परमेश्वरः । " समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् " इति भगद्वचनात् । जगदुत्पत्तौ साधकतमं करणं उपादानकारणं निमित्तकारणं चेति कारणम् । कर्ता स्वतंत्रः । विचित्रं भुवनं कृतवानिति विकर्ता । स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यत इति गहनः । गूहते संवृणोति स्वरूपादीनि माययेति गुहः । ' नाहं प्रकाशः सर्वस्य योगमायासमावृतः " इति भगवद्वचनात् ॥ ५४ ॥

**व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ॥**
**परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ५५ ॥**

संविन्मात्रस्वरूपत्वाद्व्यवसायः । यस्मिन्व्यवस्थितिः सर्वस्येति व्यवस्थानः । लोकपालाद्यधिकारजरायुजाण्डजस्वेदजोद्भिज्जब्राह्मणक्षत्रियवैश्यशूद्रावान्तरवर्णब्रह्मचारिगृहस्थवानप्रस्थसंन्यासलक्षणाश्रमतद्धर्मादिकान् विभज्य करोतीति वा व्यवस्थानः ' कृत्यल्युटो बहुलं ' इति बहुलग्रहणात्कर्तरि ल्युट्प्रत्ययः । यत्र भूतानां संस्थितिः प्रलयात्मिका समीचीनं स्थानमस्येति वा संस्थानः । ध्रुवादीनां कर्मानुरूपं स्थानं ददातीति स्थानदः । अविनाशित्वात् ध्रुवः । परा ऋद्धिर्विभूतिरस्येति परार्द्धिः परा मा लक्ष्मीः शोभाऽस्येति परमः सर्वोत्कृष्टो वा अनन्याधीनसंसिद्धित्वात्संविदात्मतया परमस्पष्टः । परमानंदैकरूपत्वात्तुष्टः । सर्वसंपूर्णत्वात्पुष्टः । ईक्षणं दर्शनं यस्य सर्वं शुभं शुभकरं—नराणां मुमुक्षूणां मोक्षदं, भोगार्थिनां भोगदं सन्देहविच्छेदकारणं, पावनं, हृदयग्रन्थेर्विच्छेदकरं सर्वकर्मणां क्षपणं, अविद्यानिवर्तकं, स शुभेक्षणः । " भिद्यते हृदयग्रन्थिः " इत्यादिस्मृतेः ॥ ५५ ॥

**रामो विरामो विरजो मार्गो नेयो नयोऽनयः ॥**

**वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः॥ ५६ ॥**

नित्यानंदोऽस्मिन्योगिनो रमन्त इति रामः।" रमन्ते योगिनो यस्मिन्नित्यानंदे चिदात्मनि । इति रामपदेनैतत्परं ब्रह्माभिधीयते " इति पद्मपुराणे । स्वेच्छया वपुर्वहन् वा दाशरथी रामः । विरामः अवसानं प्राणिनां यस्मिन्निति विरामः । विगतं रजो यस्य विषयसेवायामिति विरजः ' विरजः पर आकाशात् " इति श्रुतेः । यं विदित्वामृतत्वाय कल्पन्ते मुमुक्षवः स एव पंथा मार्गः " नान्यः पंथा विद्यतेऽयनाय " इति श्रुतेः । मार्गेण सम्यक्ज्ञानेन जीवः परमात्मतया नीयत इति नेयः । नयतीति नयो नेता इति त्रिरूपः परिकल्प्यते । नास्य नेता विद्यते इत्यनयः । इति नाम्नां चतुर्थं शतं विवृतम् । विक्रमशालित्वाद्वीरः । शक्तिमतो विरिंच्यादीनामपि शक्तिमत्त्वाच्छक्तिमतां श्रेष्ठः । सर्वभूतानां धारणाद्धर्मः " अणुरेष धर्मः " इति श्रुतेः। धर्मैराराध्यत इति वा धर्मः । श्रुतयः स्मृतयश्च यस्याज्ञाभूताः स एव सर्वधर्मविदामुत्तमः इति धर्मविदुत्तमः ।। ५६ ।।

**वैकुंठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ॥**

**हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७ ॥**

विविधा कुंठा गतेः प्रतिहतिर्विकुंठा विकुंठायाः कर्तेति वैकुंठः जगदारंभे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रत्यबध्नादिति । "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्धं वैकुंठत्वं ततो मम " इति शान्तिपर्वणि । सर्वस्मात्पुरा सदनात्सर्वपापस्य सादनाद्वा पुरुषः । " स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्तस्मात्पुरुषः । " स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः " इति श्रुतेः । प्राणिति क्षेत्रज्ञरूपेण प्राणात्मना चेष्टयन्वा प्राणः । चेष्टां करोति श्वसनरूपेणेति विष्णुपुराणे । द्यति खंडयति प्राणिनां प्राणान्प्रलयादिष्विति प्राणदः । प्रणौति प्रणयतीति वा प्रणवः "तस्मा-

दोमिति प्रणौति" इति श्रुतेः । प्रणम्यते इति वा प्रणवः । " प्रणमन्तीह यं वेदास्तस्मात्प्रणव उच्यते " इति सनत्कुमारवचनात् । प्रपंचरूपेण विस्तृतत्वात्पृथुः । हिरण्यगर्भसंभूतिकारणं हिरण्मयमंडं यद्वीर्यसंभूतं तदस्य गर्भ इति हिरण्यगर्भः । त्रिदशशत्रून् हन्तीति शत्रुघ्नः । कारणत्वेन सर्वकार्याणां व्यापनाद्व्याप्तः । वाति गंधं करोति वायुः "पुण्यो गंधः पृथिव्यां च " इति भगवद्वचनात् । " अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ' इति उद्योगपर्वणि । " द्यौरंतरिक्षं पृथिवी वाऽधस्तयोर्यस्मादजायत मध्ये वैराजरूपेण " इति वाऽधोक्षजः । अधोभूते प्रत्यक्प्रवाहिते अक्षगणे जायत इति अधोक्षजः । " अधोभूते ह्यक्षगणे प्रत्यग्रूपप्रवाहिते जायते तस्य वै ज्ञानं तेनाधोक्षज उच्यते " ॥५७॥

**ऋतुः सुदर्शनः कालः, परमेष्ठी परिग्रहः ॥**
**उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ५८ ॥**

कालात्मना ऋतुशब्देन लक्ष्यत इति ऋतुः । शोभनं निर्वाणफलं दर्शनं ज्ञानमस्येति सुदर्शनः । शुभे दर्शने ईक्षणे पद्मपत्रायते अस्येति वा । स्वेच्छया सुंदरं देहं वहति सुखेन दृश्यते भक्तैरिति वा सुदर्शनः । कलयति सर्वमिति कालः । " कालः कलयतामहम् " इति भगवद्वचनात् । परमे प्रकृष्टे स्वे महिम्नि हृदयाकाशे स्थातुं शीलमस्येति परमेष्ठी " परमेष्ठी विभ्राजते " इति मंत्रवर्णात् । शरणार्थिभिः परितो गृह्यते सर्वगतत्वात्परितो ज्ञायते इति वा पत्रपुष्पादिकं भक्तैरर्पितं परिगृह्णातीति वा परिग्रहः । सूर्यादीनामपि भयहेतुत्वादुग्रः । " भीषास्माद्वातः पवते भीषोदेति सूर्यः" इति श्रुतिः । संवसन्ति भूतान्यस्मिन्निति संवत्सरः । जगद्रूपेण वर्धमानत्वात्सर्वकर्माणि क्षिप्रं करोतीति वा दक्षः । संसारसागरे क्षुत्पिपासादिषडूर्मिभिस्तरंगितैः अविद्याद्यैर्महाक्लेशैर्मदादिभिरुपक्लेशैश्च वशीकृतानां विश्रान्तिं कांक्षमाणानां विश्रामं मोक्षं करोतीति विश्रामः । विश्वस्माद्दक्षिणः शक्तो विश्वेषु कर्मसु दाक्षिण्याद्वा विश्वदक्षिणः ॥ ५८ ॥

**विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ॥**
**अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ५९ ॥**

विस्तीर्यन्ते समस्तानि जगन्ति यस्मिन्निति विस्तारः । स्थितिशीलत्वात्स्थावरः स्थितिशीलानि पृथिव्यादीनि तिष्ठन्त्यस्मिन्निति स्थाणुः स्थावरश्चासौ स्थाणुश्चेति स्थावरस्थाणुः । संविदात्मना प्रमाणं प्रत्यक्षादि प्रमाणैर्वा । अन्यथाभावव्यतिरेकेण कारणमिति बीजमव्ययम् । सुखरूपत्वात्सर्वैरर्थ्यत इति अर्थः । न विद्यते अर्थः प्रयोजनमाप्तकामत्वादस्येत्यनर्थः । महान्तः कोशा अन्नमयादयः छादका अस्येति महाकोशः । महान् भोगः सुखरूपोऽस्येति महाभोगः । महद्भोगसाधनलक्षणं धनमस्येति महाधनः ॥ ५९ ॥

**अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ॥**
**नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ६० ॥**

अवाप्तसर्वकामत्वान्निर्वेदोऽस्य न विद्यत इत्यनिर्विण्णः । वैराजरूपेण स्थितः स्थविष्ठः । " अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ " इति श्रुतेः । अजन्मा अभूः अथवा भवतीति भूः भूसत्तायां संपदादित्वाद्भवतेः क्विप् । मही वा । यूपे पशुवत् समाराधनात्मका धर्मास्तत्र बध्यन्त इति धर्मयूपः । यस्मिन्नर्पिता महामखा यज्ञा निर्वाणलक्षणं फलं प्रयच्छन्तो महान्तो जायन्ते स महामखः । "नक्षत्रतारकैः सार्धं चंद्रसूर्यादयो ग्रहाः । वायुपाशमयैर्बंधैर्निबद्धा ध्रुवसंज्ञिते'।सज्योतिषां चक्रं भ्रामयंस्तारामयस्य शिंशुमारस्य पुच्छदेशे व्यवस्थितो ध्रुवः तस्य शिंशुमारस्य ज्योतिश्चक्रस्य नेमिवद्वर्तमानस्य हृदयं विष्णुरिति कथितो नक्षत्रनेमिः शिंशुमारवर्णने विष्णुहृदयमिति स्वाध्यायब्राह्मणे श्रूयते । चंद्ररूपेण नक्षत्री " नक्षत्राणामहं शशी " इति भगवद्वचनात् । समस्तकार्येषु समर्थः क्षमः क्षमत इति वा क्षमः "क्षमया पृथिवीसमः " इति वाल्मीकिवचनात् । सर्व विकारेषु क्षयितेषु स्वात्मनावस्थित इति क्षामः ' क्षायो मः ' इति निष्ठायां तकारस्य मकारादेशः ।

सृष्ट्याद्यर्थे सम्यगीहते समीहनः ॥ ६० ॥

**यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतांगतिः ॥**
**सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥**

सर्वयज्ञस्वरूपत्वाद्यज्ञः सर्वेषां देवानां यज्ञाकारेण वर्तत इति वा यज्ञः " यज्ञो वै विष्णुः " इति श्रुतेः । यष्टव्योऽप्ययमेव यज्ञफलदातृत्वादि-तीज्यः " ये यजन्ति मखैः पुण्यैर्देवतादीन् पितॄनपि । आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते " इति हरिवंशे । सर्वासु देवतासु यष्टव्यासु प्रकर्षेणायमेव यष्टव्यो मोक्षफलदातृत्वादिति महेज्यः । यूपसहितो यज्ञः क्रतुः । असनोपायिचोदनालक्षणं सत्रं सतस्त्रायत इति वा सत्रम् । सतां मुमुक्षूणां नान्या गतिरिति सतांगतिः । सर्वेषां प्राणिनां कृताकृतं सर्वं पश्यतीति स्वाभाविकेन बोधेनेति सर्वदर्शी । स्वभावेन विमुक्तश्चासावा-त्मास्येति विमुक्तात्मा ' विमुक्तश्च विमुच्यते ' इति श्रुतेः । सर्वश्चासौ ज्ञश्चेति सर्वज्ञः " इदं सर्वं यदयमात्मा " इति श्रुतेः । ज्ञानमुत्तममित्ये-तत्सविशेषणमेकं नाम ज्ञानं प्रकृष्टं अजन्यं अनवच्छिन्नं सर्वस्य साधकत-मामिति ज्ञानमुत्तमम् । " सत्यं ज्ञानमनंतं ब्रह्म " इति श्रुतेः ॥ ६१ ॥

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ॥**
**मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२ ॥**

शोभनं व्रतमस्येति सुव्रतः " सकृदेव प्रपन्नाय तवास्मीति तु याचते । अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम' इति श्रीरामायणे रामवचनम् । शोभनं मुखमस्येति सुमुखः " प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम् " इति श्री-विष्णुपुराणे । वनवासे सुमुखत्वाद्वा दाशरथी रामः सुमुखः ' स पितुर्व-चनं श्रीमानभिषेकपरं प्रियम् । मनसा पूर्वमासाद्य वाचा प्राति गृहीतः वान् । इमानि तु महारण्ये विहृत्य नव पंच च । वर्षाणि परमप्रीत-स्थास्यामि वचने तव । न वनं गन्तुकामस्य त्यजतश्च वसुंधराम् । सर्वलोकातिगस्यैव मनो रामस्य विव्यथे " इति न व्यथां प्राप्तवान् इति

रामायणे महाभारते च । सर्वविद्योपदेशेन वा सुमुखः " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इत्यादि श्रुतेः । शब्दादिस्थूलकरणरहितत्वाच्छब्दादयो ह्याकाशादीनामुत्तरोत्तरस्थूलत्वकारणानि तदभावात्सूक्ष्मः " सर्वगतं सुसूक्ष्मम् " इति श्रुतेः । शोभनो घोषो वेदात्मकोऽस्येति मेघगंभीरघोषत्वाच्च सुघोषः । सद्वृत्तानां सुखं ददात्य-सद्वृत्तानां सुखं खंडयतीति वा सुखदः । प्रत्युपकारनिरपेक्षतयोपकारित्वात्सुहृत् । निरतिशयानंदरूपत्वान्मनोहरतीति मनोहरः । " यो वै भूमा तत्सुखं नाल्पे सुखमस्ति " इति श्रुतेः । जितः क्रोधो येन स जितक्रोधः । वेदमर्यादास्थापनार्थं ननु कोपवशादित्यतस्त्रिदशशत्रून्निघ्नन्वेदमर्यादां स्थापयन् विक्रमशाली बाहुरस्येति वीरबाहुः । अधार्मिकान् विदारयन्विदारणः ॥ ६२ ॥

**स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ॥**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६३ ॥**

प्राणिनः स्वापयन्नात्मसंबोधविधुरान् मायया कुर्वन् स्वापनः । स्वतंत्रः स्ववशः । जगदुत्पत्तिस्थितिलयहेतुत्वात् आकाशवत्सर्वगतत्वाद्व्यापी " आकाशवत्सर्वगतश्च नित्यः " इति श्रुतेः । कारणत्वेन सर्वकार्याणां व्यापनाद्वा व्यापी । जगदुत्पत्त्याद्यनेकरूपाणि निमित्तविभूतिभिः अनेकधा तिष्ठन्नैकात्मा । जगदुत्पत्तिसंपत्तिविपत्तिप्रभृतिकर्माणि करोतीति नैककर्मकृत् । वसत्यत्राखिलमिति वत्सरः वत्सं रातीति वा । भक्तस्नेहित्वाद्वत्सलः ' वत्सांसाभ्यां कामबले ' इति लच्प्रत्ययविधानात् । वत्सानां पालनाद्वत्सी, जगत्पितुस्तस्य वत्सभूताः प्रजा इति वा वत्सी । रत्नानि गर्भभूतानि अस्येति समुद्रः रत्नगर्भः । धनानामीश्वरः धनेश्वरः ॥ ६३ ॥

**धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६४ ॥**

धर्मं गोपायतीति धर्मगुप् । "धर्मसंस्थापनार्थाय संभवामि युगे युगे" इति भगवद्वचनात् । धर्माधर्मविहीनोऽपि धर्ममर्यादास्थापनार्थं धर्ममेव करोतीति धर्मकृत् । धर्मान् धारयिता धर्मी । अवितथं परं ब्रह्म सत् "सदेव सौम्येदं" इति श्रुतेः । अपरं ब्रह्मासत् प्रपंचरूपेण "वाचारंभणं विकारो नामधेयम्" इति श्रुतेः । सर्वाणि भूतानि क्षरम् । कूटस्थोक्षरम् ॥ "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यये" इति भगवद्वचनात् । आत्मनि कर्तृत्वादिविज्ञानं कल्पितमिति तद्वासनावकुंठितो जीवोऽविज्ञाता । आदित्यादिगता अंशवोऽस्यैवेत्ययमेव मुख्यः सहस्रांशुः । "येन सूर्यस्तपति तेजसेद्धः" इति श्रुतेः । "यदादित्यगतं तेजः" इत्यादिस्मृतेश्च । विशेषेण शेषदिग्गजभूधरान् सर्वभूतानि वा विदधतीति विधाता । नित्यनिष्पन्नचैतन्यरूपत्वात्कृतलक्षणः, कृतानि लक्षणानि शास्त्राण्यनेनेति वा कृतलक्षणः । 'वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्' इत्यत्रैव वक्ष्यति । सजातीयविजातीयव्यवच्छेदकं लक्षणं सर्वभावनाकृतमनेनेति वा कृतलक्षणः । आत्मनः श्रीवत्सलक्षणं वक्षसि तेन कृतमिति वा कृतलक्षणः ॥ ६४ ॥

**गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।**
**आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६५ ॥**

गभस्तिचक्रस्य मध्ये सूर्यात्मना स्थित इति गभस्तिनेमिः । सत्त्वं गुणप्रकाशकं प्राधान्येनाधितिष्ठतीति सर्वप्राणिषु तिष्ठतीति वा सत्त्वस्थः । विक्रमशीलत्वात्सिंहवात्सिंहः । नृशब्दलोपेन सत्यभामा भामेतिवद्वा नृसिंहः सिंहः । भूतानां महानीश्वरो भूतेन सत्येन स एव परमो महानीश्वरः इति वा भूतमहेश्वरः । सर्वभूतान्यादीयन्तेऽनेनेत्यादिः आदिश्चासौ देवश्चेत्यादिदेवः । सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः इति श्रुतेः । देवानां प्राधान्याद्देवानामीशो देवेशः । देवान् बिभर्तीति देवभृत् शक्रस्तस्यापि शासितेति देवभृद्गुरुः । देवानां

भरणात्सर्वविद्यानां भरणाद्वा देवभृद्गुरुः ॥ ६५ ॥

**उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥**

**शरीरभूतभृद्भोक्ता कपींद्रो भूरिदक्षिणः ॥ ६६ ॥**

जन्मसंसारसागरादुत्तारयतीत्युत्तरः सर्वोत्कृष्ट इति वा उत्तरः "विश्वस्मादिंद्र उत्तरः" इति श्रुतेः। गवां पालनाद्गोपवेषधरो गोपतिः, गौर्मही तस्याः पतित्वाद्वा गोपतिः। समस्तभूतानि पालयन् रक्षको जगतः इति गोप्ता। न कर्मणा न ज्ञानकर्मभ्यां वा गम्यते ज्ञानेनैव गम्यते इति ज्ञानगम्यः। कालेनापरिच्छिन्नत्वात् पुरा भवतीति पुरातनः। शरीरारंभकभूतानां भरणात् प्राणरूपधरः शरीरभूतभृत्। पालको भोक्ता, निरतिशयानंदसंदोहसंभोगाद्वा भोक्ता। इति नाम्नां पंचाशतं विवृतं। कपिर्वराहः इंद्रश्चेति कपींद्रो वराहमूर्तिः, कपीनां वानरादीनां चेंद्रः कपींद्रो राघवो वा। भूर्यो यज्ञदक्षिणाः धर्ममर्यादां दर्शयन्तो यज्ञं कुर्वतो विद्यन्ते इति भूरिदक्षिणः ॥ ६६ ॥

**सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ॥**

**विनयो जयः सत्यसंधो दाशार्हः सात्त्वतांपतिः ॥ ६७ ॥**

सोमं पिबति सर्वयज्ञेषु यष्टव्यत्वाद्देवतारूपेणेति सोमपः। धर्ममर्यादां दर्शयन् यजमानरूपेण वा सोमपः। स्वात्मामृतरसं पिबन्नमृतपः, मथितममृतमसुरैर्ह्रियमाणं रक्षित्वा देवान् पाययित्वा स्वयमप्यपिबदिति वा। सोमरूपेणौषधीः पोषयन् सोमः, उमया सह वर्तत इति शिवो वा सोमः। पुरून् बहून जयतीति पुरुजित्। विश्वरूपत्वात्पुरुः उत्कृष्टत्वात्सत्तमः पुरुश्चासौ सत्तमश्चेति पुरुसत्तमः। विनयं दंडं दुष्टानां प्रजानां करोतीति विनयः समस्तान् जयतीति जयः। सत्या संधा संकल्पो अस्येति सत्यसंधः 'सत्यसंकल्पः' इति श्रुतेः। दाशो दानं तदर्हतीति दाशार्हः, दाभृदान इति धातुपाठाद्दाशार्हकुलोद्भवत्वाद्वा दाशार्हः। सात्त्वतं नाम तंत्रं तत्करोति तदाचष्ट इति णिचिं कृते 'क्विप्चे' ति क्विप्प्रत्यये कृते च 'णेर-

निति ' इति णिलोपे च कृते पदं सात्वत् तेषां पतिर्योगक्षेमकर इति सात्वतांपतिः ॥ ६७ ॥

**जीवो विनयिताऽसाक्षी मुकुंदोमितविक्रमः ।**
**अंभोनिधिरनंतात्मा महोदधिशयोंऽतकः ॥ ६८ ॥**

प्राणान् क्षेत्रज्ञरूपेण धारयन् जीवः । विनयित्वं विनयिता तां च साक्षात्पश्यति प्रजानामिति विनयितासाक्षी अथवा नयनेर्गन्तृवाचिनो रूपं विनयिता असाक्षी असाक्षाद्द्रष्टा आत्मातिरिक्तं वस्तु न पश्यतीत्यर्थः । मुक्तिं ददातीति मुकुंदः पृषोदरादित्वात्साधुत्वम् । वर्णाक्षरसाम्यान्निरुक्तिवचनान्नैरुक्तानां मुकुंद इति निरुक्तिः । अमिता अपरिच्छिन्ना विक्रमास्त्रयः पादविक्षेपा अस्येत्यमितविक्रमः, अमितं विक्रमणं शौर्यमस्येति वाऽमितविक्रमः । अंभांसि देवादयोऽस्मिन्निधीयन्त इत्यंभोनिधिः " तानि ह वा एतानि चत्वार्यंभांसि देवा मनुष्याः पितरोऽसुराः " इति श्रुतेः । सागरो वा " सरसामस्मि सागरः " इति भगवद्वचनात् । देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वादनंतात्मा । संहृत्य सर्वभूतान्येकार्णवं जगत्कृत्वाधः शेते इति महोदधिशयः । अंतं करोति भूतानामित्यंतकः " तत्करोति तदाचष्टे " इति णिचि प्रत्यये कृते ण्वुलतृचौ इति ण्वुल् तस्य युवोरनाकावित्यकादेशः ॥ ६८ ॥

**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।**
**आनंदो नंदनो नंदः सत्यधर्मा त्रिविक्रमः ॥ ६९ ॥**

आद्विष्णोरजायतेति कामोऽजः । महः पूजा तदर्हत्वान्महार्हः । स्वभावेनैव भाव्यो नित्यनिष्पन्नरूपत्वादिति स्वाभाव्यः । निर्जिता अमित्रा अंतर्वर्तिनः रागद्वेषादयो बाह्या रावणादयश्च येनासौ जितामित्रः । स्वात्मामृतरसास्वादान्नित्यं प्रमोदते ध्यायिना ध्यानमात्रेण प्रमोदं कुरुत इति वा प्रमोदनः । आनंदस्वरूपमस्येत्यानंदः " एतस्यैवानंदस्यान्यानि भूतानि

मात्रामुपजीवन्ति " इति श्रुतेः । नंदयतीति नंदनः । सर्वाभिरुपपत्तिभिः समृद्धो नंदः । सुखं वैषयिकं नास्य विद्यत इति वा नंदः । " यो वै भूमा तत्सुखं नाल्पे सुखमस्ति " इति श्रुतेः । सत्या धर्मज्ञानादयोऽस्येति सत्यधर्मा । त्रयो विक्रमास्त्रिषु लोकेषु क्रान्ता यस्य स त्रिविक्रमः "त्रीणि पदा विचक्रमे " इति श्रुतेः । " त्रिरित्येव त्रयो लोकाः कीर्तिता मुनिसत्तमैः । क्रमसे तांस्तया सर्वांस्त्रिक्रमोऽसि जनार्दन " इति हरिवंशे ॥ ६९ ॥

**महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ॥**
**त्रिपदस्त्रिदशाध्यक्षो महाशृंगः कृतान्तकृत् ॥ ७० ॥**

महर्षिः कपिलाचार्य इति सविशेषणमेकं नाम । महांश्चासावृषिश्चेति महर्षिः कृत्स्नस्य वेदस्य दर्शनात् अन्ये तु वेदैकदेशदर्शनादृषयः कपिलश्चासौ सांख्यस्य शुद्धतत्त्वविज्ञानस्याचार्यश्चेति कपिलाचार्यः । " शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते " इति व्यासस्मृतेः । " ऋषिप्रसूतं कपिलं महान्तम् " इति श्रुतेश्च । " सिद्धानां कपिलो मुनिः " इति स्मृतेश्च । कृतं कार्यं जगत् ज्ञः आत्मा कृतं च ज्ञश्चेति कृतज्ञः । मेदिन्याः भूम्याः पतिर्मेदिनीपतिः । त्रीणि पदान्यस्येति त्रिपदः " त्रीणि पदा विचक्रमे " इति श्रुतेः । गुणावेशेन संजातास्तिस्रो दशा अवस्थास्तासामध्यक्ष इति त्रिदशाध्यक्षः । मत्स्यरूपी महति शृंगे प्रलयांभोधौ नावं बद्ध्वा चिक्रीड इति महाशृंगः । कृतस्यान्तं संहारं करोतीति कृतान्तकृत् , कृतान्तं मृत्युं कृंतति वा कृतान्तकृत् ॥ ७० ॥

**महावराहो गोविंदः सुषेणः कनकांगदी ॥**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७१ ॥**

महांश्चासौ वराहश्चेति महावराहः । गोभिर्वाणीभिर्विंदते वेत्ति वेदान्तवाक्यैरिति वा गोविंदः । " गोभिरेव यतो वेद्यो गोविंदः स उदाहृतः " इति शोभना सेना गणात्मिका यस्येति सुषेणः । कनकमयान्यंगदानि यस्य स

कनकांगदी । रहस्योपनिषद्विद्याबोधत्वाद्गुहायां हृदयाकाशे निहित इति गुह्यः । ज्ञानैश्वर्यबलादिभिर्गंभीरो गभीरः । दुःप्रवेशत्वाद्गहनः; अवस्थात्रयभावाभावसाक्षित्वाद्गहनो वा । वाङ्मनसागोचरत्वाद्गुप्तः । " एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते " इति श्रुतेः । " मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् । धारयंल्लोकरक्षार्थमुक्तश्चक्रगदाधरः " इति ॥ ७१ ॥

**वेधाः स्वांगोऽजितः कृष्णो दृढः संकर्षणोऽच्युतः ॥**
**वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७२ ॥**

विदधाति सृजतीति विधाता वेधाः पृषोदरादित्वात्साधुत्वम् । स्वयमेव कार्यस्य कारणेंऽगं सहकार्यस्येति स्वांगः । न केनाप्यवतारेषु जित इत्यजितः । कृष्णद्वैपायनः कृष्णः । ' कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेत् ' इति विष्णुपुराणवचनात्।स्वरूपसामर्थ्यादेः प्रच्युत्यभावात् दृढः । संहारसमये युगपत्प्रजाः संकर्षतीति संकर्षणः न च्योतति स्वपदादित्यच्युतः संकर्षणोऽच्युतः संकर्षणोच्युत इति नामैकं सविशेषणं । वृणोति वियते वा वरुणः," इमं मे वरुण श्रुधी हवम् " इति मंत्रवर्णात् । " वरुणो यादसामहमिति भगवद्वचनात् । वरुणस्यापत्यं वसिष्ठोऽगस्त्यो वा वारुणः । वृक्ष इवाचलतया स्थित इति वृक्षः " वृक्षवत्स्तब्धो दिवि तिष्ठत्येकः " इति श्रुतेः । व्याप्त्यर्थादक्षतेर्धातोः पुष्कराक्षः, हृदयपुंडरीके चिन्तितः चित्स्वरूपेण प्रकाशत इति वा पुष्कराक्षः । सृष्टिस्थित्यंतकर्माणि मनसैव करोतीति महामनाः । "मनसैव जगत्सृष्टिं संहारं च करोति यः" इति विष्णुपुराणे ॥ ७२ ॥

**भगवान् भगहाऽऽनंदी वनमाली हलायुधः ॥**
**आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३ ॥**

" ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्य च मोक्षस्य षण्णां भग इतीरिणा " । स यस्यास्तीति भगवान् । " उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवा-

निति" इति विष्णुपुराणे। ऐश्वर्यादिकं संहारसमये हन्तीति भगहा। सुखरूपत्वादानंदी, सर्वसंपत्समृद्धत्वादानंदी वा। भूततन्मात्रनिर्मितां वैजयन्त्याख्यां वनमालां वहन् वनमाली। हलमायुधमस्येति हलायुधो बलभद्राकृतिः। अदित्यां कश्यपाद्वामनरूपेण जात इत्यादित्यः। ज्योतिषि सवितृमंडले स्थितो ज्योतिरादित्यः, ज्योतिश्चासावादित्यश्चेति वा। द्वंद्वानि शीतोष्णादीनि सहत इति सहिष्णुः। गतिश्चासौ सत्तमश्चेति गतिसत्तमः॥ ७३॥

**सुधन्वा खंडपरशुर्दारुणो द्रविणप्रदः॥**

**दिविस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः॥ ७४॥**

शोभनमिंद्रियादिमयं शार्ङ्गं धनुरस्यास्तीति सुधन्वा। शत्रूणां खंडनात् खंडः परशुरस्य जामदग्न्याकृतेरिति खण्डपरशुः, शिवो वा। अखण्डः परशुरस्येति वा। सन्मार्गविरोधिनां दारुणत्वाद्दारुणः। द्रविणं वांछितं वित्तं भक्तेभ्यः प्रददातीति द्रविणप्रदः। दिवस्पर्शनाद्दिविस्पृक्। सर्वदृशां सर्वज्ञानानां विस्तारकृद्व्यासः सर्वदृग्व्यासः अथवा सर्वा च सा दृक्चेति सर्वदृक् सर्वाकारं ज्ञानं, सर्वस्य द्रष्टृत्वाद्वा सर्वदृक्। ऋग्वेदादिविभागेन चतुर्धा वेदा व्यस्ताः, आद्यो वेदः एकविंशतिधा कृतः, द्वितीय एकोत्तरशतधा कृतः, सामवेदः सहस्रधा कृतः, अथर्ववेदः नवधा शाखाभेदेन कृत अन्यानि पुराणानि व्यस्तान्यनेनेति व्यासः ब्रह्मा। वाचस्पतिरयोनिजः इति सविशेषणमेकं नाम॥ ७४॥

**त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्॥**

**संन्यासकृच्छमः शान्तो निष्ठा शान्तिःपरायणम्॥ ७५॥**

वेदव्रतसमाख्यातैस्त्रिभिः सामभिः स्तुत इति त्रिसामा। साम गायतीति सामगः। वेदानां मध्ये सामवेदः साम "वेदानां सामवेदोऽस्मि इति" भगवद्वचनात्। सर्वदुःखोपशमलक्षणं परमानंदरूपं निर्वाणं। संसाररोगस्यौषधं भेषजं, यद्वा बिभेत्यस्मादिति भेषजम्। संसाररोगनिर्मोक्षकारिणीं परां विद्यामुप-

दिशतीति भिषक् "भिषक्तमं त्वा भिषजां शृणोमि" इति श्रुतेः । मोक्षार्थं चतुर्थमाश्रमं कृतवानिति संन्यासकृत् । संन्यासिनां प्राधान्येन ज्ञानसाधनं शममाचष्ट इति शमः । "यतीनां प्रशमो धर्मो नियमो वनवासिनाम् । दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्" इति स्मृतेः । 'तत्करोति तदाचष्टे, इति णिचि पचाद्यचि कृते रूपं शमः । सर्वभूतानां शमयितेति वा शमः । विषयसुखेष्वसंगतया शान्तः । "निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः । प्रलये नितरां तत्रैव तिष्ठन्ति भूतानीति निष्ठा । समस्ता विद्या निवृत्तिः शान्तिः सा ब्रह्मैव । परमुत्कृष्टमयनं स्थानं पुनरावृत्ति-शंकारहितमिति परायणम् पुल्लिंगपक्षे बहुव्रीहिः ॥ ७५ ॥

**शुभांगः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ॥**
**गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७६ ॥**

सुंदरां तनुं धारयन् शुभांगः । रागद्वेषादिनिर्मोक्षलक्षणां शान्तिं ददातीति शान्तिदः । सर्गादौ सर्वभूतानि ससर्जेति स्रष्टा । कौ भूम्यां मोदत इति कुमुदः। कोः पृथिव्याः वलनात् संवरणात् कुवलं जलं तस्मिन् शेषोदरे शेत इति कुवलेशयः 'शयवासवासिष्वकालात्' इत्यलुक् सप्तम्याः, कुवलस्य बदरीफलस्य मध्ये शेते तक्षकः सोऽपि तस्य विभूतिरिति वा हरिः कुवलेशयः, कौ भूम्यां संशेरत इति सर्पाणामुदरं कुवलं तस्मिन् शेषोदरे शेत इति वा कुवलेशयः । गवां वृद्ध्यर्थं गोवर्धनं धृतवानिति गोभ्यो हितो गोहितः, गोर्भूमेर्भारावतरणे स्वेच्छया शरीरग्रहणं कुर्वन् वा गोहितः। गोर्भूम्यादेः पतिर्गोपतिः । रक्षको जगत इति गोप्ता, स्वात्मानं स्वमायया स्वमात्मानं संवृणोतीति वा गोप्ता । सर्वकामाभिवर्षके अक्षिणी अस्येति, वृषभो धर्मः स एव वा दृष्टिरस्येति वृषभाक्षः । वृषो धर्मः प्रियो यस्य स वृषप्रियः । 'वा प्रियस्य' इति पूर्वनिपातविकल्पविधानात् परनिपातः ७६

**अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ॥**
**श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ॥७७॥**

देवासुरसंग्रामान्न निवर्तत इत्यनिवर्ती, वृषप्रियत्वाद्धर्मान्न निवर्तत इति वा अनिवर्ती। स्वभावतो विषयेभ्यो निवृत्त आत्मा मनोऽस्येति निवृत्तात्मा। विस्तृतं जगत् संहारसमये सूक्ष्मरूपेण संक्षिपन् संक्षेप्ता। उपात्तस्य परिरक्षणं क्षेमं करोतीति क्षेमकृत्। नामस्मृतिमात्रेण पावयन् शिवः। इति नाम्नां षष्ठं शतं विवृतम्। श्रीवत्ससंज्ञं चिह्नमस्य वक्षसि स्थितमिति श्रीवत्सवक्षाः। अस्य वक्षसि श्रीरनपायिनी वसतीति श्रीवासः। अमृतमथने सर्वान् सुरासुरादीन् विहाय श्रीरेनं वरयामासेति श्रीपतिः॥ श्रीः परा शक्तिः तस्याः पतिरिति वा। "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः। ऋग्यजुःसामलक्षणा श्रीर्येषां तेषां श्रीमतां विरिंच्यादीनां प्रधान इति श्रीमतांवरः "ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्" इति श्रुतेः॥ ७७॥

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः॥**

**श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः॥ ७८॥**

श्रियं ददाति भक्तानामिति श्रीदः। श्रिय ईशः श्रीशः। श्रीमत्सु नित्यं वसतीति श्रीनिवासः श्रीशब्देन श्रीमन्तो लक्ष्यन्ते। सर्वशक्तिमयेऽस्मिन्नखिला श्रियो निधीयन्ते इति श्रीनिधिः। कर्मानुरूपेण विविधाः श्रियः सर्वभूतानां भावयतीति श्रीविभावनः। सर्वभूतानां जननीं श्रियं वक्षसि वहन् श्रीधरः। स्मरतां स्तुवतामर्चयतां च भक्तानां श्रियं करोतीति श्रीकरः। अनपायिसुखावाप्तिलक्षणं श्रेयः तच्च परस्यैव रूपमिति श्रेयः। श्रियोऽस्य सन्तीति श्रीमान्। त्रयाणां लोकानामाश्रयत्वाल्लोकत्रयाश्रयः॥ ७८॥

**स्वक्षः स्वंगः शतानंदो नंदिर्ज्योतिर्गणेश्वरः।**

**विजितात्माऽविधेयात्मा सत्कीर्तिश्छिन्नसंशयः॥ ७९॥**

शोभने पुंडरीकाभे अक्षिणी अस्येति स्वक्षः। शोभनान्यंगानि अस्येति स्वंगः। एक एव परमानंद उपाधिभेदाच्छतधा भिद्यत इति शतानंदः। "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। परमा-

नंदविग्रहो नंदी । ज्योतिर्गणानामीश्वरो ज्योतिर्गणेश्वरः । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " इति श्रुतेः । " यदादित्यगतं तेजः " इत्यादिस्मृतेश्च । विजित आत्मा मनो येन स विजितात्मा । न केनापि विधेय आत्मा स्वरूपमस्येति अविधेयात्मा । सती अवितथा कीर्तिरस्येति सत्कीर्तिः । करतलामलकवत्सर्वं साक्षात्कृतवतः क्वापि संशयो नास्तीति छिन्नसंशयः ॥ ७९ ॥

**उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतास्थिरः ।**
**भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ८० ॥**

सर्वभूतेभ्यः समुद्रिक्तत्वादुदीर्णः । सर्वतः सर्वं स्वचैतन्येन पश्यतीति सर्वतश्चक्षुः " विश्वतश्चक्षुः " इति श्रुतेः । न विद्यतेऽस्येशः इत्यनीशः " न तस्येशः कश्चन " इति श्रुतेः । शश्वद्भवन्नपि न विक्रियां कदाचिदुपैतीति शाश्वतस्थिर इति नामैकम् । लंकां प्रति मार्गमन्वेषमाणः सागरं प्रति भूमौ शेते इति भूशयः । स्वेच्छयावतारैर्बहुभिर्भूमिं भूषयन् भूषणः । भूतिर्भवनं सत्ता विभूतिर्वा सर्वविभूतीनां कारणत्वाद्वा भूतिः । विगतः शोकोऽस्य परमानंदैकरूपत्वादिति विशोकः । स्मृतिमात्रेण भक्तानां शोकं नाशयतीति शोकनाशनः ॥ ८० ॥

**अर्चिष्मानर्चितः कुंभो विशुद्धात्मा विशोधनः ।**
**अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥**

अर्चिष्मन्तो यदीयेनार्चिषा चंद्रसूर्यादयः स एव मुख्योऽर्चिष्मान् । सर्वलोकादिभिर्विरिंच्यादिभिरर्चित इत्यर्चितः । कुंभवदस्मिन्सर्वं प्रतिष्ठितमिति कुंभः । गुणत्रयातीततया विशुद्ध आत्मास्येति विशुद्धात्मा । स्मृतिमात्रेण पापानां क्षपणात् विशोधनः । चतुर्व्यूहेष्वनिरुद्धः । न निरुध्यते शत्रुभिः कदाचिदिति वाऽनिरुद्धः । प्रतिपक्षोऽस्य न विद्यत इत्यप्रतिरथः । प्रकृष्टं द्युम्नं द्रविणमस्येति प्रद्युम्नः चतुर्व्यूहात्मा । अमितो विक्रमोऽस्येत्यमितविक्रमः ॥ ८१ ॥

**कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।**
**त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ८२ ॥**

कालनेमिनमसुरं निजघानेति कालनेमिनिहा । गणं विना शत्रूणां कुलानि निहत्य राजत इति वीरः, विक्रमशालित्वाद्वा वीरः शूरवीर-विक्रान्ताविति धातुपाठात् । शूरकुलोद्भवत्वाच्छौरिः । शूरजनानां वासवादीनां शौर्यातिशयेनेष्ट इति शूरजनेश्वरः । त्रयाणां लोकानामंतर्यामितयात्मेति त्रिलोकात्मा, त्रयो लोका अस्मात्परमार्थतो न भिद्यन्ते इति वा त्रिलोकात्मा । त्रयो लोकास्तदाज्ञप्ताः स्वेषु स्वेषु कर्मसु वर्तन्त इति त्रिलोकेशः । केशसंज्ञिता सूर्यादिसंक्रान्ता अंशवस्तद्वत्तया केशवः । "अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः" इति महाभारते । ब्रह्मविष्णुशिवाख्याः शक्तयः केशसंज्ञिताः तद्वत्तया वा केशवः " त्रयः केशिनः " इति श्रुतेः । " मत्केशो वसुधातले " इति केशशब्दः शक्तिपर्यायत्वेन प्रयुक्तः । " को ब्रह्मेति समाख्यात ईशोहं सर्वदेहिनाम् । आवां तवांशसंभूतौ तस्मात्केशवनामवान् " इति हरिवंशे । केशिनामानमसुरं हतवानिति केशिहा । सहेतुकं संसारं हरतीति हरिः ॥ ८२ ॥

**कामदेवः कामपालः कामी कान्तः कृतागमः ॥**
**अनिर्देश्यवपुर्विष्णुर्वीरोऽनंतो धनंजयः ॥ ८३॥**

धर्मादिपुरुषार्थचतुष्टयं वांछद्भिः काम्य इति कामः स चासौ देवश्चेति कामदेवः । कामिनां कामान् पालयतीति कामपालः । पूर्णकामत्वात्कामी, कामोऽस्यास्तीति वा " सोऽकामयत " इति श्रुतेः । अभिरूपतमं देहं वहन् कान्तः, द्विपरार्धान्ते कस्य हिरण्यगर्भस्य ब्रह्मणोऽतो यस्मादिति वा कान्तः । कृत आगमः श्रुतिस्मृत्यादिलक्षणो येन स कृतागमः । "वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् " इति वक्ष्यति । " श्रुतिस्मृती ममैवाज्ञे " इति भगवद्वचनात् । इदं तदीदगेवेति निर्देष्टुं

यत्र न शक्यते गुणाद्यतीतत्वाद्रूपमस्येत्यनिर्देश्यवपुः । रोदसी व्याप्य कांतिरभ्यधिका स्थितास्येति विष्णुः " व्याप्य मे रोदसी पार्थ कान्तिरभ्यधिका स्थिता । क्रमणाद्वाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः " इति महाभारते । गत्यादिमत्वाद्वीरः 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इति धातुपाठात् । व्यापित्वान्नित्यत्वात्सर्वात्मत्वाद्देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वादनंतः । " सत्यं ज्ञानमनंतं ब्रह्म " इति श्रुतेः । "गंधर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः " इति विष्णुपुराणवचनाच्चानंतः । यद्दिग्विजये प्रभूतं धनमजयत्तेन धनंजयोऽर्जुनः " पांडवानां धनंजयः " इति भगवद्वचनात् ॥ ८३ ॥

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ॥**
**ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८४ ॥**

" तपो वेदाश्च जातिश्च ज्ञानं च ब्रह्मसंज्ञितं " तेभ्योहितत्वात्तद्वेदितृत्वाद्वा ब्रह्मण्यः । तपआदीनां कर्तृत्वाद्ब्रह्मकृत् । ब्रह्मात्मना सर्वं सृजतीति ब्रह्मा । बृहत्वात् बृंहणत्वात्सत्यादिलक्षणं ब्रह्म " सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । 'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ' इति विष्णुपुराणे । तपआदीनां विवर्धनात् ब्रह्मविवर्धनः । वेदं वेदार्थं च यथावद्वेत्ति विंदत इति वा ब्रह्मवित् । ब्रह्मात्मना ब्राह्मणात्मना समस्तानां लोकानां प्रवचनं कुर्वन्वेदस्यायमिति ब्राह्मणः । ब्रह्मसंज्ञितास्तच्छेषभूता अस्य सन्तीति ब्रह्मी । वेदान् स्वात्मभूतान् जानातीति ब्रह्मज्ञः । ब्राह्मणानां प्रियो ब्राह्मणप्रियः, ब्राह्मणाः प्रिया अस्येति वा " घ्नन्तं शपन्तं पुरुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथार्हम् । स पापकृद्ब्रह्मदवाग्निदग्धो वध्यश्च दंड्यश्च न चास्मदीयः" इति भगवद्वचनात् । " यं देवं देवकी देवी वसुदेवादजीजनत् । भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः " इति च महाभारते ॥८४॥

**महाक्रमो महाकर्मा महातेजा महोरगः ॥**
**महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ८५ ॥**

महान्तः क्रमाः पादविक्षेपा अस्येति महाक्रमः " शं नो विष्णुरुरुक्रमः " इति श्रुतेः । महज्जगदुत्पत्त्यादि कर्मास्येति महाकर्मा । यदीयेन तेजसा भास्करादयस्तेजस्विनस्तन्महत्तेजोऽस्येति महातेजाः ' येन सूर्यस्तपति तेजसेद्धः ' इति श्रुतेः । " यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् " इति स्मृतेश्च । क्रौर्यशौर्यादिभिर्महद्भिः समलंकृत इति महातेजाः । महांश्चासावुरगश्चेति महोरगः " सर्पाणामस्मि वासुकिः " इति भगवद्वचनात् । महांश्चासौ क्रतुश्चेति महाक्रतुः । " यथाश्वमेधः क्रतुराट् " इति मनुवचनात् । " सोऽपि स एवेति " श्रुतेः । महांश्चासौ यज्वा चेति लोकसंग्रहार्थं यज्ञान् निर्वर्तयन् महायज्वा । महांश्चासौ यज्ञश्चेति महायज्ञः " यज्ञानां जपयज्ञोऽस्मि " इति भगवद्वचनात् । महच्च तद्धविश्चेति ब्रह्मात्मनि सर्वं जगत्तदात्मतया हूयत इति महाहविः । महाक्रतुरित्यादयो बहुव्रीहयो वा ॥ ८५ ॥

**स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ॥**
**पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ८६ ॥**

सर्वैः स्तूयते न स्तोता कस्यचिदिति स्तव्यः । अत एव स्तवप्रियः। येन स्तूयते तत्स्तोत्रं गुणसंकीर्तनात्मकम् । स्तुतिः स्तवनक्रिया । स्तोतापि स एव । प्रियो रणो यस्य यतः पंचमहायुधानि नंदकखड्गसहितानि धत्ते सततं लोकरक्षणार्थमतो रणप्रियः । सर्वैः कामैः सकलाभिः शक्तिभिश्च संपन्न इति पूर्णः । न केवलं पूर्ण एव पूरयिता च सर्वेषां संपद्भिः । स्मृतिमात्रेण कल्मषाणि क्षपयतीति पुण्यः पुण्या कीर्तिरस्य यतः पुण्यमावहत्यस्य कीर्तिर्नृणामिति पुण्यकीर्तिः । आन्तरैर्बाह्यैर्व्याधिभिः कर्मजैर्न पीडयत इति अनामयः ॥ ८६ ॥

**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ॥**
**वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८७ ॥**

मनसो वेग इव वेगोऽस्य सर्वगतत्वान्मनोजवः । चतुर्दशविद्यानां बाह्यविद्यासमयानां च प्रणेता प्रवक्ता चेति तीर्थकरः । हयग्रीवरूपेण मधुकैटभौ हत्वा विरिंचये सर्गादौ सर्वाः श्रुतीरन्याश्च विद्या उपदिशन् वेदबाह्या विद्याः सुरवैरिणां बंधनाय चोपदिशति इति पौराणिकाः कथयन्ति । वसु सुवर्णं रेतोऽस्येति वसुरेताः । " अप एव ससर्जादौ तासु वीर्यमथासृजत् । तदंडमभवद्धैमं सहस्रांशुसमप्रभम् " इति वचनात् । ब्रह्मणः कारणं परमिति वसुरेता । वसु धनं प्रकर्षेण ददाति साक्षाद्धनाध्यक्षोऽयमितरस्तु तत्प्रसादाद्धनाध्यक्ष इति वसुप्रदः । वसु प्रकृष्टं मोक्षाख्यं फलं भक्तेभ्यः प्रददातीति द्वितीयो वसुप्रदः " विज्ञानमानंदं ब्रह्म रातेर्दातुः परायणं तिष्ठमानस्य तद्विदः " इति श्रुतेः । सुरारीणां वसूनि प्रकर्षेणाधः खंडयन् वा वसुप्रदः । वसुदेवस्यापत्यं वासुदेवः । वसन्ति भूतानि तत्र तेषु वा वसतीति वसुः, छादयत्यात्मनः स्वरूपं माययेति वा वसु। अविशेषेण सर्वविषयेषु तन्मनो वसतीति वसुः तन्मनोऽस्येति वसुमनाः ब्रह्म । हविरिति तद्धविरेवेति भगवद्वचनाद्धविः ॥८७॥

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ॥**
**शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ८८ ॥**

" अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः " इति श्रुतेः ब्रह्मास्तीति ये विदुस्ते सन्तस्तैः प्राप्यते इति सद्गतिः । सती गतिर्बुद्धिः समुत्कृष्टाऽस्येति वा सद्गतिः । सती कृतिर्जगदुत्पत्त्यादिलक्षणाऽस्य यस्मात्तेन सत्कृतिः ॥ इति सप्तमं शतं विवृतम् ॥ सजातीयविजातीयस्वगतभेदरहितानुभूतिः सत्ता " एकमेवाद्वितीयम् " इति श्रुतेः । स एव परमात्मा चिदात्मको बोधो बहुधा भासमानत्वात्सद्भूतिः नानात्वप्रतीतेर्बाध्यमानत्वान्न सन्नाप्यसन् श्रौतो वा यौक्तिको वा बाधः प्रपंचस्य विवक्षितः ।

सतां तत्त्वविदां परं प्रकृष्टमयनमिति सत्परायणः । हनुमत्प्रमुखाः सैनिकाः शौर्यशालिनो यस्यां सेनायां सा शूरसेना यस्य स शूरसेनः । यदूनां प्रधानत्वाद्यदुश्रेष्ठः । सतां विदुषामाश्रय इति सन्निवासः । शोभना यमुना यमुनासंबंधिनः परिवेष्टारोऽस्येति सयामुनः । गोपालवेषधरा यमुनापरिवेष्टारः पद्मासनादयः शोभना अस्येति वा सुयामुनः ॥८८॥

**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ॥**
**दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ८९ ॥**

भूतान्यत्राभिमुख्येन वसन्तीति भूतावासः । " वसन्ति त्वयि भूतानि भूतावासस्ततो भवान् " इति हरिवंशे । जगदाच्छादयति माययेति वासुः स एव देव इति वासुदेवः । " छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः इति भगवद्वचनात् । सर्व एवासवः प्राणा जीवात्मके यस्मिन्नाश्रये निलीयन्ते स सर्वासुनिलयः । अलं पर्याप्तिः शक्तिसंपदां नास्य विद्यत इत्यनलः । धर्मविरुद्धे पथि तिष्ठतां दर्पं हन्तीति दर्पहा । धर्मवर्त्मनि वर्तमानानां दर्पं गर्वं ददातीति दर्पदः । स्वात्मामृतरसास्वादनात् नित्यं प्रमुदितो दृप्तः । न शक्या धारणा यस्य प्रणिधानादिषु सर्वोपाधिविनिर्मुक्तत्वात्तथापि तत्प्रसादतः कैश्चिद्दुःखेन धार्यते हृदये जन्मान्तरसहस्रेषु भावनायोगात्तस्माद्दुर्धरः । " क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते " इति भगवद्वचनात् । नान्तरै रागादिभिर्बाह्यैः शत्रुभिः पराजित इत्यपराजितः ॥ ८९ ॥

**विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ॥**
**अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ९० ॥**

विश्वा मूर्तिरस्य सर्वात्मकत्वादिति विश्वमूर्तिः । शेषपर्यंकशायिनोऽस्य महती मूर्तिरिति महामूर्तिः । ज्ञानमयी मूर्तिः स्वेच्छया तैजसी वा दीप्तिरस्येति दीप्तमूर्तिः कर्मनिबंधना मूर्तिरस्य न विद्यत इति अमूर्तिमान् । अवतारेषु स्वेच्छया लोकानामुपकारिणी बह्वीर्मूर्तीर्भजत इत्यनेकमूर्तिः ।

यद्यप्यनेकमूर्तित्वं तथाप्ययमीदृश इति न व्यज्यत इति अव्यक्तः । नानाविकल्पजा मूर्तयः संविदाकृतेः सन्तीति शतमूर्तिः । यतो विश्वादिमूर्तित्वमत एव शताननः ॥ ९० ॥

**एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ॥**
**लोकबंधुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९१ ॥**

परमार्थतः सजातीयविजातीयस्वगतभेदविमुक्तत्वादेकः " एकमेवाद्वितीयं " इति श्रुतेः । मायया बहुरूपत्वान्नैकः " इंद्रो मायाभिः पुरुरूप ईयते " इति श्रुतेः । सोमो यत्राभिषूयते सोऽध्वरः सवः । कशब्दः सुखवाचकः तेन स्तूयत इति कः ' कं ब्रह्म ' इति श्रुतेः । सर्वपुरुषार्थरूपत्वाद्ब्रह्मैव विचार्यमिति ब्रह्म किं । यच्छब्देन स्वतःसिद्धवस्तूद्देशवाचिना ब्रह्म निर्दिश्यते इति ब्रह्म यत् । ' यतो वा इमानि भूतानि जायन्ते ' इति श्रुतेः । तनोतीति ब्रह्म तत् । " ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः " इति भगवद्वचनात् । पद्यते गम्यते मुमुक्षुभिरिति पदं यस्मादुत्कृष्टं नास्ति तदनुत्तमं, सविशेषणमेकं नाम पदमनुत्तमामिति । आधारभूतेऽस्मिन्सकला लोका बध्यन्त इति लोकानां बंधुर्लोकबंधुः, लोकानां जनकत्वाज्जनकोपमो बंधुर्नास्तीति वा लोकानां बंधुकृत्यं हिताहितोपदेशं श्रुतिस्मृतिलक्षणं कृतवानिति वा लोकबंधुः । लोकैर्नाथ्यते याच्यते तानुपतपति तेभ्य आशास्ते तेषामीष्ट इति वा लोकनाथः । " नाथृ नाधृयाञ्चोपतापैश्वर्याशीःषु " इति धातुपाठात् । मधुकुले जातत्वान्माधवः । भक्तस्नेहवान् भक्तवत्सलः ॥ ९१ ॥

**सुवर्णवर्णो हेमांगो वरांगश्चंदनांगदी ॥**
**वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ९२ ॥**

सुवर्णस्य वर्ण इव वर्णोऽस्येति सुवर्णवर्णः । " यदा पश्य पश्यते रुक्मवर्णं " इति श्रुतेः । हेमेवांगं वपुरस्येति हेमांगः । " य एषोंऽतरादित्ये हिरण्मयः पुरुषः " इति श्रुतेः । वराणि शोभनान्यंगानि अस्येति वरांगः । चंदनाह्लादनैरंगैः केयूरैर्भूषित इति चंदनांगदी । धर्मत्राणाय वीरानसुरमुख्यान्

हिरण्यकशिपुप्रभृतीन् रागादींश्च हन्तीति वीरहा । समो नास्य विद्यते सर्वविलक्षणत्वादिति विषमः । " न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यः " इति भगवद्वचनात् । सर्वविशेषरहितत्वाच्छून्यवच्छून्यः । धृताः विगलिता आशिषः प्रार्थना अस्येति धृताशीः । "न स्वरूपान्न सामर्थ्यान्नावज्ञानादिकाद्गुणात् । चलनं विद्यतेऽस्य " इत्यचलः । वायुरूपेण चलतीति चलः ॥ ९२ ॥

**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।**

**सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ९३ ॥**

अनात्मवस्तुष्वात्माभिमानो नास्ति स्वयंवेदनाकृतेरित्यमानी । स्वमायया सर्वेषामनात्मनि स्वात्माभिमानं ददाति, भक्तानां सत्कारं मानं च ददाति, अधर्मिष्ठानां सत्कारं द्यति खंडयति, तत्त्वविदामनात्मन्यभिमानं द्यति खंडयतीति वा मानदः । सर्वैर्माननीयः पूजनीयः सर्वेश्वरत्वादिति मान्यः। चतुर्दशानां लोकानामीश्वरत्वाल्लोकस्वामी । त्रिलोकान् धारयतीति त्रिलोकधृक् । शोभना मेधा प्रज्ञाऽस्येति सुमेधाः । 'नित्यमसिच्प्रजामेधयोः ' इति समासान्तोऽसिच्प्रत्ययः । मेधेऽध्वरे जायत इति मेधजः । कृतार्थो धन्यः । सत्या अवितथा मेधाऽस्येति सत्यमेधाः । अंशैरशेषैः शेषाद्यैरशेषां धरां धारयन् धराधरः ॥ ९३ ॥

**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ॥**

**प्रग्रहो निग्रहो व्यग्रो नैकशृंगो गदाग्रजः ॥ ९४ ॥**

तेजसा भासा सर्वदा द्वादशादित्यरूपेण वर्षणात्तेजोवृषः । द्युतिमंगगतां कान्तिं धारयन् द्युतिधरः । सर्वशस्त्रभृतां श्रेष्ठः इति सर्वशस्त्रभृतां वरः । भक्तैरुपहृतं पत्रपुष्पादिकं गृह्णातीति प्रग्रहः । धावतो विषयारण्ये दुर्दान्तेन्द्रियवाजिनः तत्प्रसादेन रश्मिनेव बध्नातीति वा प्रग्रहवत्प्रग्रहः । प्रग्रहो रश्मौ वा इति पाणिनिवचनात् प्रग्रहश-

व्दस्य साधुत्वम् । स्ववशेन सर्वं निगृह्णातीति निग्रहः । विगतमग्रमंतो नाशोऽस्येति व्यग्रः । भक्तजनानामभीष्टप्रदानेषु व्यग्र इति वा व्यग्रः । चतुःश्रृंगो नैकश्रृंगः " चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश" इति श्रुतेः । निगदेन मंत्रेणाग्रे जायते इति निशब्दलोपं कृत्वा गदाग्रजः । यद्वा गदो नाम श्रीवासुदेवावरजः तस्मादग्रे जायत इति वा गदाग्रजः॥९४

**चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ॥**
**चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ९५ ॥**

चतस्रो मूर्तयो विराट्सूत्रात्मप्राकृततुरीयात्मनोऽस्येति चतुर्मूर्तिः । सिता रक्ता पीता कृष्णा इति चतस्रो मूर्तयोऽस्येति वा चतुर्मूर्तिः । चत्वारो बाहवोऽस्येति चतुर्बाहुरिति नाम वासुदेवे रूढम् । शरीरपुरुषः छंदःपुरुषः वेदपुरुषो महापुरुषः इति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा अस्येति चतुर्व्यूहः । चतुर्णामाश्रमाणां वर्णानां च यथोक्तकारिणां गतिश्चतुर्गतिः । रागद्वेषादिरहितत्वाच्चतुरं मन आत्माऽस्येति मनोबुद्धिरहंकारचित्ताख्यपुरुषार्थचतुष्टयात्मकत्वाद्वा चतुरात्मा । धर्मार्थकाममोक्षाख्यचतुष्टयं भवत्युत्पद्यते यस्मादिति चतुर्भावः । यथावद्वेत्ति चतुर्णां वेदानां अर्थमिति चतुर्वेदवित् । एकः पादोऽस्येति एकपात् "पादोऽस्य विश्वा भूतानि" इति श्रुतेः । "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति स्मृतेश्च ॥ ९५ ॥

**समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः ॥**
**दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ९६ ॥**

संसारचक्रस्य सम्यगावर्तक इति समावर्तः । सर्वत्र वर्तमानत्वान्न निवृत्त आत्मा कुतोऽपीत्यनिवृत्तात्मा, निवृत्त आत्मा मनो विषयेभ्योऽस्येति वा निवृत्तात्मा । जेतुं न शक्यत इति दुर्जयः । भयहेतुत्वादस्याज्ञां सूर्यादयो नातिक्रामन्तीति दुरतिक्रमः " भयादस्याग्निस्तपति भयात्तपति

सूर्यः। भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचमः" इति मंत्रवर्णात्। महद्भयं वज्रमुद्यतमिति च। दुर्लभया भक्त्या लभ्यत्वाद्दुर्लभः "जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" इति व्यासवचनात्। "भक्त्या लभ्यस्त्वनन्यया" इति भगवद्वचनाच्च। दुःखेन गम्यते ज्ञायत इति दुर्गमः। अंतरायप्रतिहतैर्दुःखादवाप्यत इति दुर्गः। दुःखेनावास्यते चित्ते योगिभिः समाधाविति दुरावासः। दुर्गामिनो दानवादयस्तान् हन्तीति दुरारिहा ॥ ९६ ॥

**शुभांगो लोकसारंगः सुतंतुस्तंतुवर्धनः ॥**

**इंद्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ९७ ॥**

शोभनैरंगैर्ध्येयत्वाच्छुभांगः। लोकानां सारं यत्तद्गृह्णातीति लोकसारंगः "प्रजापतिर्लोकानभ्यतपत्" इति श्रुतेः ॥ लोकसारः प्रणवः तेन प्रतिपत्तव्य इति वा लोकसारंगः पृषोदरादित्वात्साधुत्वम्। शोभनस्तंतुर्विस्तीर्णः प्रपंचोऽस्येति सुतंतुः। तमेव तंतुं वर्धयति छेदयतीति वा तंतुवर्धनः इंद्रस्य कर्मेव कर्मास्येतीन्द्रकर्मा ऐश्वर्यकर्मेत्यर्थः। महान्ति वियदादीनि भूतानि कर्माणि कार्याण्यस्येति महाकर्मा। कृतमेव न कर्तव्यं किंचदपि कर्मास्य विद्यत इति कृतकर्मा, धर्मात्मकं कर्म कृतवानिति वा। कृतः वेदात्मकः आगमोऽनेनेति कृतागमः। "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इति श्रुतेः ॥९७॥

**उद्भवः सुंदरः सुंदो रत्ननाभः सुलोचनः ॥**

**अर्को वाजसनः शृंगी जयंतः सर्वविज्जयी ॥ ९८ ॥**

उत्कृष्टं भवं जन्म स्वेच्छया भजत इत्युद्भवः। उद्गतमपगतं जन्मास्य सर्वकारणत्वादिति वा उद्भवः। विश्वातिशायिसौभाग्यशालित्वात्सुंदरः। सुष्ठु उंदतीति सुंदः "उन्दीक्लेदने" इति धातोः पचाद्यच्। आर्द्रीभावस्य वाचकः करुणाकर इत्यर्थः पृषोदरादित्वात्पररूपत्वम्। रत्नशब्देन शोभा लक्ष्यते रत्नवत्सुंदरा नाभिरस्येति रत्ननाभः। शोभनं लोचनं

नयनं ज्ञानं वास्येति सुलोचनः। ब्रह्मादिभिः पूज्यतमैरर्चनीयत्वादर्कः। वाजमन्नमार्थिनां सनोति ददातीति वाजसनः प्रलयांभसि शृंगवन्मत्स्यविशेषरूपः शृंगी। मत्वर्थीयोऽतिशायने अरीन् अतिशयेन जयति जयहेतुर्वा जयंतः। सर्वविषयज्ञानमस्येति सर्ववित्। अंतरान् रागादीन् बाह्यान् हिरण्याक्षादींश्च जेतुं शीलमस्येति जयी 'प्रजोरिनिः' इत्याधिकारे 'जिदृक्षि' इत्यादिपाणिनीयवचनादिनिप्रत्ययः। सर्वविच्चासौ जयी चेति सर्वविज्जयीत्येकं नाम ॥९८॥

**सुवर्णबिंदुरक्षोभ्यः सर्ववागीश्वरेश्वरः।**
**महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ९९ ॥**

बिन्दवोऽवयवाः सुवर्णसदृशा अस्येति सुवर्णबिन्दुः 'आप्रणखात्सर्व एव सुवर्णः' इति श्रुतेः। शोभनो वर्णोऽक्षरं बिंदुश्च यस्मिन्मंत्रात्मा वा सुवर्णबिंदुः। नाम्नामष्टमं शतं विवृतम् ॥ सत्ताऽनलोऽनेकमूर्तिस्तद्वीरहा त्रिलोकधृक् निग्रहश्चतुर्वेदवित् दुरारिहा सुंदरः ॥ रागद्वेषादिभिः शब्दादिविषयैश्च त्रिदशादिभिश्च न क्षुभ्यत इत्यक्षोभ्यः। सर्वेषां वागीश्वराणां ब्रह्मादीनामपीश्वरः सर्ववागीश्वरेश्वरः। अवगाह्य सदानंदं विश्रम्य सुखमासते योगिन इति महाह्रद इव महह्रदः। गर्तवदस्य माया महती दुरत्ययेति महागर्तः "मम माया दुरत्यया" इति भगवद्वचनात्। यद्वा गर्तशब्दो रथपर्याय इति नैरुक्तैरुक्तस्तस्मान्महारथो महागर्तः। महारथत्वमस्य प्रसिद्धं भारतादिषु। कालत्रयानवच्छिन्नस्वरूपत्वान्महाभूतः। सर्वभूतानि यस्मिन्निधीयन्ते महांश्चासौ निधिश्चेति महानिधिः ॥ ९९ ॥

**कुमुदः कुंदरः कुंदः पर्जन्यः पावनोऽनिलः ॥**
**अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १०० ॥**

कुं धरणिं भारावतारणं कुर्वन् मोदयतीति कुमुदः मुदिरत्र णिजर्थः। कुंदपुष्पतुल्यानि शुद्धानि धर्मानुबंधीनि फलानि राति ददातीति कुंदरः। कुंदपुष्पतुल्यानि शुद्धानि फलानि लात्यादत्त इति वा कुंदरः रलयोर्वृत्त्ये-

कृत्वस्मरणात् । " कुं धरां दारयामास हिरण्याक्षजिघांसया । वाराहं रूपमास्थाय" इति वा कुंदरः । कुंदोपमसुंदरः । कुंदोपमसुंदरांगत्वात्स्वच्छस्फटिकवन्निर्मलः कुंदः । कुं पृथ्वीं कश्यपायादादिति वा कुंदः । " सर्वपापविशुद्ध्यर्थं वाजिमेधेन चेष्टवान् । तस्मिन्यज्ञे महादाने दक्षिणां भृगुनंदनः । मारीचाय ददौ प्रीतः काश्यपाय वसुंधराम् इति हरिवंशे । कुं पृथ्वीं द्यति खंडयतीति वा कुंदः । कुशब्देन पृथ्वीश्वरा लक्ष्यन्ते "निःक्षत्रियां यश्च चकार मेदिनीमनेकशो बाहुवनं तथाच्छिनत् । यः कार्तवीर्यस्य स भार्गवोत्तमो ममास्तु मांगल्यविवर्धनो हरिः " इति विष्णुधर्मे । पर्जन्यवदाध्यात्मिकादितापत्रयं शमयति, सर्वान्कामानभिवर्षतीति वा पर्जन्यः । स्मृतिमात्रेण पुनातीति पावनः । इलति प्रेरणं करोतीति इलः तद्रहितत्वादनिलः। इलति स्वपिति इत्यज्ञ इलस्तद्विपरीतः नित्यप्रबुद्धस्वरूपत्वादिति वाऽनिलः । अथवा निलेर्गहनार्थात्कप्रत्ययान्तरूपं गहनोऽनिल इति वा । स्वात्मानंदामृतमश्नातीत्यमृताशः । मथितममृतं सुरान् पाययित्वा स्वयं चाश्नातीति वाऽमृताशः अमृता अनश्वराः अविनश्वरफलत्वादाशा वांछाऽस्येति वा अमृताशः । मृतं मरणं तद्रहितं वपुरस्येत्यमतवपुः । सर्वं जानातीति सर्वज्ञः । " यः सर्वज्ञः स सर्ववित् " इति श्रुतेः । " सर्वतोऽक्षिशिरोमुखम् " इति भगवद्वचनात्सर्वतोमुखः ॥ १०० ॥

**सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।**
**न्यग्रोधोदुंबरोऽश्वत्थश्चाणूरांध्रनिषूदनः ॥ १०१ ॥**

पत्रपुष्पफलादिभिर्भक्तिमात्रसमर्पितैः सुखेन लभ्यत इति सुलभः । " पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु । भक्त्यैकलभ्ये पुरुषे पुराणे मुक्तौ कथं न क्रियते प्रयत्नः"इति महाभारते। शोभनं व्रतं नियतो भुंक्ते भोजनान्निवर्तत इति वा सुव्रतः । अनन्याधानसिद्धित्वात्सिद्धः । सुरशत्रव एवास्य शत्रवस्तान् जयतीति शत्रुजित् । सुरशत्रूणां तापनः शत्रुतापनः । न्यक् अवाक् रोहति सर्वेषामुपरि वर्तत इति न्यग्रोधः ।

पृषोदरादित्वाद्धकारस्य धकारादेशः । सर्वाणि भूतानि न्यक्कृत्य निजमायां वृणोति निरुणद्धीति वा न्यग्रोधः । अंबरादुद्गतः कारणत्वेनेत्युदुंबरः पृषोदरादित्वादेवोकारादेशः । यद्वोदुंबरमन्नाद्यं तेन तदात्मना विश्वं पोषयन् उदुंबरः । 'ऊर्वा अन्नाद्यमुदुंबरम्' इति श्रुतेः । श्वोऽपि न स्थातेत्यश्वत्थः पृषोदरादित्वादेव सकारस्य तकारादेशः। "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इति श्रुतेः । "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्" इति स्मृतेश्च । चाणूरनामानमंध्रं निषूदवानिति चाणूरांध्रनिषूदनः ॥ १०१ ॥

**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ॥**
**अमूर्तिरनघोऽचिंत्यो भयकृद्भयनाशनः ॥ १०२ ॥**

सहस्राणि अनंतानि अर्चींषि यस्य स सहस्रार्चिः । "दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः" इति गीतावचनात् । सप्तजिह्वाः अस्य सन्तीति सप्तजिह्वः अग्निरूपी । "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिंगिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वाः" इति श्रुतेः । सप्त एधांसि दीप्तयोऽस्येति सप्तैधा अग्निः । "सप्त ते अग्ने समिधः सप्त जिह्वाः" इति मंत्रवर्णात् । सप्ताश्वा वाहनान्यस्येति सप्तवाहनः । सप्तनामैकोऽश्वो वाहनमस्येति सप्तवाहनः । "एको अश्वो वहति सप्तनामा" इति श्रुतेः । मूर्तिः घनरूपधारणं समर्थं चराचरलक्षणं "ताभ्योऽभितप्ताभ्यो मूर्तिरजायत" इति श्रुतेः । तद्रहित इत्यमूर्तिः । अथवा देहसंस्थानलक्षणा मूर्छितांगावयवा मूर्तिस्तद्रहित इत्यमूर्तिः । अघं दुःखं पापं च यस्य न विद्यत इत्यनघः । प्रमात्रादिसाक्षित्वेन सर्वप्रमाणागोचरत्वादचिंत्यः अयमीदृश इति विश्वप्रपंचविलक्षणत्वेन चिंतयितुमशक्यत्वाद्वाऽचिंत्यः । असन्मार्गवर्तिनां भयं करोति भक्तानां भयं कृन्ततीति व । भयकृत् । वर्णाश्रमाचारवतां भयं नाशयतीति भयनाशनः । "वर्णा-

श्रमाचारवता पुरुषेण परः पुमान्। विष्णोराराध्यते पंथा नान्यस्तत्तोषकारकः" इति पराशरवचनात्। तैराराधितत्वाद्भयं नाशयतीति भयनाशनः ॥ १०२ ॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्॥
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥ १०३ ॥

सौक्ष्म्यातिशयशालित्वादणुः। "एषोऽणुरात्मा चेतसा वेदितव्यः" इति श्रुतेः। बृहत्वाद्बृंहणत्वाच्च ब्रह्म बृहत्। "महतो महीयान्" इति श्रुतेः। अस्थूलमित्यादिना द्रव्यप्रतिषेधात् कृशः। स्थूल इत्युपचर्यते सर्वात्मत्वात्। सत्त्वरजस्तमसां सृष्टिस्थितिलयकर्मस्वधिष्ठातृत्वाद्गुणभृत्। परमार्थयो गुणाभावात् निर्गुणः। "केवलो निर्गुणश्च" इति श्रुतेः। शब्दादिगुणरहितत्वान्निरतिशयसूक्ष्मत्वान्नित्यशुद्धसर्वगतत्वादिप्रतिबंधकं कर्मजातं तर्कतोऽपि वक्तुं न शक्यमत एव महान्। अशब्दास्पर्शश्च महान् शुचिरित्यापस्तंबस्मरणात्। पृथिव्यादीनां धारकाणामपि धारकत्वान्न केनचित् ध्रियत इति अधृतः। यद्येवमयं केन धार्यत इत्याशंक्याह--स्वेनैव आत्मना धार्यत इति स्वधृतः। "स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" इति श्रुतेः। पद्मोदरदलताम्रमभिरूपतममस्यास्यमिति स्वास्यः। वेदार्थको महान् शब्दराशिः तस्य मुखान्निर्गतः पुरुषार्थोपदेशार्थमिति वा स्वास्यः। "अस्य महतो भूतस्य" इत्यादिश्रुतेः। अन्यस्य वंशिनो वंशः पाश्चात्यः पाश्चात्यो मूलपुरुषादर्वाग्वंश इति सूचितं अस्य वंश प्रपंचः स सर्ववंशात्प्रागेव न पाश्चात्य इति प्राग्वंशः। वंशप्रपंचं वर्धयन् वा वंशवर्धनः ॥ १०३ ॥

भारभृत् कथितो योगी योगीशः सर्वकामदः।
आश्रमः श्रमण क्षामः सुपर्णो वायुवाहनः ॥ १०४ ॥

अनंतादिरूपेण भुवो भारं बिभ्रद्भारभृत्। देवादिभिरयमेव परत्वेन कथितः। सर्वैर्वेदैः कथित इति वा कथितः। "सर्वे वेदा यत्पदमा-

मनन्ति । वेदैश्च सर्वैरहमेव वेद्यः" "वेदे रामायणे चैव पुराणे भारते तथा। आदौ मध्ये तथा चान्ते विष्णुः सर्वत्र गीयते " इति स्मृत्यादिवचनेभ्यः । " सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् " इत्याद्युक्तम् । किं तदध्वनो विष्णोर्व्यापनशीलस्य पारं कथितं परमं पदं विष्णुसतत्त्वमित्याकांक्षायामिंद्रियादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्यते । " इंद्रियेभ्यः परा ह्यर्थाः " इत्यारभ्य " पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः " इत्यंतेन यः कथितः सः । योगो ज्ञानं तेनैव गम्यत्वात् योगी । योगः समाधिः स हि स्वात्मनि सर्वदा समाधत्ते स्वमात्मानं तेन वा योगी। अन्ये योगिनो योगांतरायैर्हन्यन्ते तेन स्वरूपात् प्रमाद्यन्ति अयं तु तद्रहितत्वात्तेषामीश इति योगीशः । सर्वान् कामान् सदा ददातीति सर्वकामदः " फलमत उपपत्तेः " इति भगवता व्यासेनाभिहितत्वात् । आश्रमवतां सर्वेषां संसारारण्ये भ्रमतां विश्रामस्थानत्वादाश्रमः । अविवेकिनः सर्वान् संतापयतीति श्रमणः । क्षामाः क्षीणाः सर्वाः प्रजाः करोतीति क्षामः । तत्करोति तदाचष्ट इति णिचि पचाद्यचि कृते संपन्नः क्षाम इति । शोभनानि पर्णानि छंदांसि संसारतरुरूपेणास्येति सुपर्णः । " छंदांसि यस्य पर्णानि " इति भगवद्वचनात् । वायुर्वहति यद्भीत्या भूतानीति स वायुवाहनः । " भीषास्माद्वातः पवते " इति श्रुतेः ॥१०४

**धनुर्धरो धनुर्वेदो दंडो दमयिता दमः ।**
**अपराजितः सर्वसहो नियन्ताऽनियमोऽयमः ॥ १०५ ॥**

श्रीरामरूपेण धनुर्धारयामासेति धनुर्धरः । स एव दाशरथिः धनुर्वेदं वेत्तीति धनुर्वेदः । दमनं दमयतां दंडः । " दंडो दमयतामस्मि " इति भगवद्वचनात् । वैवस्वतनरेंद्रादिरूपेण प्रजा दमयतीति दमयिता । दम्येषु दंडकार्यफलं तच्च स एवेति दमः । शत्रुभिर्न पराजित इत्यपराजितः। सर्वकर्मसु समर्थ इति वा सर्वसहः । सर्वान् शत्रून् सहत इति वा सर्वसहः । सर्वान् स्वेषु स्वेषु कृत्येषु व्यवस्थापयतीति नियन्ता । न नियमो

नियतिरस्य विद्यत इत्यनियमः । सर्वनियंतुर्नियंत्रंतराभावात् नास्य विद्यते यमो मृत्युरित्ययमः । अथवा यमनियमौ योगांगे तद्रतत्वात्स एव नियमो यमः ॥ १०५ ॥

सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥ १०६ ॥

शौर्यादिकं सत्त्वमस्येति सत्त्ववान् । सत्त्वे गुणे प्राधान्येन स्थित इति सात्त्विकः । सत्सु साधुत्वात्सत्यः । सत्ये यथाभूतार्थकथने धर्मे च चोदनालक्षणे प्रकर्षेण नियत इति सत्यधर्मपरायणः । अभिप्रेयते पुरुषार्थकांक्षिभिराभिमुख्येन प्रलयेऽस्मिन्प्रैति जगदिति वाऽभिप्रायः । प्रियाणि इष्टान्यर्हतीति प्रियार्हः ॥ " यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता " इति स्मरणात् । स्वागतासनप्रशंसार्घ्यपाद्यस्तुतिनमस्कारादिभिः पूजासाधनैः पूजनीय इत्यर्हः । न केवलं प्रियार्ह एव स्तुत्यादिभिर्भजतां प्रियं करोतीति प्रियकृत् । तेषामेव प्रीतिं वर्धयतीति प्रीतिवर्धनः ॥ १०६ ॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ॥
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ १०७ ॥

विहायसं आकाशं विहाय गतिराश्रयोऽस्येति विहायसगतिः विष्णुपदमादित्यो वा । स्वयमेव द्योतत इति ज्योतिः । " नारायणः परं ज्योतिः " इति मंत्रवर्णात् । शोभना हविर्दीप्तिरिच्छा वाऽस्येति सुरुचिः । स समस्तदेवतोद्देशेन प्रवृत्तेष्वपि कर्मसु हुतं भुंक्ते भुनक्तीति वा हुतभुक् । सर्वत्र वर्तमानः त्रयाणां लोकानां विभुत्वाद्विभुः । रसानादत्त इति रविरादित्यात्मा । विविधं रोचत इति विरोचनः । सूते श्रियामिति सूर्योऽग्निर्वा । सूतेः सुवतेर्वा सूर्यशब्दो निपात्यते " राजसूयसूर्य " इति पाणिनिवचनात् । सर्वस्य जगतः प्रसविता सविता । " रसानां च तथाऽऽदानाद्रविरित्यभिधीयते । प्रजानां त्वं प्रसवनात् सवितेति निगद्यसे "

इति विष्णुधर्मोत्तरे । रविर्लोचनं चक्षुरस्येति रविलोचनः । " अग्निर्मूर्धा चक्षुषी चंद्रसूर्यौ " इति श्रुतेः ॥ १०७ ॥

**अनंतो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।**
**अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥१०८॥**

नित्यत्वात्सर्वगतत्वात् देशकालपरिच्छेदाभावादनंतः शेषरूपो वा । हुतं भुनक्तीति हुतभुक् । प्रकृतिं भोग्यां अचेतनां भुंक्त इति भोक्ता । जगत्पालयतीति वा भोक्ता । भक्तानां सुखं मोक्षलक्षणं ददाति असुखं खंडयतीति वा सुखदः । धर्मगुप्तये असकृज्जायमानत्वादनैकजः । अग्रे जायत इत्यग्रजः हिरण्यगर्भः । " हिरण्यगर्भः समवर्तताग्रे " इत्यादिश्रुतेः । आप्तसर्वकामत्वात्प्राप्तिहेत्वभावान्निर्वेदोऽस्य नास्तीति अनिर्विण्णः । साधून्सत आभिमुख्येन मृष्यते क्षमत इति सदामर्षी । तमनाधारमाधारमधिष्ठाय त्रिलोकास्तिष्ठन्तीति लोकाधिष्ठानं ब्रह्म । "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः " इति श्रुतेः । " आश्चर्यवत्पश्यति कश्चिदेनं " इति भगवद्वचनाच्च । स्वरूपशक्तिव्यापारकार्ये अद्भुतत्वाद्वा अद्भुतः ॥ १०८ ॥

**सनात्सनातनतमः कपिलः कपिरव्ययः ।**
**स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥१०९॥**

सनादिति निपातः चिरार्थवचनः कालश्च परस्यैवेति विकल्पना कापि । " परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज । व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम् " इति विष्णुपुराणे । सर्वकारणत्वाद्विरिंच्यादीनामपि सनातनानामतिशयेन सनातनत्वात्सनातनतमः । वडवानलस्य कपिलो वर्ण इव तद्रूपी कपिलः । कं जलं रश्मिभिः पिबन् कपिः सूर्यो कपिर्वराहो वा । " कपिर्वराहः श्रेष्ठश्च " इति भगवद्वचनात् । अप्यये प्रलयेऽस्मिन्नपि यन्ति जगन्तीत्यप्ययः ॥ ९०० ॥ इति नाम्नां नवमं शतं

विवृतम् ॥ भक्तानां स्वस्ति मंगलं ददातीति स्वस्तिदः । तदेव करोतीति स्वस्तिकृत् । मंगलं स्वरूपमात्मीयं परमानंदलक्षणं स्वस्ति । तदेव भुंक्त इति स्वस्तिभुक्, भक्तानां मंगलं स्वस्ति भुनक्तीति वा स्वस्तिभुक् । स्वस्तिरूपेण दक्षते वर्धते स्वस्ति विधातुं समर्थ इति वा स्वस्तिदक्षिणः । अथवा दक्षिणशब्दः आशुकारिणि वर्तते शीघ्रं स्वस्ति दातुं अयमेव समर्थ इति । "स्मरणादेव कृष्णस्य सिध्यन्ति सर्वसिद्धयः" इति स्मृतेः । "स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् । स्मरणादेव कृष्णस्य पापसंघातपंजरम् । शतधा भेदमायाति गिरिर्वज्रहतो यथा" इत्यादिवचनेभ्यः ॥ १०९ ॥

**अरौद्रः कुंडली चक्री विक्रम्यूर्जितशासनः ।**
**शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ११० ॥**

कर्म रौद्रं रागश्च रौद्रः पापं च रौद्रं एतत्रयं रौद्रमस्य नास्ति अवाप्तसर्वकामत्वेन रागद्वेषादेरभावादरौद्रः । शेषरूपभाक् कुंडली, यद्वा सांख्ययोगात्मके कुंडले मकराकारे अस्य स्त इति कुंडली । सहस्रांशुमंडलोपमकुंडलधारणाद्वा कुंडली । समस्तलोकरक्षार्थं मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रं धत्त इति चक्री । "चलत्स्वरूपमत्यंतजवेनांतरितानिलम् । चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम्" इति विष्णुपुराणे । विक्रमः पादविक्षेपः शौर्यं वा द्वयं चाशेषरूपेभ्यो विलक्षणमस्येति विक्रमी । श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्येति ऊर्जितशासनः । "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोपि न वैष्णवः" इति भगवद्वचनात् । शब्दप्रवृत्तिहेतूनां जात्यादीनामसंभवात् शब्देन वक्तुमशक्यत्वाच्छब्दातिगः । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "न शब्दगोचरैर्यस्य योगिध्येयं परं पदम्" इत्यादिश्रुतिस्मृतिभ्यः । सर्वे वेदाः तात्पर्येण तमेव वदन्तीति शब्दसहः । "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिभ्यः । तापत्रया-

भितप्तानां विश्रमस्थानत्वाच्छिशिरः । संसारिणामात्मा शर्वरीवच्छर्वरी ज्ञानिनां पुनः संसारः शर्वरी तामुभयेषां करोतीति शर्वरीकरः । " या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः " इति भगवद्वचनात् ॥ ११० ॥

**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।**
**विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ १११ ॥**

क्रौर्यं नाम मनोधर्मः कोपजः आंतरः संतापः साभिनिवेशः अवाप्तकामत्वात्कामाभावादेव क्रौर्याभावः तस्मात्क्रौर्यमस्य नास्तीत्यक्रूरः । कर्मणा मनसा वाचा वपुषा च शोभनत्वात्पेशलः । प्रवृद्धशक्तिः शीघ्रकारी समर्थ इति दक्षविशेषणत्रयं चैतत् परमेश्वरे अस्मिन्नियतमिति दक्षः । दक्षिणशब्दस्यापि दक्ष एवार्थः पुनरुक्तिदोषो नास्ति, शब्दभेदात् । अथवा दक्षते गच्छति हिनस्तीति वा दक्षिणः । ' दक्ष गतिहिंसनयोः ' इति धातुपाठात् । क्षमावतां योगिनां पृथिव्यादीनां च भारधारकानां श्रेष्ठ इति क्षमिणांवरः । " क्षमया पृथिवीसमः " इति वाल्मीकिवचनात् । ब्रह्मांडमखिलं वहन् पृथिवीव भारेण नार्दित इति पृथिव्या अपि वरो वा क्षमिणांवरः । क्षमिणः शक्ताः अयं तु सर्वशक्तिमत्त्वात्सकलाः क्रियाः कर्तुं क्षम इति क्षमिणांवरः । निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरमस्यास्ति नेतरेषामिति विद्वत्तमः । वीतं विगतं भयं सांसारिकं संसारलक्षणमस्येति वीतभयः सर्वेश्वरत्वान्नित्यमुक्तत्वाच्च । पुण्यं पुण्यकरं श्रवणं कीर्तनं चास्येति पुण्यश्रवणकीर्तनः । " य इदं शृणुयान्नित्यं " इति श्रवणफलवचनात् ॥ १११ ॥

**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।**
**वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ११२ ॥**

संसारसागरादुत्तारयतीत्युत्तारणः । दुष्कृतिं पापसंज्ञितां हन्तीति दुष्कृतिहा, ये पापकारिणस्तान्हन्तीति वा दुष्कृतिहा । स्मरणादि कुर्वतां

सर्वेषां पुण्यं करोतीति पुण्यरूपत्वात्पुण्यः, सर्वेषां श्रुतिस्मृतिलक्षणया वाचा पुण्यमाचष्ट इति वा पुण्यः । भाविनोऽर्थस्य सूचकान् दुःस्वप्नान् नाशयतीति ध्यातः स्तुतः कीर्तितश्चेति दुःस्वप्ननाशनः । विविधाः संसारिणां गतीर्मुक्तिप्रदानेन हन्तीति वीरहा । सत्त्वगुणमधिष्ठाय जगत्त्रयं रक्षयन् रक्षणः नंद्यादित्वात्कर्तरि ल्युट् । सन्मार्गवर्तिनः सन्तः तद्रूपेण विद्याविनयवृद्धये स एव वर्तत इति सन्तः । सर्वाः प्रजाः प्राणरूपेण जीवयन् जीवनः । परितः सर्वतो विश्वं व्याप्य व्यवस्थित इति पर्यवस्थितः॥ ११२॥

**अनंतरूपोऽनंतश्रीर्जितमन्युर्भयापहः ।**
**चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ ११३ ॥**

अनंतादिरूपेण वा विश्वप्रपंचरूपेण वाऽवस्थितश्चेत्यनंतरूपः । अनंता अपरिमिता श्रीः परा शक्तिरस्येति अनंतश्रीः । " परास्य शक्तिर्विविधैव श्रूयते " इति श्रुतेः । मन्युः क्रोधो जितो येन स जितमन्युः । भयं संसारजं पुंसामपघ्नन् भयापहः । न्यायसमवेतश्चतुरश्चतुरस्रः, पुंसां कर्मानुरूपं फलं प्रयच्छतीति । आत्मा स्वरूपं चित्तं वा गभीरं परिच्छेत्तुमशक्यमस्येति गभीरात्मा । विविधानि फलानि अधिकारिभ्यो विशेषेण दिशतीति विदिशः । विविधामाज्ञां शक्रादीनां कुर्वन् व्यादिशः । समस्तानां कर्मिणां कर्मणां फलानि दिशन्वेदात्मनेति दिशः ॥ ११३ ॥

**अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिरांगदः ।**
**जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४ ॥**

आदिः कारणमस्य न विद्यत इत्यनादिः सर्वकारणत्वात् । भूतानामाधारो भूर्भुवः सर्वभूतानामाश्रयत्वेन प्रसिद्धाया भूम्या भुवोऽपि भूरिति भूर्भुवः । अथवा न केवलमसौ भूः भुवो लक्ष्मीः शोभा चेति भूर्भुवोलक्ष्मीः । अथवा भूर्भूलोकः भुवो भुवर्लोकः तयोः लक्ष्मीरात्मविद्या । " आत्मविद्या च देवि त्वम् " इति श्रीस्तुतौ । भूम्यंतरिक्षयोः शोभेति वा भूर्भुवोलक्ष्मीः । शोभना विविधा ईरा गतयो यस्य स सुवीरः । शोभनं विविधं ईरणमस्येति वा सुवीरः । रुचिरे कल्याणे अंगदे अस्येति रुचिरांगदः । जंतून् जनयन् जननः, ल्युटो बहुलग्रहणात्कर्तरि ल्युट् । जनस्य

जनिमतो जन्म उद्भवस्तस्यादिर्मूलकारणमिति जनजन्मादिः । भयहेतुत्वा-द्भीमः । 'भीमादयोपादाने' इति पाणिनिवचनात् । "महद्भयं वज्रमुद्यतं" इति मंत्रवर्णात् । असुरादीनां भयहेतुः पराक्रमोऽस्यावतारेष्विति भीमपराक्रमः॥

**आधारनिलयोऽधाता पुष्पहासः प्रजागरः ।**
**ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११५ ॥**

पृथिव्यादीनां पंचभूतानामाधाराणामाधारत्वादाधारनिलयः । स्वात्मना धृतस्यान्यो धाता नास्तीत्यधाता 'नद्यृतश्चेति समासान्तविधेरनित्य' इति कप्प्रत्ययाभावः । संहारसमये सर्वप्रजा धारयति धयति पिबतीति वा धाता 'धेट्पाने' इति धातुः । मुकुलात्मना स्थितानां पुष्पाणां हासवत् प्रपंचरूपेण विकासोऽस्येति पुष्पहासः । नित्यप्रबुद्धरूपत्वात्प्रकर्षेण जागर्तीति प्रजागरः । सर्वेषामुपरि तिष्ठन् ऊर्ध्वगः । सतां कर्माणि सत्पथेनाचरत्येष इति सत्पथाचारः । मृतान् परिक्षित्प्रभृतीन् जीवयन्निति प्राणदः । प्रणवो नाम परमात्मनो वाचक ओंकारः तदभेदोपचारेणायं प्रणवः। पणति व्यवहारार्थस्तं कुर्वन् इति पणः 'पणव्यवहारे' इति धातुः ।"सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन्यदास्ते' इति श्रुतेः। पुण्यानि कर्माणि फलैः संगृह्याधिकारिभ्यः प्रयच्छन् तल्लक्षणयेति वा पणः॥

**प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ।**
**तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११६ ॥**

प्रमितिः संवित्स्वयंप्रमा प्रमाणं "प्रज्ञानं ब्रह्म" इति श्रुतेः । "ज्ञानस्वरूपमत्यंतं निर्मल परमार्थतः । तदेवार्थस्वरूपेण भ्रांतिदर्शनतः स्थितम्" इति विष्णुपुराणे । प्राणा इंद्रियाणि यत्र जीवे निलीयन्ते तत्परतंत्रत्वाद्देहस्य धारकाः प्राणापानादयो वा तस्मिन् प्रविलीयन्ते, प्राणितीति प्राणो जीवः परे पुंसि निलीयत इति वा प्राणान् जीवांश्चात्मनि संहरंस्तेषामाश्रय इति वा प्राणनिलयः । पोषयन्नन्नरूपेण प्राणानिति प्राणभृत् । प्राणिनो जीवयन् प्राणाख्यैः पवनैरिति प्राणजीवनः । "न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" इति मंत्रवर्णात् । तथ्यममृतं सत्यं परमार्थं सतत्त्वमित्येते एकार्थवाचिनः परमार्थसतो ब्रह्मणो वाचकाः शब्दाः इति तत्त्वम् । तत्त्वं स्वरूपं यथावद्वेत्तीति तत्त्ववित् । एकश्चासावात्मा चेत्येकात्मा । " आत्मा

वा इदमेक एवाग्र आसीत् " इति श्रुतेः । " यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति गीयते " इति स्मृतेश्च । जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्भावविकारास्तानतीत्य गच्छतीति जन्ममृत्युजरातिगः । " न जायते म्रियते वा विपश्चित् " इति मंत्रवर्णात् ॥ ११६ ॥

**भूर्भुवःस्वस्तरुस्तारः सपिता प्रपितामहः ।**
**यज्ञो यज्ञपतिर्यज्वा यज्ञांगो यज्ञवाहनः ॥ ११७ ॥**

भूर्भुवःस्वःसमाख्यानि त्रीणि व्याहृतिरूपाणि त्रयीसाराणि बह्वृचा आहुः तैर्होमादिना जगत्त्रयं तरते प्लवते चेति भूर्भुवःस्वस्तरुः । " अग्नौ न्यस्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " इति मनुवचनात् । अथवा भूर्भुवःस्वस्तरुसमाख्यलोकत्रयसंसारवृक्षो भूर्भुवःस्वस्तरुः भूर्भुवस्वःसमाख्यं लोकत्रयं वृक्षवद्व्याप्य तिष्ठतीति वा भूर्भुवःस्वःस्तरुः । संसारसागरात्तारयंस्तारः । प्रणवो वा । सर्वस्य लोकस्य जनक इति सपिता । पितामहस्य ब्रह्मणोऽपि पितेति प्रपितामहः । यज्ञात्मना यज्ञः । यज्ञानां पाता स्वामी वा यज्ञपतिः । " अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च " इति भगवद्वचनात् । यजमानात्मना तिष्ठन् यज्वा । यज्ञा अंगान्यस्येति यज्ञांगो वराहमूर्तिः । " वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः अग्निजिह्वो दर्भरोमा ब्रह्म शीर्षो महातपाः । अहोरात्रेक्षणो दिव्यो वेदान्तश्रुतिभूषणः । आज्यनासः स्रुवतुंडः सामघोषस्वनो महान् । धर्मसत्यमयः श्रीमान् क्रमविक्रमसत्क्रियः । प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः । उद्गात्रंत्रो होमालिंगः फलबीजमहौषधिः । वाय्वंतरात्मा मंत्रस्फिक् विकृतः सोमशोणितः । वेदीस्कंधो हविर्गन्धो हव्यकव्यातिवेगवान् । प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरर्चितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । उपाकर्मेष्टिरुचकः प्रवर्ग्यावर्तभूषणः । नानाछंदोगतिपथो गुह्योपनिषदासनः । छायापत्नीसहायो वै मेरुशृंग इवोच्छ्रितः" इति हरिवंशे । फलहेतुभूतान्यज्ञान् वाहयतीति यज्ञवाहनः

**यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥**
**यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८ ॥**

यज्ञं बिभर्तीति पाति वा यज्ञभृत् ।जगदादौ तदंते च यज्ञं करोतीति कृंतति वा यज्ञकृत्। यज्ञानां तत्समाराधनात्मनां प्रधानं तत्समवायानां शेषीति यज्ञी। यज्ञं भुंक्ते भुनक्तीति वा यज्ञभुक्। यज्ञः साधनं साधनः। तत्प्राप्ताविति यज्ञ यज्ञस्यान्ते फलप्राप्तिं कुर्वन् यज्ञान्तकृत्। वैष्णव्यृक्शंसनेन पूर्णाहुत्या पूर्णं कृत्वा यज्ञसमाप्तिं करोतीति वा यज्ञान्तकृत्। यज्ञानां गुह्यं ज्ञानयज्ञः इष्टफलाभिसंधिरहितो वा यज्ञः तदभेदोपचारात् ब्रह्म यज्ञगुह्यम्। अद्यते अत्ति च भूतानीत्यन्नम्। अन्नमत्तीत्यन्नादः। सर्वं जगदन्नादिरूपेणाग्नीषोमात्मकमेवेति दर्शयितुमेवकारः। चशब्दः सर्वात्मनामेकस्मिन्परस्मिन्पुंसि समुच्चित्य वृत्तिं दर्शयितुम् ॥ ११८ ॥

**आत्मयोनिः स्वयंजातो वैखानः सामगायनः।**
**देवकीनंदनः स्रष्टा क्षितीशः पापनाशनः ॥ ११९ ॥**

आत्मैव योनिरुपादानकारणं नान्यादित्यात्मयोनिः निमित्तकारणमपि स एवेति दर्शयितुं स्वयंजात इति, प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधादित्यत्र स्थापितमुभयकारणत्वं हरेः। विशेषेण खननाद्वैखानः, धरणीं विशेषेण खनित्वा पातालवासिनं हिरण्याक्षं वाराहं रूपमास्थाय जघानेति पुराणे प्रसिद्धम्। सामानि गायतीति सामगायनः। देवक्याः सुतो देवकीनंदनः। "ज्योतींषि शुक्राणि च यानि लोके त्रयो लोका लोकपालास्त्रयी च। त्रयोऽग्नयश्चाहुतयश्च पंच सर्वे देवा देवकीपुत्र एव" इति महाभारते। स्रष्टा सर्वलोकस्य। क्षितेर्भूमेरीशः क्षितीशः दशरथात्मजः। कीर्तितः पूजितो ध्यातः स्मृतः पापराशिं नाशयन् पापनाशनः। "पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति। प्राणायामशतेनैव तत्पापं नश्यते नृणाम्। प्राणायामसहस्रेण यत्पापं नश्यते नृणाम्। क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति" इति वृद्धशातातपवचनम् ॥ ११९ ॥

**शंखभृन्नंदकी चक्री शार्ङ्गधन्वा गदाधरः। रथांगपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ सर्वप्रहरणायुध ओं नम इति ॥ १२० ॥**

पांचजन्याख्यं भूताद्यहंकारात्मकं शंखं बिभ्रत् शंखभृत्। विद्यामयो नंदकाख्योऽसिरस्येति नंदकी। मनस्तत्त्वात्मकं सुदर्शनाख्यं चक्रमस्यास्तीति चक्री। संसारचक्रमस्याज्ञया परिवर्तत इति वा चक्री। इंद्रि-

याद्यहंकारात्मकं शार्ङ्गं नाम धनुरस्यास्तीति शार्ङ्गधन्वा । 'धनुषश्च' इत्यनङ् समासान्तः प्रत्ययः । बुद्धितत्त्वात्मिकां कौमोदकीं नाम गदां वहन् गदाधरः रथांगं चक्रमस्य पाणौ स्थितं स रथांगपाणिः । अत एवाशक्यक्षोभण इत्यक्षोभ्यः । केवलं एतावन्त्येवायुधान्यस्येति न नियम्यते अपि तु सर्वाण्येव प्रहरणायुधान्यस्येति सर्वप्रहरणायुधः । आयुधत्वेनाप्रसिद्धान्यपि करजादीन्यस्यायुधानि भवन्तीत्यन्ते सर्वप्रहरणायुध इति वचनं सत्यसंकल्पत्वेन सर्वेश्वरत्वं दर्शयितुम् । 'एष सर्वेश्वर' इति श्रुतेः । द्विर्वचनं समाप्तिं द्योतयति । ॐनम इति ओंकारश्चांते "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन मांगलिकावुभौ " इति वचनात् । अंते नम इत्युक्त्वा परिचरणं कृतवानिति "भूयिष्ठां ते नम उक्तिं विधेम" इति श्रुतेः । "धन्यं तदेव लग्नं तन्नक्षत्रं तदेव पुण्यमहः । करणस्य च सा सिद्धिर्यत्र हरिः प्राङ्नमस्क्रियते इति च प्रागित्युपलक्षणम् । अंतेऽपि नमस्कारस्य शिष्टाचरणात् । नमस्कारफलं प्रागेव दर्शितं "एकोपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय " " अतसीपुष्पसंकाशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविंदं न तेषां विद्यते भयम् । लोकत्रयाधिपतिमप्रतिमप्रभावमीषत्प्रणम्य शिरसा प्रभविष्णुमीशं । जन्मान्तरप्रलयकल्पसहस्रजातमाशु प्रशान्तिमुपयाति नरस्य पापम् ॥

**इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।**
**नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १२१ ॥**

इति नाम्नां दशमशतं विवृतम् ॥ इतीदमित्येतेन नामसहस्रमन्यूनातिरिक्तमिति दर्शयति । दिव्यानामप्राकृतानां नाम्नां सहस्रं प्रकीर्तितमिति वदता प्रकारान्तरेणापि संख्योपपत्तिर्दर्शिता ॥ १२१ ॥

**य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥**
**नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ १२२ ॥**

प्रक्रमे 'किं जपन्मुच्यते जंतुः' इति जपशब्दोपादानात् कीर्तयेदित्यनेनापि त्रिविधजपो लक्ष्यते उच्चोपांशुमानसलक्षणास्त्रिविधः । य इदं शृणुयादित्यादिः स्पष्टार्थः । परलोकप्राप्तस्यापि नहुषादावशुभप्राप्त्यभावं सुचायितुममुत्रेत्युक्तम् ॥

**वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ॥**
**वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १२३ ॥**

वेदान्तानामर्थं ब्रह्म गच्छत्यवगच्छतीति वेदान्तगः । किं जपन्मुच्यते जन्तुर्जन्मसंसारबंधनादिति वचनात् जपकर्मणा साक्षान्मुक्तिशंकायां कर्मणां साक्षान्मोक्षहेतुत्वं नास्ति ज्ञानेनैव मोक्ष इति दर्शयितुं वेदान्तगो ब्राह्मणः स्यादित्युक्तम् । कर्मणां त्वंतःकरणशुद्धिद्वारेण मोक्षहेतुत्वम् । " कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते । नित्यं ज्ञानं समासाद्य नरो बंधात्प्रमुच्यते । धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥ योगिनः कर्म कुर्वन्ति संगं त्यक्त्वाऽऽत्मशुद्धये कर्मणा बध्यते जंतुर्विद्ययैव विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्" इति मानवं वचनम् । "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते " इति । " ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यत्यात्मानमात्मनि " इत्यादि स्मृतिभ्यश्च । " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " " येन केनचिद्यजतापि यज्ञेनापि दर्विहोमेनानुपहतमना एव भवति " इत्यादिस्मृतिभ्यः ज्ञानादेव मोक्षः । "ब्रह्मविदाप्नोति परं' तरति शोकमात्मवित् " ब्रह्मविद्ब्रह्मैव भवति " "ब्रह्मैव सन्ब्रह्माप्येति" " तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति " " विद्वान्न बिभेति कुतश्चन" "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" " यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति " " न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः " " वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" इत्यादिश्रुतिभ्यः।शूद्रः सुखमवाप्नुयादिति श्रवणेनैव न तु जपयज्ञेन। "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इति श्रुतेः । 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' इत्यादिना महाभारतादिश्रवणमनुज्ञायते।'सुगतिमियाच्छ्रवणाच्च शूद्रयोनिरिति हरिवंशे।यच्च शूद्रः शृणुयात्स सुखमवाप्नुयादिति व्यवहितेन संबंधः त्रैवर्णिकान्कीर्तयेदित्यंतेन

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्।
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाम् ॥ १२४ ॥

चक्षुरादीनामात्मयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वनुरूपतः प्रवृत्तिः कामः। प्रजायत इति प्रजा संततिः ॥ १२४ ॥

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः। सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ २५ ॥ यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च। अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥१२६॥ न भयं क्वचिदाप्नोति वीर्यं तेजश्च विंदति। भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२७ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बंधनात्। भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १२८ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्। स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥ वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः। सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१३०॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित्। जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १३१ ॥

भक्तिमानित्यादिना भक्तिमतः शुचेः सततमुद्युक्तस्यैकाग्रचित्तस्य श्रद्धालोर्विशिष्टफलाधिकारिणः फलविशेषं दर्शयति ॥ १२५–१३१ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।
युज्येतात्मसुखक्षान्तिश्रीधृतिःस्मृतिकीर्तिभिः ॥ १३२ ॥

श्रद्धा आस्तिक्यबुद्धिः। भक्तिर्भजनतात्पर्यम्। आत्मनः सुखं आत्मसुखं तेन च क्षान्त्यादिभिश्च युज्यते ॥ १३२ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥

न च क्रोधो न मात्सर्यं न लोभो नाशुभा मतिरिति अकारानुबंधरहितेन नकारेण समस्तपदत्रयं, क्रोधादयो न भवन्ति मात्सर्यं च न भवतीत्यर्थः ॥

द्यौः सचंद्रार्कनक्षत्रा खं दिशो भूर्महोदधिः। वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१३४॥ ससुरासुरगंधर्वं सयक्षोरगराक्षसम्। जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१३५॥ इंद्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥

द्यौः सचंद्रार्कनक्षत्रेत्यादिना स्तुत्यस्य वासुदेवस्य माहात्म्यकथनेनोक्तानां फलानां प्रातिवचनं यथार्थकथनं नार्थवाद इति दर्शयति ॥

**सर्वागमानामाचारः प्रथमं परिकल्प्यते । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥१३७॥ ऋषयः पितरो देवा महाभूतानि धातवः। जंगमाजंगमं चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥ योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च । वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १३९ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रींल्लोकान्व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः ॥ १४० ॥**

'सर्वागमानामाचारः प्रथमं परिकल्प्यते । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः'इत्यनेनावान्तरवाक्येन सर्वधर्माणामाचरवत एवाधिकार इति दर्शयति

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।**
**पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥**
**विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२ ॥**

**॥ इति विष्णुनामसहस्रस्तोत्रम् ॥**

इमं स्तवमित्यादि नामसहस्रशाखाज्ञेन सर्वज्ञेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्वैरर्थिभिः सादरं पठितव्यं सर्वफलसिद्धय इति दर्शयति विश्वेश्वरमित्यादिना । विश्वेश्वरोपासनादेव स्तोतारस्ते धन्याः कृतार्थाः कृतकृत्या इति । " आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बंधनात्" इति व्यासवचनम् । प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्ण स्यादिति श्रुतिः सहस्रनामसंबंधिन्यस्त्वेषा सर्वसुखावहा । श्रुतिस्मृतिन्यायमूला रचिता हरिपादयोः । इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशंकराचार्यविरचितं विष्णोर्नामसहस्रभाष्यं समाप्तम् ॥ ११५

इत्येवं श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवद्विरचितग्रंथसंग्रहस्य पूर्वमुद्रितलिखितपुस्तकावेक्षणयुतं संशोधनं आरंभादासमाप्ति मुद्रणकार्यपरीक्षणं प्रकाशनं च दशाब्दमितेन कालेन भागवतोपनामधारिणं रघुनाथसूनुं हरिशर्माणं महाराष्ट्रदेशस्य पश्चिमविभागांतर्गते पुण्यपत्तननाम्नि नगरे वसन्तं चित्तपावनब्राह्मणं गार्ग्यगोत्रोत्पन्नं निमित्तीकृत्य श्रीमदाचार्याणामाशिषो वेदान्तवेद्यपरब्रह्मणः मया वा संपूर्णतामनयत् ।

---

